मुदं हर्षं विकाशयन् प्रकाशयन् सन् रविर्भास्कर इव लोके जगति [लोकस्तु भुवने जन इत्यमरः] स्वोत्कर्षं निजाधिक्यं स्वामित्वमित्यर्थः आततान विस्तारयामास । अत्र रूपकोपमयोर्भेदेन स्थितित्वात् संसृष्टिरलङ्कारः । अस्मिन्पद्ये महर्षणीवृत्तम् म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयमिति लक्षणात् ॥

भा०--उस राजा विलियम् ने अनुपम अपने बाहुपराक्रम से चन्द्रविकाशिकमलरूप शत्रुओं से रहित उस राज्य को पाकर सूर्य्यविकाशिकमलरूप स्वजनों के हर्ष को प्रकाशित कर सूर्य्य के समान जगत् में अपना आधिक्य प्रभुत्व विस्तारित किया ॥ ५४ ॥

इति उर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये ऐंग्लिशजनानां

नन्दनाभिगमनं नाम

प्रथमः सर्गः ॥

---

# द्वितीयः सर्गः ॥

अथो विजेता विलियम् महीपतिः
स्वशासनोपस्थितसर्वमानवः ।
प्रतीपगान्मत्सरितान् विगर्हितान्
पराक्रमैस्तांश्च वशीचकार सः ॥ १ ॥

टी०—अथो विजेतेति । अथोऽनन्तरं विजेता विजयी स्वशासने स्वाज्ञायामुपस्थिताः सर्वे मानवा यस्य तादृशः स विलियम् महीपतिर्भूमीशः प्रतीपगान् विपरीतभावयुक्तान् मत्सरः संजातो येषां तान् । तदस्य संजातं तारकादिभ्य इतच् इतीतच्प्रत्ययः । विगर्हितान् निन्दितान् तान् पुरुषान् पराक्रमैः स्वपौरुषैर्वशीचकार स्वाधीनयुक्तांश्चकार । अस्मिन् सर्गे वंशस्थंवृत्तम् जतौ तु वंशस्थमुदीरितं जराविति लक्षणात् ॥

भा०—अनन्तर विजयकरनेवाले अपनी आज्ञा में सब को चलानेवाले उस विलियम् राजा ने विरुद्धाचरणविशिष्ट मात्सर्य्ययुक्त निन्दित पुरुषों को पराक्रम से अपने वश किया ॥ १ ॥

अथैंग्लिशान् राजविरोधितां गतान्
विधाय सर्वानपि शान्तचेतसः ।
तदीयभूमिः किल नौर्मनीयका-
ननायि भागोपहिता महीभुजा ॥ २ ॥

टी०—अथैंग्लिशानिति । अथानन्तरं किलेति निश्चयेन महीभुजा राज्ञा राजविरोधिनो भावस्तां गतान् प्राप्तान् सर्वानप्यैंग्लिशान् शान्तं चेतो मनो

1. William, the Conqueror. 2. Normans.

येषां तथाविधान् विधाय कृत्वा भागोपहिता भागेषु उपहिता प्राप्ता विभाजिता सती तेषामियं तदीया "त्यदादीनि च वृद्धसंज्ञानि स्युः-वृद्धाच्छइति छःप्रत्ययः छस्येय्" साचासौभूमिर्मही नौर्मनीयकान् नौर्मन देशोत्पन्नान्पुरुषान् अनायि प्रापि कर्म्मणि लुङ् ॥

भा०—अनन्तर राजा ने राजविरुद्ध ऐंग्लिशों को शान्त कर उनकी भूमि बांट कर नौर्मनीय लोगों को देदी ॥ २ ॥

यदैंग्लिशास्ते खलुनौर्मनीयकाः
परस्परेभ्यो भयमापुरन्वहम् ।
तदैव सर्वे धरणीपतेः स्वयं
हितानुबन्धैकरसा इवाभवन् ॥ ३ ॥

टी०—यदैंग्लिशा इति । खल्विति निश्चयेन यदा यस्मिन्समये ऐंग्लिशा नौर्मनीयकाःपुरुषा अन्वहं प्रतिदिनं परस्परेभ्योऽन्योन्येभ्यो भयं भीतिमापुः तदैव सर्वे ऐंग्लिशा नौर्मनीयकाश्च धरणीपतेर्भूपतेः स्वयं यदृच्छयेत्यर्थः हितस्यानुबन्धस्तस्मिन्नेको रसो येषां यद्वा हितानुबन्ध एव एको रसो येषामिति "कर्म्मधारयगर्भो बहुव्रीहिः" हितेच्छव इवाभवन् । अत्रोपमालङ्कारः साधर्म्यमुपमाभेद इति लक्षणात् ॥

भा०—यह निश्चय है कि जब ऐंग्लिश और नौर्मनीयक लोग प्रतिदिन अन्योन्य भययुक्त हुए, उस वक्त वे दोनों तर्फ़ के लोग राजा के हितैषी की तरह बर्ताव करने लगे ॥ ३ ॥

ततो महीशः प्रतिमण्डलं तदा
सुगूढविद्वेषरसैषिणां भिया ।
धराविभागं त्वधिकं च नाकरोत्
किमस्त्यलङ्घ्यं हि दुरात्मनां भुवि ॥ ४ ॥

टी०—ततोमहीति । ततोऽनन्तरं सुगूढो यो विद्वेषरसस्तमिच्छन्ति

ये तेषां पुरुषाणां भिया भयेन मण्डलं मण्डलं प्रति प्रतिमण्डल
ग्यतावीप्सेति प्रतिशब्दस्य यथार्थत्वात् तस्य वीप्सायां कर्म
यत्वात्तद्योगे द्वितीया अव्ययं विभक्तिसमीपेत्यादि सूत्रेणाव्यय
नाव्ययीभावादतोऽमृत्वपञ्चम्याः । इति सप्तम्यां अम्भावः ”
मण्डले इत्यर्थः । धराविभागं अधिकं बृहन्मण्डलमित्यर्थः नाकरो
दधात् दुष्टानां प्राबल्याद्राज्यविच्युतिर्नस्यादिति हेतोः । हीति
भुवि पृथिव्यां दुरात्मनां दुष्टानामलभ्यं किमस्ति न किमपीति
अत्रार्थान्तरन्यासेन सामान्येन विशेषस्य समर्थनं साधर्म्येण, सा
विशेषो वा तदन्येन समर्थ्यते यत्तु सोऽर्थान्तरन्यासः साधर्म्ये
वेति लक्षणात् ॥

भा०—अनन्तर राजा ने विरोधियों के डर से प्रत्येक जिला
भूमिभाग न रक्खा, क्योंकि दुनिया में बुरे आदमियों का
कुछ नहीं ॥ ४ ॥

अतो महीभृन्निगमेषु तत्क्षणं
स्वकीयसौधान् रचयाञ्चकार सः ।
समग्रदेशे प्रभुशासनादृते
न कोऽपि कश्चित्प्रतितर्दकोऽभवत् ॥ ५

टी०—अतोमहीति । अतोविद्वेषिभयात् स महीभृत् क्षितीश
राज्यप्राप्त्यनन्तरमेव तत्क्षणं “ निर्व्यापारस्थितौ कालविशेषे
क्षण इत्यमरः ” निगमेषु ग्रामविशेषेषु स्वकीयसौधान्
रचयाञ्चकार । कोऽपि पुरुषः समग्रदेशे प्रभोः राज्ञः शासनाद्
शासनं विनेत्यर्थः “ अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदा
एतैर्योगे पञ्चमीस्यात् ” । कश्चित्पुरुषं प्रतितर्दको हननक्षमो
कर्ता वा नाभवत् । तृदिर्हिंसानादरयोरितिधातोर्ण्वुलिरूप
नोर्भविष्यदाधमर्ण्ययोरिति षष्ठ्याः प्रतिषेधः ॥

भा०—इसी विद्वेषि भय कारण से उस राजा ने तमाम बड़े

में अपने महल बनवाये और कोई पुरुष भी सारे देश में राजा की आज्ञा बगैर किसी को दुःख देने को समर्थ न था ॥ ५ ॥

विवादनीत्यार्जितभूमिखण्डकं
विभज्य सर्व्वानपि सैनिकानसौ।
अयच्छदाविष्कृतपौरुषो जनो
ग्रहीतुकामोऽल्पवसूनिको भवेत् ॥ ६ ॥

टी०—विवादेति। असौ महीपतिः विवादे या नीतिस्तयाऽर्जितं भूमिखण्डकं भूभागं विभज्य सर्वानपि सैनिकान् अयच्छत् दत्तवान् आविष्कृतं प्रकटीकृतं पौरुषं येन तथाविधः को जनोऽल्पवसूनि ग्रहीतुं कामो यस्य स ग्रहीतुकामः। "तुम्काममनसोरपीति तुमोमकारस्य लोपः। भवेत् जायेत। किं वृत्ते लिङ्लृटौ गर्हायामित्यत्र लिङ्"। अत्रार्थान्तरन्यासालङ्कारः ॥

भा०—राजा ने विवादनीति से ग्रहण की हुई भूमि सैनिकलोगों को बाँट दी। पुरुषार्थ करनेवाला कौन आदमी अल्प धन को ग्रहण करना चाहे ॥ ६ ॥

महीपतेः शासनकार्य्यपुस्तका-
त्समग्रवप्राधिपनामवेदनम्।
तथा महीपानुचरत्वमक्रमं
तदेव सर्व्वं प्रममे तदाऽखिलैः ॥ ७ ॥

टी०—महीपतेरिति। तदा शासनसमयेऽखिलैः पुरुषैर्महीपते राज्ञः शासनकार्य्यस्य यत् पुस्तकं तस्मात् समग्रा ये वप्राधिपाः कृषकास्तेषां नाम्नां वेदनं विज्ञानं तथाऽक्रमं क्रमरहितं महीपस्यानुचराः सेवकास्तेषां भावस्तत्त्वं तत्सर्वमेव प्रममे प्रमाणयुक्तं बभूव। कर्म्मणि लिट् ॥

भा०—उस समय सबलोगों से राजा की शासन पुस्तक से सब किसान ज़मींदारों के नाम राजाकी नौकरीका लेखा विदित किया जाता था ॥ ७ ॥

1. Domesday book.

ततो न्युफौरेष्टविशिष्टसञ्ज्ञकं
क्षितीश्वरः संवसथं विनाश्य च ।
मृगव्यकार्यार्थमरण्यमातनोद्
व्रजन्त्यवर्त्मानि रजोनिमीलिताः ॥ ८ ॥

टी०—तत इति। ततोऽनन्तरं क्षितीश्वरो राजा न्युफौरेष्टेति विशिष्टा संज्ञाऽभिधा यस्य तथाविधं संवसथं ग्रामं [ समौ संवसथग्रामावित्यमरः ] विनाश्य मृगव्यं मृगया तदेव यत्कार्यं तदर्थमरण्यं काननमातनोद् विस्तारितवान् । रजोनिमीलिता रजोगुणशून्या वा धूलिपूरितलोचनाः पुरुषा अवर्त्मानि कुमार्गान् । व्रजन्ति गच्छन्तीत्यर्थान्तरन्यासेन समर्थ्यते । अत्र श्लेषालङ्कारोऽपि ॥

भा०—अनन्तर राजा ने न्युफौरेष्टनामक ग्राम को उजड़वाकर आखेट खेलने के लिये जंगल बनाया क्योंकि रजोगुण से अन्धे अथवा धूलि से अन्धे पुरुष मार्गरहित स्थान को गमन करते हैं ॥ ८ ॥

महीभुजः शक्तियुतो धियान्वितो
गिरीभखेन्दुप्रमिते शके शुभे ।
द्वितीयसंख्यो विलियम् नरेश्वरः
सुतोऽसतां प्रीतिकरोऽजनिप्रभोः ॥ ९ ॥

टी०—महीति । गिरीभखेन्दुप्रमिते सप्ताशीत्यधिकैकसहस्रसंख्यके शुभे शके क्रैष्टसंवत्सरे शक्तियुतो बलोपेतो धिया बुद्ध्याऽन्वितोऽसतां कुत्सितानां प्रीतिकरः प्रेमविधायकः प्रभोः समर्थस्य महीभुजो राज्ञः सुतस्तनूजोद्वितीयगणनायुक्तो विलियम्संज्ञको नरेश्वरो जनाधिपोऽजनि अभूत् ॥

भा०—१०८७ ईसवी में शक्तियुक्त बुद्धिमान् और असज्जनों का प्रेम करनेवाला सामर्थ्ययुक्त राजा का पुत्र द्वितीयसंख्यक विलियमनामक राजा हुआ ॥ ९ ॥

1. New-Farest. 2. William. II.

अथैंग्लिशा भूपतिसेवकार्दिताः
सहायतां भूमिभृतो ह्यकुर्वत ।
बलिं गृहीत्वा प्रतिकर्षकादिमे
प्रवृद्धमात्सर्य्यधियोऽनुचिच्यिरे ॥ १० ॥

टी०—अथेति । अथानन्तरं भूपतेर्ये सेवका राजपुरुषास्तैरर्दिताः पीडिता ऐंग्लिशा भूमिभृतो राज्ञः सहायतामकुर्वत व्यधुः प्रवृद्धं मात्सर्य्यं धीषु येषां त इम ऐंग्लिशाः कर्षकः कर्षकः प्रतिकर्षकं तस्मात् "अत्र वीप्सायां यथार्थत्वान्नाव्ययीभावादतोऽमत्वपञ्चम्या इत्यमभावः" [क्षेत्राजीवः कर्षकश्च कृषकश्च कृषीवल इत्यमरः] बलिं करं [भागधेयः करोबलिरित्यमरः । बलिर्दैत्यप्रभेदे च करचामरदण्डयोरिति मेदिनी] गृहीत्वाऽऽदायानुचिच्यिरे संचितमकार्षुः ॥

भा०—अनन्तर राजा के सेवकों से दुःखित ऐंग्लिशलोगों ने राजा की बाह्यवृत्ति से सहायता की, बढ़े हुए कोपवाले ऐंग्लिशों ने हर एक जमींदार से कर लेकर अपने पास एकत्रित किया ॥ १० ॥

तदैन्सलम्नामपुरोधसं स्वयं
व्यधुश्च धर्माधिकृतं तदैंग्लिशाः ।
अभूत्स तत्सर्वधनस्य रक्षिता-
ऽपहारको ऽकिञ्चनलोकपालकः ॥ ११ ॥

टी०—तदेति । तदा तस्मिन् समये ऐंग्लिशाः स्वयं ऐन्सलम् नाम यस्य स चासौ पुरोधाः पुरोहितस्तं धर्म्माधिकृतं धर्म्माधिकारिणं च मुधा व्यर्थमेव व्यधुरकार्षुः स ऐन्सलम् तेषां यत् कराभिधानं संचितं सर्वं धनं तस्य रक्षिता अपहारको व्ययकर्ता तथा अकिञ्चना दारिद्र्ययुक्ता ये लोकास्तेषां दानादिना पालकोऽभूत् ॥

भा०—उस समय ऐंग्लिशलोगों ने ऐन्सलम्नामक पादरी को आपही

1. Anslem.

व्यर्थ धर्म्माधिकारी बनाया और वह पादरी उनके उस संचित द्रव्यका रक्षक खर्च करनेवाला और गरीबों का पालनेवाला हुआ ॥ ११ ॥

यदैव धर्म्माधिकृतो महीक्षितो
विरुद्धकार्य्यं प्रतिसञ्चचार सः ।
तदैव मृत्युं प्रययौ महीभुजा
विरूपतां यान्ति धियो विसंक्षये ॥ १२ ॥

टी०—यदैवेति । यदैव यस्मिन्समय एव धर्माधिकृतो धर्म्माधिकारी ऐन्सलम् महीक्षितः महीं पृथ्वीं क्षियति क्षि निवासगत्योः । तुदादिर्वा महीं क्षयति । क्षि क्षयैश्वर्य्ययोः । भ्वादिरयं धातुः । तस्य राज्ञो विरुद्धकार्य्यं प्रतिसंचचाराचरितवान् तदैव समये महीभुजा राज्ञा करणेन स मृत्युं प्रययौ जगाम धियो बुद्धयो विसंक्षये विनाशकाले विरूपतां विपरीततां यान्ति प्राप्नुवन्तीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—जिस वक्त धर्म्माधिकारी ऐन्सलम् ने राजा के विरुद्ध आचरण किया उसी वक्त राजा से वह मृत्युपथ को प्राप्त हुआ क्योंकि विनाशकाल में बुद्धियां विपरीत होजाती हैं ॥ १२ ॥

तृतीयपुत्रो विलियम्महीभृतः
सुबुद्धिमान् प्राथमिकःसहेनरीः ।
नभोऽन्तरिक्षेशमिते शके नृपः
सुयौवनोद्भासितविग्रहोऽभवत् ॥ १३ ॥

टी०—तृतीयपुत्र इति । विलियम्महीभृतः विलियम्नाम्नो राज्ञस्तृतीयपुत्रः सुबुद्धिमान् प्राथमिकः प्रथमसंख्यान्वितः सः प्रसिद्धो हेनरीः सुयौवनेन उद्भासितो विग्रहः कायो यस्य [ शरीरं वर्ष्म विग्रह इत्यमरः ] तथाविधः सन् नभोऽन्तरिक्षशमिते एकशताधिकैकसहस्रसंख्यके क्रैष्टशके नृपो भूपतिरभवत् ॥

1. Henry I.

भा०——प्रथम विलियम्राजा का तृतीय पुत्र यौवन से सुशोभित शरीर-वाला बड़ा बुद्धिमान् प्रथम हेनरी ११०० ईसवी में राजा हुआ ॥ १३ ॥

अथैंग्लिशानां परिबोधनाद् भृशं
तदीयसाहाय्यमवाप्य च क्षणात्।
वसुन्धरेशानुचरान् समन्ततः
स्वविक्रमैस्तानधरीचकार सः ॥ १४ ॥

टी०——अथेति। अथानन्तरं स हेनरीः ऐंग्लिशानां परिबोधनाद् विज्ञापनाद् भृशमत्यर्थं तदीयसाहाय्यं तद्दत्तसहायतां चावाप्य लब्ध्वा क्षणात् तत्समयादित्यर्थः वसुन्धरेशस्य पूर्वमहीभुजोऽनुचरांस्तान् बैरन-संज्ञकान् राजपुरुषान् समन्ततः स्वविक्रमैर्निजपराक्रमैरधरीचकार अधः करणयुक्तानकरोदित्यर्थः ॥

भा०——राज्यप्राप्त्यनन्तर उस हेनरीराजा ने ऐंग्लिशलोगों के समझाने से तथा उनकी सहायता पाकर उसी समय से तमाम पहिले राजा के सेवक बैरनलोगों को अपने पराक्रम से नीचा कर दिया ॥ १४ ॥

निजाग्रजं रौवर्ट[1]ं च हेनरी[2]-
र्विपक्षभावेन विलोकयंस्तदा।
तदीयनौर्म्मण्डि[3]कनाममण्डलं
जहार नीत्यात्मकमार्ग्गविप्लुतः ॥ १५ ॥

टी०——निजाग्रजमिति। तदा तस्मिन् समये रौवर्टं तन्नामकं निजा-ग्रजं स्वकीयज्येष्ठभ्रातरं विपक्षभावेन शत्रुभावेन विलोकयन् पश्यन् हेनरी राजा ( ज्येष्ठोभ्राता पितृसम इति न्यायात्, राज्ञस्तद्विपरीतभावात् नीतीति विशेषणं ) नीत्यात्मको यो मार्गः पन्थास्तस्माद् विप्लुतो वि-च्युतः सन् नौर्मण्डिकं नाम यस्य तच्च तन्मण्डलं तदीयं च तन्नौर्मण्डिकं नाम मण्डलं रौवरटसंबन्धि नौर्मण्डिकाख्यभूभागं जहार गृहीतवान् ॥

1. Robert. 2. Henry. 3. Normandy.

भा०--उस समय रौबर्टनामक अपने ज्येष्ठभ्राता को शत्रुभाव से देखनेवाले ज्येष्ठभ्राता पितृतुल्य होता है इस न्याय से विच्युत उस हेनरी राजा ने उसका नौर्मण्डिकाख्य मण्डल ( जिला ) को अपने क़ब्जे में कर लिया ॥ १५ ॥

दयाविहीनेन नयेन मानवान्
करातिभारेण च पीडयन्नसौ ।
शरात्रिरुद्रप्रमिते शके नृपो
मृतिं समैषीदखिलावसानिकाम् ॥ १६ ॥

टी०--दयेति । दयाविहीनेनानुकंपारहितेन नयेन नीत्या करातिभारेण च मानवान् लोकान् पीडयन्नसौ नृपो महीपः शरत्रिरुद्रप्रमिते पञ्चत्रिंशदधिकैकादशशतमिते क्रैष्टशके अखिलस्य सर्वस्य जगतो ऽवसानं यस्यां तां मृतिं मृत्युं समैषीत् प्राप्तवान् "इण् धातोर्लुङि रूपम्" ॥

भा०---दयाविहीन नीति से और ज्यादः कर लगाने से प्रजा को पीडन करता हुआ यह हेनरी राजा ११३५ ईसवी में सबके अन्त को करनेवाली मृति को प्राप्त हुआ ॥ १६ ॥

बभूव पूर्वो विलियम्नृपो हि य-
स्तदीयदौहित्रमतिप्रतापिनम् ।
प्रजास्तदा ष्टेफेननामधेयकं
महीभुजं लोकहितं च मेनिरे ॥ १७ ॥

टी०---बभूवेति । हीति निश्चयेन यः पूर्वः प्रथमो विलियम् तन्नामको नृपो बभूव तदा हेनरीभूपमरणादनन्तरं प्रजाः अतिप्रतापिनं विक्रमयुतं तदीयदौहित्रं विलियम् सुतातनयं महीभुजं ष्टेफननामधेयकं ष्टेफनाख्यं राजानं लोकहितं च मित्रभावेन लोकानुग्रहकारकं च मेनिरे ऽमंसत ॥

भा०---यह निश्चय है कि जो पहिला विलियम् राजा हुआ था हेनरी के मरने

1. William. 2. Stephen.

बाद प्रजावर्ग ने बड़ा प्रतापी ष्टेफन नामक उसी विलियम् के दौहित्रको राजा और लोगों का हितैषी भी माना ॥ १७ ॥

तदैव तत्पूर्व्वमहीभृतः सुता
पितुः शिरस्त्रस्य कृते विषादिता ।
नृपस्य विद्रोहमशेषमानिषु
निराधिकाराऽप्यधिकं समातनोत् ॥ १८ ॥

टी०—तदैवेति । तदैव ष्टेफनस्य राज्यप्राप्तिसमय एव तस्य पूर्वो यो महीभृद्धेनरीः तस्य सुता पुत्री पितुर्हेनरीभूपस्य शिरस्त्रस्य मुकुटस्य कृते तदर्थमित्यर्थः । विषादिता खेदयुक्ता निराधिकारा अधिकाररहिता सत्यपि अशेषमानिषु समग्रगर्वितपुरुषेषु विषये नृपस्य ष्टेफनस्य अधिकं विद्रोहं द्वेषं समातनोत् विस्तीर्णमकरोत् ॥

भा०—ष्टेफ़न के राज्यप्राप्ति ही समय में उसके पाहिले राजा हेनरी की कन्या पिता के मुकुट के लिये बड़ा हठ करती हुई उस अधिकार-रहिता ने संपूर्ण अहंकारी लोगों के बीच राजा ष्टेफ़न का बड़ा भारी विद्रोह फैलाया ॥ १८ ॥

महीभुजा ते द्रविणार्थमन्वहं
बृहज्जना विव्यथिरे पदे पदे ।
तथा बुभुक्षार्दितदीनमानवा
यथाघमात्मीयमसूनरीरहन् ॥ १९ ॥

टी०—महीति । महीभुजा राज्ञा अन्वहं अहन्यहनीत्यर्थः द्रविणार्थं धनार्थं ते प्रसिद्धा बृहज्जना मान्यलोकाः पदे पदे स्थाने स्थाने विव्यथिरे व्यथिता बभूवुरित्यर्थः । तथा तादृशमेव बुभुक्षया अर्दिताः पीडिताश्च ते दीनमानवा दुर्बलजना आत्मीयमघं यथा पापमिवासून् प्राणान् जीवनमरीरहन्नत्याजुरत्रोपमालङ्कारः ॥

भा०—राजा से प्रतिदिन धन के लिये बड़े आदमी जगह जगह दुःखित

किये गये । उसी तरह बुभुक्षा से पीड़ित दीनमनुष्यों ने अपने पाप की तरह प्राणों को छोड़ा ॥ १९ ॥

य एव पूर्वो नृपतिश्च हेनरी-
स्तदीयपुत्र्यास्तनयोऽपि हेनरीः।
बभूव सोऽञ्जेभिनवंशसम्भवः
स्वकौशलोल्लासितलोकमानसः ॥ २० ॥

टी०—य एवेति । यः पूर्व एव च हेनरीर्नृपतिरासीदिति शेषः । अत्रैवकारोऽन्ययोगव्यवच्छेदकः स्वकौशलेनोल्लासितं लोकानां मानसं येन अञ्जेभिनं यद्वंशं तत्र संभवो यस्यैवंविधः तदीयपुत्र्या हेनरीराजस्य सुतायास्तनय आत्मजोऽपि सः प्रसिद्धो हेनरीर्बभूव ॥

भा०—जोकि पहिला ही हेनरी राजा था उसीका दौहित्र अपने बुद्धिकौशल से लोगों के चित्त का प्रसन्न करनेवाला अञ्जेभिनकुलोत्पन्न वह हेनरीनाम से प्रसिद्ध हुआ ॥ २० ॥

युगेषुरुद्रप्रमिते शके ततो
द्वितीयसंख्यान्वितहेनरीर्मुदा।
अशेषलोकाञ्चितसद्गुणावलि-
र्नृपासने सौख्यतमे समाविशत् ॥ २१ ॥

टी०—युगेष्विति । ततः ष्टेफनस्यानन्तरं युगेपुरुद्रप्रमिते चतुःपञ्चाशदधिकैकादशशतमिते क्रैष्टशके अशेषा ये लोका जनास्तैरञ्चिताः पूजिताः सद्गुणानामावलिः पङ्क्तिर्यस्यैवंविधो द्वितीयसंख्यया अन्वितो विशिष्टश्चासौ हेनरीर्मुदा हर्षेण सौख्यतमे सुखोपयुक्ते नृपासने भूपपीठे समाविशदतिष्ठत् ॥

भा०—ष्टेफनराजा के अनन्तर ११५४ ईसवी में समग्रलोगों से संमानित द्वितीयसंख्याविशिष्ट हेनरी अत्यन्त सुखयुक्त राज्यासन में बैठा ॥ २१ ॥

1. Henry. 2. Angevin.

स शक्तिमान् बाहुबलोपशोभितो
नयाविवर्त्तान् व्यदधात्स्वबुद्धितः।
पुरा समुद्वेगयुतं प्रजामनो
मनोऽनुकूलेन नयेन रञ्जयन् ॥ २२ ॥

टी०—सशक्तिमानिति। बाह्वोर्बलं तेनोपशोभितो विराजितः शक्तिमान् सर्वसामर्थ्ययुक्तः स हेनरीराजा पुरा ष्टेफनभूपसमये समुद्वेगयुतं विषादितं प्रजामनो लोकचित्तं मनोऽनुकूलेन चेतोऽनुरूपेण नयेन नीत्या रञ्जयन् संतोषयन् सन् स्वबुद्धितो निजधिया। सार्वविभक्तिकस्तसिल्प्रत्ययः। नयाविवर्त्तान् अयुक्तनीतिं व्यपोह्य युक्तनीतिसंस्थापनानि व्यदधादकरोत् ॥

भा०—बड़ा पराक्रमी और सर्वसामर्थ्ययुक्त उस हेनरी राजा ने ष्टेफनराजा के समय से उद्वेगयुक्त लोगों के चित्त को योग्य नीति से प्रसन्न कर अपनी बुद्धि से पूर्व नीति का परिवर्तन किया। २२ ॥

अथो महीपेन सुनीतिवेदिना
स्वसैनिका वृत्तिनिबन्धनेन ते।
अभूतपूर्वेण विशेषितादराः
सुतोषिता जन्यपणीकृतासवः ॥ २३ ॥

टी०—अथो महीपेति। अथोऽनन्तरं सुनीतिवेदिना न्यायवेत्त्रा महीपेन राज्ञा अभूतपूर्वेण पूर्वं न भूतमित्यभूतपूर्वं "भूतपूर्वे चरडिति निर्देशात् भूतशब्दस्य पूर्वनिपातः" तेन वृत्तिनिबन्धनेन मासिकवृत्तिप्रदानेन विशेषित आदरो येषां ते अतएव जन्ये संग्रामे [ युद्धमायोधनंजन्यमित्यमरः ] तस्मिन् पणीकृताः "अत्राभूततद्भावे च्विः अस्य च्वावित्यवर्णस्येत्वम्" द्यूतस्थापितद्रव्यवत् संकल्पिताः असवः प्राणा यैस्ते स्वसैनिका निजसेनापुरुषाः सुतोषिताः स्वतोषिपतेत्यर्थः कर्म्मणि क्तप्रत्ययः ॥

भा०—अनन्तर न्यायशील उस राजा ने जो कि पहिले न था ऐसे आजीवन निबन्धन से विशेष आदरयुक्त किये गये अतएव संग्राम में जिनके प्राण द्यूत के द्रव्य की नाईं सङ्कलित किये हैं ऐसे अपने सेना के लोग बड़े सन्तुष्ट किये ॥ २३ ॥

अतोऽन्यधात्क्षेत्रपतिभ्य एव हि
ग्रहीतुमस्त्राण्यनुशासनान्यसौ ।
तथैव सर्वेष्वपि मण्डलेष्वरं
सदोनयस्थानमपि न्यवेशयत् ॥ २४ ॥

टी०—अत इति । हीति निश्चयेन अतोऽनन्तरं असौ भूपः क्षेत्रपतिभ्यः कृषकेभ्य एवास्त्राणि ग्रहीतुमनुशासनान्याज्ञाश्चकार तथैव सर्वेषु मण्डलेष्वपि अरमत्यर्थं सदः सभां नयस्थानं न्यायालयमपि न्यवेशयदस्थापयत् ॥

भा० —अनन्तर इस राजा ने कृषकों के लिये अस्त्र ग्रहण करने को आज्ञा की । इसी तरह सम्पूर्ण जिलाओं में सभा और न्यायालय स्थापन किये ॥ २४ ॥

य एव दण्ड्याश्च पुरोधसोऽभवँ-
स्तदा स्मृतीनां परिवेदिनः स्वयम् ।
अयुक्तदण्डं व्यदधुस्तदीयकं
सपक्षकार्य्याधिकृते कुतो नयः ॥ २५ ॥

टी०—यएवेति । तदा तस्मिन् समये य एव पुरोधसो दण्ड्या दण्डार्हा अभवन्नविद्यन्त स्मृतीनां परिवेदिनो धर्म्माधिकारिणः स्वयं तदीयकं तेषां दण्ड्यानामित्यर्थः अयुक्तदण्डमयुक्तशासनं व्यदधुरकुर्वन् सपक्षश्चासौ कार्य्याधिकृतस्तस्मिन्सति नयः कुतः अपितु नीतिर्न भवतीति भावः । इत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—जोंही पादरी दण्डनीय होते थे धर्म्माधिकारी लोग आपही उनको अयोग्य दण्ड देते थे क्योंकि पक्षपाती कार्य्याधिकारी होने पर नीति कहां थी ॥ २५ ॥

तथाविधं नीतिविरुद्धमीहितं
विलोक्य भूपः प्रकृतिप्रियोऽन्वहम् ।
स्वकीयनीत्यालय एव तत्समं
विधातुमैच्छद्विधिनोपशोभिते ॥ २६ ॥

टी०—तथेति । प्रकृतेः प्रजायाः प्रियो भूपोऽन्वहं प्रतिदिनं तथाविधं तादृशं नीतिविरुद्धं नयप्रतिकूलं ईहितं कार्य्यं विलोक्य दृष्ट्वा विधिना योग्यविधानेनोपशोभिते विराजिते स्वकीयो यो नीत्यालयो नयस्थानं तस्मिन्नेव तत् समं तत्सर्वं तेषां शासनं विधातुं कर्तुमैच्छदकामयत ॥

भा०—प्रजा के प्रिय उस हेनरीराजा ने प्रतिदिन उस तरह उन पादरियों का नीतिविरुद्ध कार्य्य देखकर नियम से सुशोभित अपने न्यायालय में वह संपूर्ण उनका शासन कार्य्य करने को इच्छा की ॥ २६ ॥

अतः पुरोधा निजसंमतिं विना
विमृश्य वैकेट इति स्वगर्हणाम् ।
नृपेहितं तद्गणयन् विरूपकं
सहात्मवर्गैर्विमुखीबभूव सः ॥ २७ ॥

टी०—अत इति । अतः कारणात् स प्रसिद्धो वैकेटः पुरोधाः पुरोहितो निजसंमतिं विना स्वयुक्तिमन्तरा इति राजोक्तिं स्वगर्हणां निजापमानं विमृश्य विचार्य्य तत्पूर्वोक्तं नृपेहितं भूपेष्टं विरूपकं विपरीतं गणयन् जानन् सन् आत्मवर्गैर्निजमण्डलीभिः सह विमुखीबभूव पराङ्मुखतां प्राप भूपस्य विरुद्धमाचरितुं प्रवृत्त इति भावः ॥

भा०—इसीकारण वैकेटनामक पादरी अपनी संमति के बगैर इस तरह पूर्वोक्त राजाके कथन को अपनी अवहेलना समझकर राजा का स्वकीय

1. Archbishop Becket.

न्यायालय में पादरियों को दण्ड देना विरुद्ध मानता हुआ अपनी मण्डली सहित विमुख होगया ॥ २७ ॥

अथो मृषा दोषनिरोपणेन स
जनैस्तदा दूषितमानविग्रहः ।
पलायितः फ्रान्स इतोऽगमत्क्रुधा
ह्यनर्थकृत्पूज्यतमावहेलनम् ॥ २८ ॥

टी०—अथोमृषेति । अथोऽनन्तरं तदा तस्मिन्समये तत्कार्ये संजाते सति जनैर्लोकैर्हेतुभूतैर्मृषा दोषस्य निरोपणमास्थापनं तेन करणेन दूषितः कलङ्कितो मान एव विग्रहः कायो यस्यैवंविधः स वैकेट इतो नन्दननगरात् क्रुधा कोपेन पलायितो भग्नः सन् फ्रान्से तन्नामके देशेऽगमत् अयासीत् 'राज्ञा स्वकुलपुरोधसो निष्काशनं तस्य चान्यभूपदेशगमनं राज्ञो निन्दास्पदं तत्. हीति निश्चयेन पूज्यतमस्यावहेलनमपमानोऽनर्थकृद् विपरीतफलसंपादकं भवतीति शेषः इत्यर्थान्तरेण समर्थ्यते ॥

भा०—अनन्तर उस वैकेट पादरी के अधिकार राजा के पास जाने में लोगों से मिथ्यापवादारोपण से दूषित वह पादरी नन्दनपुरसे निकलकर फ्रान्स देश को चलागया यह वात ठीक है कि माननीय पुरुष का निरादर बड़ा अनर्थ करता है क्योंकि उस वक्त पुरोहित के निकालने से राजा का बड़ा अपयश फैला ॥ २८ ॥

ततो महीपोऽपि जनानुनोदनात्
पुरोधसं पूज्यमिहानयत्पुनः ।
तदाऽपि तं भूपविरोधतां गतं
पदातयोऽघ्नन् नयवर्त्मविक्लवम् ॥ २९ ॥

---

1 France.

टी०—तत इति । ततोऽनन्तरं महीपो भूपतिर्जनानुनोदनात् लोकानां प्रेरणातः पुनर्भूयः पूज्यमर्च्यं पुरोधसमिह पुर आनयदाकारितवान् तदाऽपि तस्मिन्समयेऽपि पदातयो राजसेवका भूपस्य विरोधतां विरोधभावं गतं प्राप्तं अतएव नयस्य नीतेर्यद्वर्त्म मार्गस्तस्मिन् विक्लवं व्याकुलं तं वैंकेटं पुरोहितं अघ्नन् हतवन्तः ॥

भा०—अनन्तर राजाने लोगों के कथन से फिर वह मान्य वैंकेट नामक पादरी नन्दनपुर में बुलाया उस समय भी राजा के विरोधभाव को प्राप्त नीतिमार्ग में चलने को असमर्थ उस वैंकेट को राजा के सेवकों ने मारडाला ॥ २९ ॥

**महीपतिर्नीतिविरूपवर्त्मनि**
**समाश्रितश्चेति जनैरुदीरितम् ।**
**स्वकीयदोषं विनिवारयन्नृपो**
**व्रतं हि चान्द्रायणमाचरीकरीत् ॥ ३० ॥**

टी०—महीति । महीपतिर्भूमीशो नीतेर्विरूपं विरुद्धं यद्वर्त्म मार्गस्तस्मिंश्च समाश्रितोऽवतीर्ण इति जनैर्लोकैरुदीरितं कथितं स्वकीयदोषं निजापराधं विनिवारयन् विशेषेण दूरीकुर्वन् नृपः क्षौणीशश्चान्द्रायणं "स्फायितञ्चिवञ्चिशकीत्याद्युणादिसूत्रेण चदिधातोरक् प्रत्ययाच्चन्द्रेति पदसिद्धिः" "तस्मात्तस्येदमित्यण्" "चान्द्रःचन्द्रलोकः स अयते प्राप्यते इति ल्युट्प्रत्ययाच्चान्द्रायण इति" तन्नामकं व्रतमाचरीकरीत् कृधातोर्यङ्लुकि लङि ऋतश्चेति सूत्रेण रीगागमेरूपम् । पुनः पुनरतिशयेन वा कृतवानित्यर्थः ॥

भा०—राजा नीतिविरुद्धमार्गावतीर्ण होगया इस तरह लोगोंका कहा हुआ अपना दोष निवारण करते हुए राजाने पुरोहितवधदोष निवारणार्थ चान्द्रायणव्रत आचरण किया ॥ ३० ॥

अथोमहीन्द्रोहि पुनश्च तत्कृतिं
तदीयपार्श्वे स्वमतेनचार्प्पयत् ।
समग्रलोकस्य सुखैकसंश्रयं
वभूव तत्कर्म्म जनानुरञ्जनम् ॥ ३१ ॥

टी०—अथो इति । अथोऽनन्तरं हीतिनिश्चयेन महीन्द्रो राजा पुनश्च भूयोऽपि तत्कृतिं तेषां पुरोधसामधिकारं तदीयपार्श्वे तत्सन्निधौ केवलं लोकानां सम्मतया न किन्तु स्वमतेन निजसम्मतयाच अत्र "चकारोऽनुक्तसमुच्चयार्थकः" । अर्पयत् । "ऋधातोर्णिचि लङि अर्तिह्रीव्लीति सूत्रेण पुगागमेरूपम् । न्यवेदयत् तत्कर्म पुरोहितानुनयनात्मकं समग्रलोकस्याशेषजनस्य । लोकस्तु भुवने जन इत्यमरः । "जात्याख्यायामेकस्मिन् वहुवचनमन्यतरस्यामितिसूत्रेण जातावेकवचनम्" सुखस्यैकसंश्रयमेकाश्रयभूतं तथा जनानामनुरञ्जनं प्रसन्नकारकं वभूव जज्ञे ॥

भा०—अनन्तर राजाने फिर उन पादरियों का काम उनके पास सिपुर्द कर दिया यह काम सम्पूर्णलोगों का सुखाश्रय और सब का प्रसन्न करनेवाला हुआ ॥ ३१ ॥

महीपतिः फ्रान्सकवारुणीदिशं
गृहीतवानात्मविवाहयौतके ।
सएव तत्फ्रान्सनराधिपोऽभव-
न्महान्तमायान्ति सुनीतिसम्पदः ॥ ३२ ॥

टी०—महीपतिरिति । महीपतिर्हेनरीः आत्मनो विवाहस्य यौतके कन्यादानानन्तरं सुदायद्रव्यविषये फ्रान्सकस्य देशविशेषस्य या वारुणी वरुणसम्वन्धिनी दिक् तां पश्चिमदिगाश्रितदेशभागमित्यर्थः गृहीतवान् जग्राह तत् तस्मात्कारणात् स एव हेनरीः फ्रान्सनराधिपः

1. France.

तद्देशभूपतिरभूत् सुनीतया याः सम्पदः समृद्धयस्ता महान्तं पुरुषश्रेष्ठमायान्ति प्राप्नुवन्तीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—राजा हेनरी ने पहिले अपने विवाह के दय्यज में फ्रान्सदेश की पश्चिम दिग्भूमि ग्रहण की थी उसी कारण वही हेनरी फ्रान्सदेश का राजा हुआ क्योंकि सुनीति की सम्पत्तियां बड़े को प्राप्त होती हैं ॥ ३२ ॥

शके हि नन्देभमहीन्दुसंख्यके
नृपस्य पुत्रोऽखिलापहारकः ।
रिचार्डनामा भुजवीर्यवान् भटो
नराधिपोऽभूज्जनतानुमोदितः ॥ ३३ ॥

टी०—शक इति । हीतिनिश्चयेन नन्देभमहीन्दुसंख्यके एकोननवत्यधिकैकादशशतमिते क्रैष्टशके अरिवलापहारकः शत्रुबलविहन्ता भुजवीर्यवान् बाहुपराक्रमशाली भटः शूरोरिचार्डनामा नृपस्य हेनरीभूपस्य पुत्रस्तनयो जनतानुमोदितः प्रजाभिरभिनन्दितः सन् नराधिपोऽभूत् अत्र परिकरालङ्कारः । विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः । इति लक्षणात् ॥

भा०—यह निश्चय है कि हेनरी के बाद ११८९ ईस्वी में शत्रुओं का नाश करनेवाला बाहुशाली शूर रिचार्डनामक राजा हेनरी का पुत्र प्रजावर्ग से अभिनन्दित होकर राजा होगया ॥ ३३ ॥

अथोरिचार्डो निजतुल्यभूमिपैः
समंविरोधं बहुगर्व्वमादधौ ।
अनन्यसाधारणबाहुविक्रमो
न मानशौण्डः सहतेऽन्यलंघनम् ॥ ३४ ॥

टी०—अथो इति । अथोऽनन्तरं रिचार्डो राजा निजेनात्मना तुल्याः

1. Richard I.

सदृशा ये भूमिपा राजानस्तैः समं सार्धं बहुगर्वं बह्वहङ्कारविशिष्टं विरोधं विद्वेषमादधौ दधार नान्यस्य साधारणो बाहुविक्रमो यस्य स मानेनचित्त समुन्नत्याशौण्डो विख्यातः यद्वा मानेनाहङ्कारेण शौण्ड उन्मत्तः। मत्तेशौण्डोत्कटक्षीवा इत्यमरः। शौण्डो मत्तेच विख्याते पिपल्यांच भवेत्स्त्रियामिति विश्वमेदिन्यौ। एवं विधःपुरुषोऽन्यलंघनमपरातिक्रमं न सहते न क्षमते ॥

भा०—अनन्तर रिचार्डनामक राजा ने अपने तुल्य राजाओं के साथ बड़ा अहङ्कारविशिष्ट विरोध किया क्योंकि बड़ा पराक्रमशाली मानोद्धत पुरुष दूसरे की तर्जना को नहीं सहार सकता है ॥ ३४ ॥

द्वितीयसंख्यो विलियम् नृपःपुरा
सतुर्कलोकैः सह युद्धमातनोत्।
युरूसलम् देशमसौ तदात्मसा
चकार हि क्रौसकृते महाधनम् ॥ ३५ ॥

टी०—द्वितीयेति। पुरा पूर्वंद्वितीयसंख्यः सः प्रसिद्धो विलियम् नृपः तुर्कलोकैस्तुर्कदेशनिवासिजनैः सह क्रौसकृते क्रौस ईसामसेर्धर्म्मस्तदर्थं इत्यर्थः युद्धंसंग्राममातनोत् विस्तारितवान् हीति निश्चयेन तदा तद्युद्धसमयेऽसौमहीपः महाधनमतिधनयुक्तं युरूसलम्देशं तन्नामकं विषयमात्मसाच्चकार स्वायत्तमकरोत् ॥

भा०—पहिले समय में द्वितीय विलियम् ने तुर्कलोगों के साथ ईसाई धर्म्म के लिये युद्ध किया उस वक्त युद्ध में विलियम् ने युरूसलम्देश अपने आधीन करदिया था ॥ ३५ ॥

यदा द्वितीयः सबभूव हेनरी
स्तदैव तौर्कैर्जगृहेयुरूसलम्।

1. Wiliam II. 2. Turks. 3. Jerusalem. 4. For the sake of Cross. 5. Henry II.

स्वपौरुषैर्हीनमसाहसं नृपं
जहाति लक्ष्मीः प्रमदेव षण्डकम् ॥ ३६ ॥

टी०—यदेति । यदा यस्मिन्समये सः प्रसिद्धो द्वितीयोहेनरीराजा बभूव तदा तस्मिन् समय एव तौर्कैस्तुर्कदेशोद्भवैः "तत्रभव इत्यर्थेताद्धितोऽणप्रत्ययः" पुरुषैर्युरूसलम् तन्नामको देशो जगृहे । "कर्मणि लिट्" लक्ष्मीः कमला स्वपौरुषैर्निजपराक्रमैर्हीनं रहितमसाहसमुत्साहवर्जितं नृपं भूमीशं प्रमदा स्त्री षण्डकं नपुंसकमिव जहाति त्यजति अत्रोपमार्थान्तरन्यासालङ्कारयोः संसृष्टिः ॥

भा०—जिस समय दूसरा हेनरीराजा हुआ था उसी वक्त तुर्कदेशीय-लोगों से युरूसलम् देश निकाला गया क्योंकि लक्ष्मी पराक्रम से रहित उत्साह-वर्जित राजा को प्रमदा स्त्री नपुंसक की नाईं छोड़ देती है ॥ ३६ ॥

अथो रिचार्डोऽपि[1] तृतीयसंयति
तदौष्ट्रियाफ्रान्सकयोर्[2][3]महीभुजौ ।
सुसन्धियुक्तौ प्रथमं विधाय स
विरोधिनौ तावकरोदनन्तरम् ॥ ३७ ॥

टी०—अथो इति । अथोऽनन्तरं तदा स रिचार्डोऽपि तृतीयसंयति तुर्कलोकैः सह तृतीयसंग्रामे औष्ट्रियाफ्रान्सकयोर्देशविशेषयोर्महीभुजौ राजानौ प्रथमं पूर्वं सुसन्धियुक्तौ सौहार्दोपेतौ विधाय कृत्वाऽनन्तरं स्वमनोरथं सफलीकृत्येतिभावः तौ राजानौ विरोधिनौ द्वेषयुतावकरोत् ॥

भा०—अनन्तर उस रिचार्डराजाने भी तुर्कलोगों के साथ तृतीययुद्ध में औष्ट्रिया और फ्रान्स देश के राजाओं के साथ पहिले मिलापकर अपना मनोरथ पूर्ण करके बाद उनको विरोधयुक्त करदिया ॥ ३७ ॥

1. Richard I. 2. Austria. 3. France.

स तुर्कलोकांस्तु जिगाय संयति
तथापि नो नन्दयितुं शशाक तान् ।
तमौष्ट्रियादेशनिवासिनस्ततः
समानयन् बन्धनवेश्मनि क्रुधा ॥ ३८ ॥

टी०—सतुर्केति । स राजा तुर्कलोकांस्तु संयति संग्रामे जिगाय तथापि तान् तद्देशवासिनो लोकान् नन्दयितुं रञ्जयितुं नो शशाक ततोऽनन्तरं औष्ट्रियादेशनिवासिनः पुरुषास्तंरिचार्डं क्रुधा कोपेन बन्धनवेश्मनि कारागारे समानयन् प्रापयन् ॥

भा०—उस राजा रिचार्डने तुर्कलोगों को जीत तो लिया परन्तु तद्देशवासियों को वह प्रसन्न करनेको समर्थ न होसका इसके अनन्तर औष्ट्रियादेश रहनेवाले लोगोंने क्रोधसे रिचार्डको बन्धनालयमें रखदिया ॥ ३८ ॥

अथैंग्लिशा औष्ट्रियदेशभूपतिं
रिचार्डमूल्यं प्रतिनीय प्रश्रयात् ।
अमूमुचन् बन्धनवेश्मनश्च ते
प्रिया प्रजा कां न करोति सत्क्रियाम् ॥ ३९ ॥

टी०—अथेति । अथानन्तरं ऐंग्लिशा औष्ट्रियदेशस्य यो भूपतिस्तं रिचार्डमूल्यं स्वराजनिष्क्रयं प्रश्रयाद्विनयात् प्रतिनीय दत्त्वेत्यर्थः "नीधात्वोर्द्विकर्मकत्वम्" तं च रिचार्डं बन्धनवेश्मनः कारालयात् अमूमुचन् मोचयन्तिस्म प्रिया प्रजा राज्ञ इति शेषः कां सत्क्रियां न करोति अपि तु सर्वामेव करोतीत्यर्थान्तरन्यासेन समर्थ्यते ॥

भा०—अनन्तर ऐंग्लिशलोगों ने औष्ट्रियदेशाधिपतिको विनयसे कुछ धन देकर बन्धनालय से उसको लुटाया क्योंकि प्यारी प्रजा राजाका क्या सत्कार अथवा अच्छाकाम नहीं करती है ॥ ३९ ॥

---

1. Turks. 2. King of Austria. 3. Richard I.

ततोऽपि वीरैकरसो रिचार्डको
युयुत्सया फ्रान्सकनीवृतं समैत् ।
स नन्दनन्देशमिते शके तदा
मृतिं ययौ तत्र च सामराध्वरे ॥ ४० ॥

टी०—तत इति । ततोऽपि अनन्तरं च वीरैकरसः शौर्य्योपेतो रिचार्डो युयुत्सया योद्धुमिच्छया फ्रान्सकनीवृतं फ्रान्सदेशं समैत् अगमत् तदा नन्दनन्देशमिते नवाधिकनवत्यधिकैकादशशतमिते क्रैष्टशके स राजा रिचार्डः तत्र च फ्रान्से फ्रान्सदेशे सामराध्वरे रणयज्ञे मृतिं मृत्युं ययौ प्राप ॥

भा०— अनन्तर शौर्य्यगुणोपेत रिचार्ड राजा युद्धकी इच्छासे फ्रान्सदेश को गया उस वक्त ११९९ ईस्वी में वहां रणयज्ञ में मृत्युको प्राप्त हुआ ॥४०॥

तदग्रजस्यात्मज आर्थराभिधः
स्वराज्यभारोद्वहनाक्षमोऽभवत् ।
अतः प्रकृत्याऽवरजस्तदीयकः
सजौननामा नरपोऽन्वमन्यत ॥ ४१ ॥

टी०—तदग्रजेति । तदग्रजस्य तस्य ज्येष्ठभ्रातुरात्मजस्तनय आर्थराभिधस्तन्नामकः कुमारः स्वराज्यभारस्योद्वहने तस्मिन्नक्षमोऽसमर्थोऽभवत् अतः कारणात् प्रकृत्या प्रजया तदीयकोऽवरजो रिचार्डानुजः समसिद्धो जौननामा नरपो भूपतिरन्वमन्यत मेने "कर्म्मणि लङ्" ॥

भा०—रिचार्डका ज्येष्ठभ्रातृपुत्र आर्थरनामक अपने राज्यकार्य्य चलाने में असमर्थ था इस कारण प्रजाके लोगोंसे इसी रिचार्डका कनिष्ठभ्राता जौन राजा मानागया ॥ ४१ ॥

1. Richard I. 2. France. 3. Arthur. 4. John.

स निर्दयो जौन[1]नराधिपस्ततः
स्वराज्यभित्यार्थर[2]संज्ञकं भृशम्।
पुरा तु संस्थाप्य हि बन्धनालये
जघान पश्चाद्रहसि प्रमादतः ॥ ४२ ॥

टी०—स निर्दय इति। ततो राज्यप्राप्त्यनन्तरं हि निर्दयो दयारहितः स जौननराधिपस्तत्र मनो भूतिः स्वराज्यस्य भीतिरपगमभयं तया कारणभूतया पुरा तु पूर्वं तु आर्थरसंज्ञकं स्वज्येष्ठभ्रातृपुत्रं भृशमत्यर्थं बन्धनालये कारायां संस्थाप्य नियोज्य पश्चात् रहस्येकान्ते प्रमादतः प्रमादात् जघान हतवान् ॥

भा०—यह निश्चय है कि अनन्तर उस निर्दय जौनराजाने अपने राज्यापगम भय से स्वज्येष्ठभ्रातृपुत्र आर्थरको पहिले बन्धनमें रखकर पीछे प्रमाद से एकान्तमें मारदिया ॥ ४२ ॥

अतः परं फ्रान्सनराधिपः फिलिप्[3]
तदीयजीवापगमे महीपतिम्।
प्रयोजनं वेदितु मात्मसान्निधा-
वुपाह्वयन्नीतिरसैकसंश्रयः ॥ ४३ ॥

टी०—अत इति। अतः परं नीतिरसैकसंश्रयो न्यायाश्रयोपेतः फ्रान्सनराधिपः फिलिपाख्यस्तदीयजीवापगमे आर्थरस्य मृत्युविषये प्रयोजनं कारणं वेदितुं ज्ञातुं महीपतिं जौनभूपमात्मसान्निधौ स्वसमीपे उपाह्वयत् आकारितवान् ॥

भा०—अनन्तर न्यायाश्रय फ्रान्सदेशाधिपति फिलिप् ने आर्थर के मृत्युविषय में कारण जानने के लिये राजा जौन को अपने समीप बुलाया ॥ ४३ ॥

---

1 John. 2. Arthur. 3. Philip, king of France.

यदा स नायाच्च फिलिप्समक्षकं
क्रुधा तदा फ्रान्सजनाधिपः स्वयम्।
उदग्विभागार्धमहीं तदीयकां
हठादगृह्णादनिवार्यविक्रमः ॥ ४४ ॥

टी०—यदेति। यदा यस्मिन्समये सच जौनः फिलिप्समक्षकं फिलिप्सन्निधिं नायात् न प्रापत् तदा तस्मिन्समये अनिवार्य्य विक्रमोऽप्रतिहतशक्तिः फ्रान्सजनाधिपः फिलिप् क्रुधा कोपेन स्वयं यदृच्छया तदीयकां जौनसम्बन्धिनीं उदग्विभागार्धमहीं औत्तरदेशार्धपृथ्वीं हठात् बलात्कारात्। प्रसभं तु बलात्कारो हठ इत्यमरः। अगृह्णाद् गृहीतवान् ॥

भा०—जिस वक्त जौन फिलिप् के समीप न गया उसी समय बड़े पराक्रमी फ्रान्सदेशाधिपतिने आपही जौनका उत्तरदिशा का आधा देश लेलिया ॥ ४४ ॥

अथापि जौनस्य विरुद्धतां गतः
पुरोहितःष्टेफनलैंगटन्जनम्।
महीपकोपानलवर्द्धनात्मकं
प्रधानधर्म्माधिकृतं ह्यजीगणत् ॥ ४५ ॥

टी०—अथापीति। अथानन्तरमपि हीति निश्चयेन जौनस्य राज्ञो विरुद्धतां विद्वेषभावं गतःप्राप्तः पुरोहितः पुरोधा महीपस्य यः कोपानलः कोपवह्निस्तस्य वर्धन आत्मायस्य तं ष्टेफनलैंगटन्जनं एतन्नामकं पुरुषं प्रधानं मुख्यः सचासौ धर्म्माधिकृतस्तं मुख्यधर्म्माधिकारिणं अजीगणत् ॥

भा०—अनन्तर यह निश्चय है कि राजासे विरुद्धपादरीने राजाके

---

1. King of France. 2. John. 3. Stephen Langton.

कोपाग्निबढ़ानेवाले छेफन[1]लैंगटन्नामक पादरीको मुख्य धर्म्माधिकारी बनालिया ॥ ४५ ॥

स लैंगटन् धर्म्मरतः पुरोहितः
समग्रधर्म्माहितकार्यसञ्चयम् ।
न्यवारयत्सर्व्वजनानुबोधना-
न्नको विधत्ते गुरुशासनक्रियाः ॥ ४६ ॥

टी०—सलैंगटन्निति । धर्म्मरतः स्वधर्म्मतत्परः स लैंगटन् पुरोहितः सर्वजनानामनुबोधनात् सर्वजनान् प्रबोध्येत्यर्थः समग्रधर्म्मे आहितो निवेशितश्चासौ कार्यसञ्चयस्तं उत्सवादिनिवहम् न्यवारयत् प्रत्यषेधत् गुरुशासनस्य याः क्रियाः कृतयस्ताः को न विधत्ते अपि तु सर्व एव कुरुते इत्यर्थान्तरन्यासेन समर्थ्यते ॥

भा०—स्वधर्म्मनिरत लैंगटन्नामक पादरीने लोगोंको समझानेसे धर्म्म सम्बन्धि सब उत्सवादि काम रुकादिये क्योंकि गुरुलोगोंकी आज्ञा कौन नहीं मानता ॥ ४६ ॥

तदैव जौनोनृपतिः पुरोधसा
जनानुमत्या नरपासनाद्भृशम् ।
पृथग्व्यधायि व्यसनावधीरितो
जनोऽपमानं ह्यनुयाति गर्हितः ॥ ४७ ॥

टी०—तदैवेति । तदैव लैंगटन्नाम्ना पुरोधसा जनानुमत्या लोकसम्मत्या जौनो नृपतिर्नरपासनाद्राजसिंहासनाद् भृशमत्यर्थं पृथग्व्यधायि अकारि "धा धातोर्लुङिचिणि । आतोयुक्चिण्कृतोरिति युगागमाद्रूपम्" । हीति निश्चयेन गर्हितो निन्दितो जनोऽपमानं निरादरमनुयाति प्राप्नोतीत्यर्थान्तरन्यासेन समर्थ्यते ॥

1. John.

भा०—उसीसमय लैंगटनपुरोहितने लोकसम्मतिसे जौनराजा राज्यासनसे अत्यन्त पृथक् करदिया क्योंकि कुत्सितपुरुष निरादरको प्राप्त होता है ॥ ४७ ॥

**अथैंग्लिशा राजविरोधिनोऽभवन्**
**फरासिसा नन्दनभूमिलोलुपाः ।**
**इतीव जौनोऽरिभयाभिघूर्णितः**
**समाययौ ताञ्छरणं पुरोहितान् ॥ ४८ ॥**

टी०—अथेति । अथानन्तरं ऐंग्लिशा राज्ञो विरोधिनो विद्वेषयुता अभवन् फरासिसाः फ्रान्सदेशवासिनः पुरुषा नन्दनस्य या भूमिस्तत्र विषये लोलुपा अभिलाषवन्तोऽभवन् अजायन्त जौनो भूप इतीव इत्थं यथा भवति तथा अरिभयाद्धेतोरभिघूर्णितश्चलधैर्य्यः । "घूर्ण भ्रमणे धातोः गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्य्यतिभ्यश्चेति सूत्रेण कर्त्तरि भावकर्म्मणोश्चक्तः प्रत्ययः" घूर्णितः प्रचलायित इत्यमरः । एवंविधः सन् तान् पुरोहिताञ्छरणं रक्षितृभावं समाययौ प्राप ॥

भा०—अनन्तर ऐंग्लिशलोग राजाके विरुद्ध होगये फ्रान्सीय नन्दनराज्य में लोलुप होगये जौनराजा इसतरह शत्रुभय से चलधैर्य्य होकर उन पादरियों के शरण आगया ॥ ४८ ॥

**पुरोहितास्तं शरणागतं पुन-**
**नराधिपं जौनमकार्षुरग्रिमम् ।**
**महापराधेऽपि कृते महात्मनां**
**न कोपवह्निः प्रकरोति विक्रियाम् ॥ ४९ ॥**

टी०—पुरोहिता इति । पुरोहिताः शरणागतं रक्ष्यभावं प्राप्तं तं जौनं पुनर्भूयोऽग्रिमं सर्वाधिकारेऽपि तं नराधिपं महीपतिमकार्षुर्व्यदधुः महापराधेऽपि कृते सति "यस्य च भावेन भावलक्षणमिति सूत्रेण सप्तमी"

1. French. 2. John.

महात्मनां महत्त्वविशिष्टानां पुरुषाणां कोपवह्निः क्रोधानलो विक्रियां विकारं न प्रकरोतीत्यर्थान्तरन्यासः ॥

भा०—पादरीलोगोंने शरणको प्राप्त जौनको फिर सर्वाधिकारी राजा बनादिया क्योंकि बड़े अपराध के करने पर भी महात्माओं का कोपानल विकार को नहीं करता ॥ ४९ ॥

ततः पुरोधा मतिमान् हि लैंगटन्
प्रजासुखार्थं नृपधर्म्मसंयुते ।
अनेकसत्याश्रवमैग्नचार्टके
व्यधापयद्भूपकराक्षराणि सः ॥ ५० ॥

टी०—तत इति । ततोऽनन्तरं अग्रिमोमुख्यो लैंगटन्नामा स पुरोहितः प्रजासुखार्थं लोकानन्दार्थं नृपधर्म्मसंयुते राजधर्म्मयुक्ते अनेके सत्याश्रवाः सत्यनियमाः सन्ति यस्मिन् तच्चतन्मैग्नचार्टकं तन्नामकं पत्रं तस्मिन् भूपस्य राज्ञः कराक्षराणि हस्ताक्षराणि व्यधापयदकारयत् ॥

भा०—अनन्तर उस मुख्य लैंगटन्नामक पादरी ने प्रजा के सुख निमित्त राजधर्म्मयुक्त अनेक सत्यनियम परिपूर्ण मैग्नचार्टकनामक पत्र पर राजहस्ताक्षर करादिये ॥ ५० ॥

(युग्मकम्)

रिपौ सुते पक्षविहीनसंस्थिति-
र्धनग्रहोनीतिमृतेन कर्हिचित् ।
नृपात्मजस्योपयमेऽग्रिमस्य हि
जनानुमत्या द्रविणस्य संग्रहः ॥ ५१ ॥
इति प्रतिज्ञापरिपूर्णपत्रकं
नराधिपस्तत्परिवर्तितुं तदा ।

1. Stephen Langton. 2. Magna Charta.

सहायतां प्राप्य पुरोधसोऽन्यतः

पुनः प्रजादुःखकरो ह्यवोभवीत् ॥ ५२ ॥

टी०—रिपौ सुत इति। तदा नराधिपः रिपौ शत्रौ सुते पुत्रे पक्षविहीनसंस्थितिः पक्षरहितन्यायः नीतिमृते नयमन्तरा "ऋतिः सौत्रो धातुर्जुगुप्सार्थकः कृपार्थकश्च तत उणादिःक्ते प्रत्ययः" पृथग्विनेति सूत्रेण द्वितीया,पञ्चम्यनुवृत्तौ सत्यां ऋते योगे द्वितीया। पृथग्विनान्तरेणर्तेहिरुङ्नानाचवर्जने इत्यमरः। धनग्रहो वस्वादानं कर्हिचिन्न कदापि न हीति निश्चयेन अग्रिमस्य ज्येष्ठस्य नृपात्मजस्य राजकुमारस्योपयमे विवाहे जनानुमत्या लोकसम्मत्या द्रविणस्य द्रव्यस्य संग्रहो भूपतिना कर्तव्य इति सर्वत्रयोजना इति तत्पूर्वोक्तं राजधर्म्मविशिष्टं प्रतिज्ञापरिपूर्णपत्रकं नियमपरिपूर्णपत्रं मैग्नचार्टकंनाम परिवर्त्तितुमन्यथाकर्तुमन्यतोऽपरपक्षात् पुरोधसः कस्यापि पुरोहितस्य सहायतां साहाय्यं प्राप्य लब्ध्वा पुनर्भूयः प्रजादुःखकरो लोकप्रतोदनपरोऽवोभवीत् अतिशयेनाजायत "भूधातोर्यङ्लुकि लङि रूपम्"॥

भा०—उस समय राजा रिपु तथा शत्रुओं में पक्षरहित न्याय करना नीति के बगैर लोगोंसे धन न लेना प्रथम राजकुमारके विवाहमें लोगोंकी सम्मति से धन लेना इसतरह उस राजधर्म्मविशिष्ट अनेकनियमोंसे युक्त मैग्नचार्टक पत्र को बदलनेके लिये दूसरे पक्षवाले पादरीकी सहायता पाकर पुनः प्रजाको दुःख देनेवाला होगया ॥ ५१ । ५२ ॥

प्रजा विहन्तुं स्वपदातिसंयुतो

यदा बभूवाधिपतिस्तदा जनाः ।

सहायतां फ्रान्सनृपस्य[1] तत्क्षणा-

दलप्सताभीष्टतमामरिन्दमाम् ॥ ५३ ॥

टी०—प्रजा इति। यदा यस्मिन्समयेऽधिपतिर्भूपः प्रजाः प्रकृतीः विहन्तुं

1. King of France.

विशसितुं स्वपदातिसंयुतो निजसेनावृतो बभूव तदा तस्मिन् समये जनाः समग्रलोकास्तत्क्षणात्तत्कालात् अभीष्टतमामत्यन्तं स्पृहणीयां अरिन्दमां तन्नामिकां शत्रूणां स्तम्भिनीमिति भावः । "संज्ञायां भृतृवृजिधारिसहितपिभ्यः खच् इति खच्प्रत्ययः अरुर्द्विषदजन्तस्यमुम्" फ्रान्सनृपस्य सहायतामलप्सत प्रापन् ॥

भा०—जिससमय राजा जौन अपने पदातियों के साथ प्रजाके लोगों को मारने को उद्यत हुआ उसी समय प्रजावर्गने स्वमनोऽभिलषित शत्रुओं को दमन करनेवाली फ्रान्सदेशाधिपति की सहायता पाई ॥ ५३ ॥

रसेन्दुयुग्मेन्दुमिते शके तदा
परासुतामाश्वगमद्धरापतिः ।
अनेकमात्सर्य्यसमाश्रितं जनं
न धारयत्येव वसुन्धराऽऽकुला ॥ ५४ ॥

टी०—रसेन्दुयुग्मेन्द्विति । तदा तस्मिन्समये धरापतिर्महीभृत् रसेन्दुयुग्मेन्दुमिते षोडशाधिकद्वादशशतमिते क्रैष्टशके आशु शीघ्रं अत्यनर्थविधानसमय इतिभावः परासुतां परेतभावमगमदम्रियतेत्यर्थः वसुन्धराऽसमञ्जसकार्य्येणेति शेषः आकुला सती अनेकानि मात्सर्य्याणि तेषु समाश्रितं जनं पुरुषं नैव धारयतीत्यर्थान्तरन्यासालङ्कारः ॥

भा०—उस समय राजा जौन १२१६ ईसवी में शीघ्रही मृत्यु को प्राप्त होगया क्योंकि बुरे कामों से व्याकुल हुई पृथ्वी अनेक कपटादिदोषयुक्त पुरुष को धारण नहीं करती है ॥ ५४ ॥

अथापि जौनस्य सुतोऽप्रियः कृश-
स्तृतीयसंख्यः सरलश्च हेनरीः ।
रसेन्दुयुग्मेन्दुमिते शके तदा
नृपासनेऽस्थान्नववर्षकल्पकः ॥ ५५ ॥

---

1. John. 2. Henry III.

टी०—अथापीति । अथानन्तरमपि षोडशाधिकद्वादशशतमिते शके तदा नववर्षकल्पको नवहायनदेशीयः । "ईषदसमाप्तौ कल्पब्देश्य देशीयर इति कल्पप्प्रत्ययः" सरलो मृदुस्वभावः कृशश्छातकलेवरश्च तृतीयसंख्यो हेनरीजौनस्य राज्ञोऽग्रियो ज्येष्ठः सुतः । "अग्रशब्दात् घच्छौचेति सूत्रेण घप्रत्ययः घस्येय्" [ पूर्वजस्त्वग्रियोऽग्रज इत्यमरः ] नृपासने राज्यपीठेऽस्थात् ॥

भा०—अनन्तर उसी १२१६ ईसवी में नव वर्ष का कृशशरीरवाला सरल स्वभावयुक्त तृतीय हेनरीनामक जौनराजाका ज्येष्ठपुत्र राज्यासन पर बैठा ॥ ५५ ॥

मृषा प्रतिज्ञोऽसद्दशेऽधिकव्ययो-
ऽन्यदेशिनामुन्नतिदो नृपोऽभवत् ।
धियाल्पयाऽऽभ्यन्तरिकान् बहिष्कृतान्
करोति यः पात्रमसौ कथं श्रियः ॥ ५६ ॥

टी०—मृषेति । मृषाप्रतिज्ञोऽसत्यसंगरोऽसद्दशेऽयोग्ये कार्य्येऽधिको ऽनल्पो व्ययो यस्य तथाऽन्यदेशिनामपरदेशीयानां पुरुषाणामुन्नतिद ऐश्वर्य्यविधायकः "आतोऽनुपसर्गे कः" एवंविधो नृपो राजाऽभवत् यः पुरुषोऽल्पया धिया स्वबुद्ध्याऽऽभ्यन्तरिकान्पुरुषान् बहिष्कृतान् कार्य्यात् पृथक् करोति असौ पुरुषः श्रियः पात्रं भाजनं कथं भवतीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—यह राजा मिथ्या प्रतिज्ञावाला अयोग्यकार्य्यपर ज्यादः खर्च करने वाला परदेशियों का उन्नतिकारक हुआ क्योंकि अपनी अल्पबुद्धिसे भीतरी लोगों को जो बहिष्कृत करता है वह किसतरह लक्ष्मीका पात्र होसकता है ॥ ५६ ॥

पुरापि या राज्यमुखे पुरोधसां
मठाधिपानामभवन्सुसंसदः ।
धरेश्वरेऽस्मिन्सति पार्लिमेण्टया[1]
समाख्यया ख्यातिमगुर्हिताः क्षितौ ॥ ५७ ॥

1. Parliament.

टी०—पुरेति । हीति निश्चयेन पुरा पूर्वं राज्यस्यांग्लिशराज्यस्य मुखे प्रारम्भे मठाधिपानां मठेश्वराणां पुरोधसां पुरोहितानां याः सुसंसदः सुसभाः । समज्या परिषद्गोष्ठी सभासमितिसंसद इत्यमरः । अभवन् अजायन्त अस्मिन्धरेश्वरे राजनि सति "अत्र भावलक्षणे सप्तमी" ताः समज्याः क्षितौ पृथिव्यां पार्लिमेण्टया समाख्यया । "इत्थंभूतलक्षणे तृतीया" ख्यातिं प्रसिद्धिमगुः प्रापुः ॥

भा०—यह निश्चय है कि पहिले इंग्लिशराज्य के प्रारम्भ में मठधारी पादरियों की जो सभायें होती थीं इस तीसरे हेनरीराजाके होनेपर वे धरातलके बीच पार्लिमेण्ट करके प्रसिद्ध होगईं ॥ ५७ ॥

नृपेऽप्यनल्पव्ययिनि प्रमादिनि
कृताधिकाराः पुरुषाः पराङ्मुखाः ।
तदीयमावुत्तमथाभिमानिन-
मकुर्वताग्र्यं खलु मौण्टफर्टकम् ॥ ५८ ॥

टी०—नृप इति । अथानन्तरं खल्विति निश्चयेन प्रमादिनि असमीक्ष्यकारिणि नृपेऽपि अनल्पव्ययिनि अधिकव्ययविधायिनि सति "यस्य च भावेनेति सप्तमी" कृताधिकारा अधिकारवन्तः पुरुषाः पराङ्मुखा राज्ञो विमुखाः सन्तः अभिमानिनं गर्वयुतं तदीयं राज्ञ इत्यर्थः । "त्यदादीनि चेति वृद्धसंज्ञा वृद्धाच्छः छस्येय्" आवुत्तं भगिनीपतिं । [ भगिनीपतिरावुत्त इत्यमरः ] मौण्टफर्टकं तन्नामकं पुरुषं अग्र्यं समग्रकार्येषु मुख्यमकुर्वत व्यदधत ॥

भा०—अनन्तर यह निश्चय है कि प्रमादयुक्त राजा के अधिकव्ययी होनेपर वैमुख्य प्राप्त अधिकारिलोगोंने बड़े अभिमानी राजाके भगिनीपति साइमन्डीमौण्टफर्ट को मुख्याधिकारी बना लिया ॥ ५८ ॥

युगर्तुयुग्मेन्दुमिते शके समं
रणोऽभवत्सैमनकेन भूपतेः ।

1. & 2. Montfort ( Simon De ).

परेण रुग्णः ससुतोऽपि हेनरी[1]-
र्हतोद्यमो वन्दिगृहं समाविशत् ॥ ५९ ॥

टी०—युगेति । युगर्तुयुग्मेन्दुमिते चतुःषष्ट्यधिकद्वादशशतमिते क्रैष्टशके सैमनकेन सैमन्डीमौण्टफर्टेन समं सार्धं भूपतेर्हेनरीनामकस्य राज्ञो रणोऽभवत् ससुतः सपुत्रोऽपि हेनरीभूपः परेण शत्रुणा रुग्णः पीडितोऽतएव हतोद्यमो निहतोत्साहः सन् वन्दिगृहं शत्रोर्बन्धनालयं समाविशत् प्रविवेश । "अत्यन्तसंयोगे द्वितीया" ॥

भा०—१२६४ ईसवी में सैमण्डी मौण्टफर्टके साथ राजा हेनरीका संग्राम हुआ । अपने पुत्रसहित राजा हेनरीने शत्रुसे पीडित अतएव हतोत्साह होकर शत्रुके बन्धनालयमें प्रवेश किया ॥ ५९ ॥

प्रशासिताऽभूदिह मौण्टफर्टको[2]
न्यवेशयद्राष्ट्रसदोऽयमाशु तत् ।
इति प्रवृत्तिं परितोऽधिकारिणो-
वलोक्य तस्मै चुकुपुर्दिनेदिने ॥ ६० ॥

टी०—प्रशासितेति । इंग्लिशे देशे मौण्टफर्टकः प्रशासिता ऽशेषराज्यकार्य्यकर्ताऽभूत् अयं मौण्टफर्टक आशु शीघ्रं अधिकारप्राप्त्यनन्तरमेव तत्प्रसिद्धं राष्ट्रसदः समग्रराज्यसभामात्मनीनां सभामिति भावः न्यवेशयत् अस्थापयत् अधिकारिणः पुरुषाः परितः समन्तात् इति एवंविधां प्रवृत्तिमाचरणमवलोक्य निरीक्ष्य दिने दिने तस्मै मौण्टफर्टाय चुकुपुः क्रोधञ्चक्रुः । "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप इत्यनेन सूत्रेण सम्प्रदानत्वम्" ॥

भा०—इस इंग्लिशदेशमें मौण्टफर्ट शासनकर्ता हुआ । इसने अधिकार पातेही सारे देश की अपने हितार्थ एक प्रसिद्ध सभा स्थापन की । वहां के

1. Henry III. 2. Simon De Montfort.

अधिकारी लोग सर्वतः इस तरह की प्रवृत्ति देखकर प्रतिदिन इस मैण्टफर्ट के लिये कुपित हुए ॥ ६० ॥

ततः कुमारोऽपि स वन्दिवेश्मनः
कथञ्चिदस्मान्निरगादसाधनः ।
पुनर्ध्वजिन्या सहितोऽरिसम्मुखे
ह्युपाद्रवत् खड्गधरो धुरन्धरः ॥ ६१ ॥

टी०—तत इति । ततोऽनन्तरं हीति निश्चयेन असाधन उपायरहितोऽपि स कुमारो हेनरीपुत्रोऽस्माद्वन्दिवेश्मनः कारागारात् कथञ्चित्केनापि प्रकारेण निरगात् विमुक्तो बभूव । पुनर्भूयः खड्गधरः करवालधारको धुरन्धरः समर्थः कुमारो ध्वजिन्या सेनया सहितोऽन्वितः सन् अरिसंमुख उपाद्रवद् दुद्राव ॥

भा०—अनन्तर यह निश्चय है कि सहायहीन वह हेनरी का पुत्र किसी प्रकार से उस कारागार से निकल पड़ा और फिर सामर्थ्ययुक्त वह कुमार खड्गधारण कर सेनासहित होकर शत्रु के सामने दौड़ा ॥ ६१ ॥

अथैडवर्डः[1] स कृपाणधारया
शिरोंसकाद्विद्विषतो न्यपातयत् ।
ततस्तदीयो जनकोऽपि हेनरी[2]:
स्वराज्यपीठे पुनरप्युपाविशत् ॥ ६२ ॥

टी०—अथेति । अथानन्तरं स एडवर्डः कुमारः कृपाणधारयाऽसिधारया करणेन विद्विषतो मौण्टफर्टस्य अंसकात् स्कन्धात् [ स्कन्धो भुजशिरोंऽसोऽस्त्री त्यमरः । अंसः स्कन्धे विभागे स्यादिति हैमः ] शिर उत्तमाङ्गं न्यपातयत् पृथक् चकार ततोहीति निश्चयेन तदीयएडवर्डस्येत्यर्थः जनकस्तातः [ तातस्तु जनकः पिता इत्यमरः ] हेनरीरपि पुनर्भूयोऽपि स्वराज्यपीठे निजसिंहासन उपाविशत् निविष्टो बभूव ॥

---

1. Edward I. 2. Henry III.

भा०—अनन्तर उस एडवर्डनामक कुमार ने तरवार से मौण्टफर्ट का शिर अलग करदिया । अनन्तर उसका पिता हेनरी भी फिर अपने राज्यासन पर बैठा ॥ ६२ ॥

अथायनाश्वायनभूमिते शके
स शक्तिमान्सर्व्वजनातिगो जयी ।
नयीडवर्डः प्रियवागयान्वितो
नराधिपोऽभूज्जनतापहारकः ॥ ६३ ॥

टी०—अथेति । अथानन्तरं अयनाश्वायनभूमिते द्वासप्तत्यधिकद्वादशशतमिते क्रैष्टशके शक्तिमान् सामर्थ्ययुक्तः सर्वजनातिगो निखिलजनमान्यो जयी जयनशीलो ऽयान्वितः शुभावहविधियुक्तः प्रियवाक् मधुरवचनपरो ऽतएव जनतापहारको लोकसन्तापविनाशकः । "ण्वुल्तृचाविति सूत्रेण ण्वुल्प्रत्ययः युवोरनाकाविति वोरकादेशः" नयी नीतिमान् एडवर्डस्तन्नामको हेनरीपुत्रो नराधिपो ऽभूत् । अत्र परिकरालङ्कारः विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु स इति लक्षणात् ॥

भा०—अनन्तर १२७२ ईसवी में सामर्थ्ययुक्त सबसे श्रेष्ठ विजयशील मङ्गलोपेत प्रियवचनपरायण लोगों का सन्तापनाशक नयशील एडवर्डनामक हेनरीपुत्र राजा होगया ॥ ६३ ॥

ततो महीपेन विशेषवाग्मिना
विपक्षभावोपरतास्तदाँग्लिशाः ।
शनैःशनैरुच्चपदेषु लम्भिता
नराधिपं प्रेमभरैरुपासत ॥ ६४ ॥

टी०—तत इति । ततो ऽनन्तरं तदा तस्मिन्समये विशेषवाग्मिना ऽतिशययुक्तिपटुना महीपेन भूपतिना विपक्षभावे उपरता निष्कामा

1. Edward I.

अतएव शनैः शनैर्मन्दंमन्दमुच्चपदेषून्नतस्थानेषु लम्भिताः प्रापिता ऐंग्लिशा नराधिपं राजानं प्रेमभरैरुपासतासेवन्त ॥

भा०—अनन्तर योग्यवार्तकथनमें बड़े चतुर राजासे शत्रुभावरहित अतएव आहिस्ते आहिस्ते बड़ी पदवियोंको प्राप्त कियेगये ऐंग्लिशलोग अत्यन्त प्रेमसे राजाकी सेवा करनेलगे ॥ ६४ ॥

अथापि वेल्सं[1] विषयं विजित्य सः
स्वराष्ट्रभागे च नियोज्य तं तदा ।
शमेन तत्रत्यजनैरमायिभि-
र्बभूव भूपो ह्यधिराजशब्दभाक् ॥ ६५ ॥

टी०—अथेति । अथानन्तरमपि हीति निश्चयेन स भूपो वेल्सं नाम विषयं देशं विजित्य स्वायत्तीकृत्य मुदा हर्षेण स्वराष्ट्रभागे स्वविषयविभागे च तं नियोज्य मेलयित्वा शमेन शान्त्या ऽमायिभिश्छलरहितैस्तत्रत्यजनैर्वेल्सनिवासिभिरित्यर्थः करणभूतैरधिराजशब्दभाग्महाराजपदविशिष्टो बभूव ॥

भा०—अनन्तर वह राजा एडवर्ड वेल्सनामक देशको जीतकर और उसको अपने देशके हिस्सोंमें मिलाकर शान्तिसे कपटरहित वहांके लोगों से अधिराजपदविशिष्ट होगया ॥ ६५ ॥

ततश्च तन्मण्डलनेतृतार्थिनौ
विवादिनौ स्कौट[2]भुवां बभूवतुः ।
तयोर्विवादे त्विडवर्ड[3]भूपति-
रतिष्ठतामात्यसमर्पितक्रियः ॥ ६६ ॥

टी०—तत इति । ततो ऽनन्तरं स्कौटभुवां स्कौटदेशे द्वौ पुरुषौ तदेव मण्डलं तस्य या नेतृता प्रभुता तदर्थिनौ तदभिलाषवन्तौ अत एव विवादिनौ कलहयुतौ बभूवतुः अमात्येषु मन्त्रिषु । अमान्तिक-

1. Wales. 2. Scotland. 3. Edward I.

सहार्थयोरित्यव्यय तु—"अव्ययात्त्यप् अनेन सूत्रेण त्यप्प्रत्ययः"। समर्पिता निवेशिता क्रिया राज्यकृतिर्येन स इडवर्डो भूपतिस्तयोः पुरुषयोर्विवादेऽतिष्ठत। "प्रकाशनस्थेयाख्ययोश्चेति सूत्रेण स्थेयाख्यभावविषये तिष्ठतेरात्मनेपदम्"॥

भा०—अनन्तर स्कौटदेशमें वहांके स्वामित्वको चाहनेवाले दो पुरुष बड़े विवादयुक्त हुये। राजा एडवर्ड मन्त्रियोंके पास अपना सब काम देकर वहां उन दोनोंके विवादका निर्णयकरनेवाला हुआ॥ ६६॥

महीपतिर्जौनमतन्द्रमक्लमं
व्यधत्त नीत्यैव हि मण्डलाधिपम्।
तदाऽञ्जसा स्कौटजनाः पराङ्मुखा
नृपासनाज्जौनमपानयन् क्रुधा॥ ६७॥

टी०—महीति। हीति निश्चयेन महीपतिर्भूमीशो नीत्यैव नयेनैव ऽतन्द्रमालस्यरहितं अक्लमं ग्लानिरहितं जौनं तन्नामकं मनुजं मण्डलाधिपं तन्मण्डलनेतारं व्यधत्त कृतवान् तदा तदाधिपत्यप्राप्तिसमये पराङ्मुखा वैमुख्यंप्राप्ताः स्कौटजनाः स्कौटनिवासिनो लोका अञ्जसा शीघ्रं [स्राग्झटित्यञ्जसाह्नायेत्यमरः] क्रुधा कोपेन जौनं नृपासनात् तत्रत्यराज्यपीठाद् अपानयन् पृथक् चक्रुरित्यर्थः॥

भा०—राजा एडवर्डने नीतिही से अनलस और ग्लानिरहित जौननामक पुरुषको स्कौटदेशका स्वामी बना दिया। उससमय उसकी राज्यप्राप्तिसे विमुख स्कौटदेशीयलोगोंने शीघ्रही जौनको राज्यासनसे पृथक् कर दिया॥ ६७॥

ततः परं वेल्यसंकाख्यमग्रगं
विधाय सर्व्वे मनुजास्तदाङ्ग्लिशान्।

---

1. John Balliol. 2. Scots. 3. Wallace.

कुबुद्धयः पुंस इवोपकारिणः
स्वमण्डलात्साधुमतीन्न्यवारयन् ॥ ६८ ॥

टी०—तत: परमिति । ततः परमनन्तरं तदा तस्मिन्समये सर्वे मनुजाः स्कौटवासिनो जना वेल्यसकाख्यं वेल्यसनामधेयं कञ्चित्पुरुषमग्रगं । "अन्तात्यन्तेति सूत्रोपात्तशब्देषूपपदेषु गमेर्डप्रत्यये कृते अन्यत्रापि दृश्यत इति वक्तव्यमिति वार्तिकेन गमेर्डः डित्वाट्टिलोपः" । सेनाग्रगण्यं विधाय कृत्वा साधुमतीन् साध्वी मतिर्बुद्धिर्येषां तथाविधान् ऐंग्लिशान् कुबुद्धयः कुत्सितमतयः पुरुषा उपकारिणः परोपकारवतः पुंसो जनान् इव स्वमण्डलात् स्वदेशात् न्यवारयन् निरकाशयन् ॥

भा०—अनन्तर उससमय स्कौटवासीलोगोंने वेल्यसनामक पुरुषको मुख्य बनाकर अच्छी बुद्धिवाले ऐंग्लिश लोगों को दुष्टबुद्धिवाले लोग उपकारी पुरुषों को जैसा अपने देशसे निकाल दिया ॥ ६८ ॥

अथैडवर्डो[1] विषये जिगीषया-
ऽरिवर्गमार्तर्दितुमाचकाङ्क्ष सः ।
समेत्य तत्राजिमखान्तिमं बलिं
चकार तं वेल्यसकाख्यमुत्कटम्[2] ॥ ६९ ॥

टी०—अथेति । अथानन्तरं हीति निश्चयेन एडवर्डो भूपतिर्जिगीषया विषये स्कौटदेशे ऽरिवर्गं शत्रुसंघमातर्दितुं हिंसितुमाचकाङ्क्ष इयेष स भूपः तत्र स्कौटे उत्कटमुच्छृङ्खलं वेल्यसकाख्यं नाम पुरुषं आजिरेव मखः तस्यान्तिमं रणयज्ञान्तप्रतिपादितं बलिमुपहारं चकार कृतवान् ॥

भा०—अनन्तर एडवर्डराजाने स्कौटदेशमें शत्रुओंको नाशकरनेके लिये इच्छा की । उसने वहां जाकर उस बलिष्ठ वेल्यस को रणयज्ञका अन्तिम बलि करदिया ॥ ६९ ॥

---

1. Edward I. 2. Wallace.

ततः प्रयाते समये कियत्यपि
बली रूबार्टब्रुसनामको ऽपरः ।
पराजितान् स्कौटनिवासिनो जनान्
अनन्दयद्राज्यसुखाभिलाषुकः ॥ ७० ॥

टी०—तत इति । ततो ऽनन्तरं कियत्यपि समये प्रयाते सति रूबार्टब्रुसनामको ऽपरो बली शक्तिमान्पुरुषो राज्यसुखस्याभिलाषुकः । "लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् इत्युकञ् प्रत्ययः" । एवंविधः सन् पराजितान् हृतश्रिय ऐंग्लिशैरिति शेषः । एवंविधान् स्कौटनिवासिनो जनान् अनन्दयत् प्रसन्नानकरोदित्यर्थः ॥

भा०—अनन्तर कितनेही समय बीतने पर राज्यसुखाभिलाषी रूबार्टब्रुसनामक दूसरे बलवान् पुरुषने अंग्रेजोंके हराये हुये स्कौटनिवासी लोगों को प्रसन्न करदिया ॥ ७० ॥

अथैडवर्डः पुनरेव तां भुवं
ययौ ससैन्यो ऽमितपौरुषावृतः ।
स कार्लइल्स्थानमवाप्य संमुदा
सुरम्यभूमौ शिबिरं व्यधापयत् ॥ ७१ ॥

टी०—अथेति । अथानन्तरं अमितपौरुषावृतो ऽतुलविक्रमोपेतः ससैन्य एडवर्डः पुनरेव भूयोऽपि अत्रैवकारो ऽप्यर्थः तां भुवं स्कौटदेशभूमिकां ययौ गतवान् स भूपः कार्लइल्स्थानं तन्नाम स्थानविशेषमवाप्योपगम्य संमुदा हर्षेण सुरम्यभूमौ रमणीयभूभागे शिबिरं सेनानिवेशम् [ निवेशः शिबिरं षण्ड इत्यमरः ] व्यधापयत् अकारयत् ॥

भा०—अनन्तर अतुलविक्रमोपेत राजा एडवर्ड सेनाके साथ स्कौटनाम देश को गया । उस रजाने वहां कार्लइल स्थान को पहुँच कर अच्छे रमणीय स्थानपर सेनानिवेश कराया ॥ ७१ ॥

1. Robert Bruce. 2. Scots. 3. Ewdard I. 4. Carlisle.

ततो ऽर्धरात्रे ऽनुचरादिभिर्भृशं
सुसेव्यमानो नृपतिर्हरिं स्मरन् ।
अनित्यमेतद्भुवनं विहाय सः
सुखेन लोकान्तरमञ्जसाभ्यगात् ॥ ७२ ॥

टी०—तत इति । ततो ऽनन्तरं अनुचरादिभिः सेवकादिभिः आदिपदात् स्वज्ञातिपरिग्रहः सुसेव्यमान उपास्यमानो नृपतिर्हरिं स्मरन्सन् अनित्यं भंगुरमेतद्भुवनं विहाय रहयित्वा ऽर्धरात्रे । "अहः सर्वैकदेश संख्यातपुण्याच्च रात्रेः अच् प्रत्ययः स्यात्" सुखेनाञ्जसा शीघ्रं लोकान्तरं परलोकमभ्यगात् प्रापत् ॥

भा०—अनन्तर अनुचरोंसे सेव्यमान, ईश्वरका स्मरण करता हुआ राजा एडवर्ड अनित्य इस संसारको छोड़कर आधीरातके समय सुखसे जल्दीही परलोकको सिधारा ॥ ७२ ॥

अथैडवर्डस्य महीपतेः सुतो
वृथाव्ययी छातकलेवरो नृपः ।
द्वितीयसंख्यस्त्विडवर्डकोऽभवत्
सुतेजसां स्थूलतनुर्नहीक्ष्यते ॥ ७३ ॥

टी०—अथेति । अथानन्तरं वृथाव्ययी अकार्य्यव्ययकर्ता छातकलेवरः कृशशरीरः [ अमांसो दुर्बलश्छात इत्यमरः ] महीपतेरेडवर्डस्य सुतस्तनूजो द्वितीयसंख्य एडवर्डको नृपो राजा ऽभवत् हीति निश्चयेन सुतेजसां पराक्रमविशिष्टानां पुरुषाणां स्थूलतनुः नेक्ष्यते नावलोक्यते नविचार्य्यत इति यावत् ॥

भा०—अनन्तर अकार्य्यमें व्ययकरनेवाला कृशशरीरयुक्त राजा एडवर्ड

---

1. Edward I. 2. Edward II.

का पुत्र द्वितीयसंख्यक एडवर्डनामक राजा होगया । यह निश्चय है कि तेजस्वी पुरुषों का स्थूलशरीर नहीं देखा जाता है ॥ ७३ ॥

अथो ब्रुसाख्योऽकृत चैंग्लशैर्यदा
समं रणं रेणुकणान्धिताचलम् ।
तदैव तेनैंग्लिशमानवा हठा–
न्निराक्रियन्तापहृतार्थसंचयाः ॥ ७४ ॥

टी०—अथो इति। अथो ऽनन्तरं यदा यस्मिन्समये ब्रुसाख्यः पुरुषः ऐंग्लिशैर्जनैः समं सार्धं रेणुकणैर्धूलिकणैरन्धिता ऽन्धकारयुक्ता ऽचला पृथ्वी यस्मिन् तथाविधं रणं संग्राममकृत व्यधत्त तदैव तेन ब्रुसाख्येन अपहृता अर्थसंचया येषां ते ऐंग्लिशा हठाद् बलात्कारात् निराक्रियन्त अपानीयन्त ॥

भा०—जिस समय ब्रुसाख्यने ऐंग्लिशोंके साथ तुमुल संग्राम किया उसी समय उसने सब अंग्रेजोंको जबरदस्ती लूट छीनकर निकाल दिया ॥ ७४ ॥

अथाधिराजस्त्विडवर्डसंज्ञको
ह्युपाशृणोद्दुर्जनवैकृतं यतः ।
महाध्वजिन्या सह तं च मण्डलं
ययावसौ वीररसाभिपूरितः ॥ ७५ ॥

टी०—अथेति । अथानन्तरं इडवर्डसंज्ञको ऽधिराजो दुर्जनानां वैकृतं विरुद्धाचरणमुपाशृणोत् चारेभ्य इति शेषः यतो यस्मात्कारणाद् असौ भूपो वीररसेनाभिपूरितः सन् महाध्वजिन्या सेनया सह तं स्कौटं मण्डलं च ययौ ॥

भा०—अनन्तर एडवर्डनामक भूपतिने दुर्जनोंके दुष्टाचरणको सुना जिससे कि राजा बड़े क्रोधमें आकर बड़ी सेनाके साथ स्कौटदेशको जा पहुँचा ॥ ७५ ॥

---

1. Edward II.

युगेन्दुवह्नीन्दुमिते शके मृधे
विनोकूवर्रन्स्थानविशेषके नृपः ।
पराजितोऽभूदरिभिर्मदोच्छ्रितै-
रतो जनस्तत्र निरङ्कुशोऽभवत् ॥ ७६ ॥

टी०—युगेति । नृपो भूपतिर्युगेन्दुवह्नीन्दुमिते चतुर्दशाधिकत्रयोदशशतमिते क्रैष्टशके विनोकूवरनस्थानविशेषके विनोकूवरनूरणक्षेत्रे मृधे संग्रामे मदोच्छ्रितैरुन्मत्तैररिभिः शत्रुभिः पराजितो विजितोऽभूत् अतोऽस्मात् कारणात् तत्र तस्मिन् देशे जनस्तत्रत्यलोको निरंकुशो यथेच्छाचरणोऽभवत् ॥

भा०—राजा एडवर्ड १३१४ ईसवी में विनोकूवरनूनामक संग्रामस्थलमें युद्धमें प्रबल शत्रुओं से हारगया जिस कारण से कि वहां के आदमी निरंकुश होगए ॥ ७६ ॥

ततः स्वराष्ट्रे विनिवर्तितेन ते
महीक्षिता वैरनसंज्ञकाः समम् ।
अयुत्सतासत्पथगामिनोऽशमा
ध्रुवं विगृह्णन्ति नृपं सुखप्रदम् ॥ ७७ ॥

टी०—ततइति । ततोऽनन्तरं ते वैरनसंज्ञका राजसेवकाः स्वराष्ट्रे निजविषये विनिवर्तितेन प्रत्यागतेन महीक्षिता महीं क्षियति । "क्षि निवासगत्योः तुदादिः, मह्यां क्षयति क्षि क्षयैश्वर्ययोः भ्वादिरयं धातुः ततः क्विपि तुगागमः" । तेन राज्ञा सममयुत्सत युयुधिरे ध्रुवमिति निश्चयेन असत्पथे कुमार्गे । "ऋक्पूरब्धूः पथामानक्षे इत्यप्रत्ययः" । गमने शीलं येषां ते "सुप्यजातौ णिनिस्ताच्छील्ये इति णिनिः णित्त्वादुपधादीर्घः" । एवंविधाः अशमाः शान्तिरहिताः सुखप्रदम् । "आतश्चो-

1. Bannockburn. 2. Barons.

पसर्ग इति कः प्रत्ययः" । आनन्ददायकं नृपं विगृह्णन्ति विग्रहयुक्तं कुर्वन्तीत्यर्थान्तरन्यासालङ्कारः उत्प्रेक्षालङ्कारोऽपि अतः संसृष्टिः ॥

भा०—अनन्तर प्रसिद्ध कलहप्रिय वैरनलोगोंने स्वदेशमें लौटेहुए राजाके साथ युद्ध किया । यह बात ठीक है कि कुमार्गगामी क्रोधीलोग सुख देनेवाले राजा के साथ विरोध करते हैं ॥ ७७ ॥

नृपस्य भार्य्याऽपि निकृष्टवंशजा
विपक्षभावैः सह सन्धिमाहिता ।
व्यधत्त पत्युर्निधनं हि गर्हिताः
स्त्रियोऽनुकूलं प्रतिजानतेऽशुभम् ॥ ७८ ॥

टी०—नृपस्येति । निकृष्टवंशजा हीनकुलोत्पन्ना नृपस्यैडवर्डस्य भार्य्या भरणयोग्या नत्वानन्ददायिनी स्त्री विपक्षभावैः शत्रुभिः सह सन्धिं सन्धानमाहिता प्राप्ता सती पत्युः स्वभर्तुर्निधनं मरणं व्यधत्त कृतवती, गर्हिता निन्दिताः स्त्रियोऽशुभममङ्गलं अनुकूलं योग्यं प्रतिजानते मन्यन्ते ॥

भा०—हीनकुलोत्पन्न राजा एडवर्ड की स्त्री ने वैरनों के साथ मिलकर राजा का मरण करादिया, क्योंकि निन्दित स्त्रियां बुरी बात को अच्छी समझती हैं ॥ ७८ ॥

अथैडवर्डस्य सुतो बलोद्धत-
स्तृतीयसंख्यस्त्विडवर्डकोऽनघः
शमेन शौर्य्येण धियाऽऽगमेन च
स्वताततुल्यो नरपालकोऽजनि ॥ ७९ ॥

टी०—अथेति । अथानन्तरं बलोद्धतो बलिष्ठोऽनघः शुद्ध एडवर्डस्य राज्ञः सुतः पुत्रः तृतीयसंख्य इडवर्डकस्तु शमेन शान्त्या शौर्य्येण पराक्रमेण धिया बुद्ध्या आगमेन शास्त्रेण च स्वताततुल्यो निजपितृसमः सन् नरपालको भूपतिः अजनि अजायत अभूदिति यावत् ॥

1. Edward III.

भा०—अनन्तर बलवान् और शुद्ध राजा एडवर्ड का पुत्र शान्ति पराक्रम बुद्धि और शास्त्र से अपने पिता के समान होकर तृतीय एडवर्ड नामक राजा होगया ॥ ७९ ॥

महीपतौ कुर्वति राज्यमानयं
महाहवः फ्रान्स[1]महीभुजा समम् ।
बभूव गाइस्का[2]निदेशवाञ्छता
शतं समा भूमिभृतोऽस्य मानिनः ॥ ८० ॥

टी०—महीति । महीपतौ राज्ञि आनयं नयं मर्यादीकृत्येत्यानयं नीतिपूर्वकं यथा तथा राज्यं कुर्वति सति मानिनो मानवतोऽस्य राज्ञो गाइस्कानिनामा देशस्तं वाञ्छता इच्छता फ्रान्समहीभुजा फ्रान्सेश्वरेण समं सार्धं शतं समा वर्षशतं महाहवो बृहद्युद्धं बभूव ॥

भा०—इस राजाके नीतिपूर्वक राज्यकरनेपर अहङ्कारयुक्त इस एडवर्ड राजाका गाइस्कानिदेशको चाहनेवाले फ्रान्सनरेशके साथ सौवर्षका बड़ा संग्राम हुआ ॥ ८० ॥

ममैव मातामहपीठमग्रिमं
ममैव तत्फ्रान्स[3]पतित्वमग्रतः ।
इतीडॅवर्ड[4]ः कृतनिश्चयः पुन-
र्विधातुमाजिं चकमे ऽरिणा सह ॥ ८१ ॥

टी०—ममैवेति । मम एवाग्रिमं मुख्यं मातामहस्य पीठं सिंहासनमस्ति तत्तस्मात्कारणाद् अग्रतो मुख्यतो मम एव फ्रान्सपतित्वं फ्रान्सदेशस्वामित्वमस्ति इडवर्ड इतीत्थं कृतनिश्चयः सन् पूर्वमिति शेषः पुनर्भूयोऽरिणा शत्रुणा सह आजिं युद्धं विधातुं कर्तुं चकमे उद्युक्तो बभूव ॥

1. King of France. 2. Gascony. 3. Kingdom of France. 4. Edward III.

भा०—मेरे मातामहको मुख्य सिंहासन यह है इसीकारण पहिले मेरा ही फ्रान्सपतित्व का अधिकार है राजा एडवर्ड इसतरह निश्चयकर फिर शत्रुके साथ युद्धकरनेको तैयार हुआ ॥ ८१ ॥

स्वमात्रधीकारमवेक्ष्य कर्हिचि-
न्नकोऽपि राज्याधिकृतो भविष्यति ।
इति ह्ययं फ्रान्सजनाधिपो रणं
रसाब्धिवह्नीन्दुमिते शके व्यधात् ॥ ८२ ॥

टी०—स्वेति । कोऽपिपुरुषः कर्हिचित्कदापि स्वमातुर्निजजनन्या अधीकारं स्वत्वं । "उपसर्गस्य घञ्यमनुष्ये बहुलम् इत्युपसर्गस्य दीर्घत्वम्" । अवेक्ष्य विगणय्य राज्यस्याधिकृतो राज्याधिकारी न भविष्यति हीति निश्चयेन अयं फ्रान्सजनाधिप इति हेतो रसाब्धिवह्नीन्दुमिते षट्चत्वारिंशदधिकत्रयोदशशतमिते क्रैष्टशके रणं युद्धं शत्रुणा सहेति शेषः व्यधात् अकार्षीत् ॥

भा०—कोई पुरुषभी कभीभी अपनीमाताके अधिकारको विचार कर राज्याधिकारी नहीं होवेगा इसकारण फ्रान्सदेशाधिपतिने १३४६ ईसवी में लड़ाई शुरू की ॥ ८२ ॥

अथैडवर्डोऽखिलान्तकोरणे
रसेषुवह्नीन्दुमिते शके रयात् ।
रिपोश्च कैलं नगरं तदाञ्जसा
स्वसैनिकैरावृते समन्ततः ॥ ८३ ॥

टी०—अथेति । अथानन्तरं तदा अरिबलस्य अन्तको यमस्वरूपः एडवर्डो राजा रसेषुवह्नीन्दुमिते षट्पञ्चाशदधिकत्रयोदशशतमिते क्रैष्टशके रणे युद्धे रिपोः शत्रोश्च कैलं एतन्नामकं नगरं रयात् वेगात् अञ्जसा

1. Edward III. 2. Calais.

शीघ्रं स्वसैनिकैर्निजसेनाभटैः समन्ततोऽभित आवृते परिवृतं चकार ॥

भा०—अनन्तर उससमय अरिसेनाके नाशकरनेवाले राजा एडवर्डने १३५६ ईसवी में युद्धमें शत्रुका कैलनामक नगरको वेगसे जल्दीही चारों तरफ़ से अपने सैनिकलोगोंसे घेर दिया ॥ ८३ ॥

स जौनभूपःफिलिपात्मजस्तदा
हताहतेत्युद्धतनादमूर्च्छितः ।
पदातिभिः फ्रान्सनरेश्वरो भृशं
सुवन्दिवेश्मन्यविशन्महीभुजः ॥ ८४ ॥

टी०—स इति । तदा तस्मिन् युद्धसमये फिलिपात्मजः फिलिपाख्यस्य पुत्रः फ्रान्सेश्वरः स जौननामा भूपो हत आहत मारयत ताडयत इतीत्थं उद्धतनादेन मूर्च्छितः सन् महीभुज एडवर्डस्य पदातिभिर्भृशमत्यर्थं सुवन्दिवेश्मनि दृढकारालयेऽविशत् प्रविवेश ॥

भा०—उस युद्धसमयमें राजा फिलिपका पुत्र फ्रान्सदेशाधिपति वह जौननामकराजा मारो मारो इस तरह उद्धत शब्द से मूर्च्छायुक्त होकर राजा एडवर्ड के पदचारी सैनिकोंसे अत्यन्त दृढकारागारमें प्रवेशयुक्त होगया ॥ ८४ ॥

ततस्तयोर्भूमिभृतोः परस्परं
व्रिटीग्निदेशे शुभसन्धिराजनि ।
यतो महीपस्त्विडवर्डसंज्ञकः
सचास्तनोफ्रान्सनृपासने तदा ॥ ८५ ॥

टी०—तत इति । ततोऽनन्तरं भूमिभृतोरतयोरिंग्लिशफ्रान्सदेशाधिपत्योः व्रिटीग्निदेशे परस्परमन्योऽन्यं शुभसन्धिः आजनि बभूव यतो यस्मात्कारणात्तु तदा तस्मिन्समये स इडवर्डसंज्ञको महीपश्च फ्रान्सनृपासने नो आस्त नोपाविशत् ॥

1. John. 2. Philip. 3. King of France. 4. Bretigny. 5. Edward III. 6. France.

भा०—अनन्तर इंग्लिश और फ़्रान्सदेशाधिपतियों का परस्पर ब्रिटीग्नि-देश में अच्छा मिलाप होगया जिससे कि उससमय एडवर्ड राजा फ़्रान्सेश्वर के राज्यासनपर न बैठा ॥ ८५ ॥

महोपदायामिडवर्डभूभुजे
बृहद्विभागं विषयस्य चात्मनः ।
अनेकमुक्ताफलरत्नहाटकं
न्यवेदयत्फ्रान्समहीभृदादरात् ॥ ८६ ॥

टी०—महेति । फ़्रान्समहीभृत् फ़्रान्सेश्वरः इडवर्डमहीभुजे तन्नामकाय राज्ञे उपदायां उपायने [ उपायनमुपग्राह्यमुपहारस्तथोपदा इत्यमरः] अनेकानि मुक्ताफलानि रत्नानि हाटकानि एतेषां समाहारः । "जातिरप्राणिनामित्येकवद्भावः समाहारे नपुंसकत्वम्" [ स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकमित्यमरः ] तत् आत्मनो विषयस्य देशस्य बृहद्विभागं च आदरात् न्यवेदयत् अर्पितवान् ॥

भा०—अनन्तर फ़्रान्सदेशाधिपति ने एडवर्डराजाकेलिये भेटमें कई एक मौक्तिक रत्न सुवर्ण और अपने देशका एक हिस्सा बड़े आदरपूर्वक निवेदन किया ॥ ८६ ॥

अथो महीं शासति भूमिपे महान्
बलैकडेथाख्यगदोऽभवद्भृशम् ।
अनेन ते नन्दनवासिनो विषु
मृतिं हि नेमे मनुजाः समाययुः ॥ ८७ ॥

टी०—अथो इति । अथोऽनन्तरं भूमिपे ऽस्मिन्निडवर्डे महीं पृथ्वीं शासति सति महान् प्रबलो बलैकडेथ आख्या यस्यैवंविधो गदो रोगो भृशमत्यर्थं अभवत् अनेन रोगेण ते नन्दनवासिनो नेमे ऽर्धे । "प्रथम

1. Black Death. 2. London.

चरमेति जसि वा सर्वनामसंज्ञा" । मनुजाः विषु अभितः मृतिं मरणं समाययुः प्रापुः ॥

भा०—अनन्तर इसी राजा एडवर्डके राज्यशासन करनेमें एक बड़ा भारी ब्लैकडेथनामक रोग हुआ जिससे वे नन्दनवासी आधेलोग मृत्युको प्राप्त होगये ॥ ८७ ॥

असूयकः फ्रान्सनराधिपः[1] पुन-
र्युयुत्सया तत्र पताकिनीयुतः ।
उपेयिवान्नन्दन[2] एव शात्रवात्
पदातिभिः सार्धमयुध्यताग्रतः ॥ ८८ ॥

टी०—असूयक इति । असूयकः सेर्ष्यः फ्रान्सनराधिपः पुनर्भूयः युयुत्सया योद्धुमिच्छया पताकिनीयुतः सेनासहितः सन् शात्रवाच्छत्रुभावात् तत्र नन्दने नगर एव उपेयिवान् । "उपेयिवाननाश्वाननूचानश्च एते निपात्यन्ते । उप पूर्वादिणो भाषायामपि भूतमात्रे लिड् वा तस्यनित्यं क्सु इट्" । प्राप्तवान् अग्रतः पदातिभिः सार्धं इडवर्डस्येति शेषः अयुध्यत ॥

भा०—ईर्षा करनेवाले फ्रान्सनरेशने फिर युद्धकी इच्छासे सेनासहित शत्रुभावसे नन्दननगर को ही पहुंचकर पहिले राजा एडवर्डके पदातियों के साथ युद्ध किया ॥ ८८ ॥

नगाद्रिवह्नीन्दुमिते शके तदा
सुखास्थितं नन्दनभूमिपं गृहे ।
अतर्कितोपस्थितिरन्तकोऽदयो
गतामुतां प्राप यदाशु सौख्यदम् ॥ ८९ ॥

टी०—नगेति । अतर्किता ऽसंभाविता उपस्थितिः प्राप्तिर्यस्यैवंवि-

1. King of France. 2. London.

धोऽदयो दयाशून्योऽन्तको यमो नगाद्रिवह्नीन्दुमिते सप्तसप्तत्यधिक त्रयोदशशतमिते क्रैष्टशके सौख्यदं सुखप्रदं गृहे स्वोदवसिते सुखास्थितं आनन्दोपविष्टं नन्दनभूमिपं इडवर्डनामानं नृपं आशु शीघ्रं गतासुतां पञ्चत्वं प्रापयद् अगमयत् ॥

भा०—उससमय अकस्मात् प्राप्त होनेवाले निर्दय यम ने १३७७ ईसवी में सबलोगोंको सुख देनेवाले स्वगृहमें आनन्द से बैठेहुये नन्दनेश एडवर्ड को शीघ्रही मृत्यु को प्राप्त करादिया ॥ ८९ ॥

अथो द्वितीयो हि रिचार्डकाभिधो
नगाद्रिवह्नीन्दुमिते शके तदा ।
शुभेऽह्नि पैतामहकं नृपासनं
समं समध्यास्त नृणां मनांसि च ॥ ९० ॥

टी०—अथेति । अथोऽनन्तरं हीति निश्चयेन तदा नगाद्रिवह्नीन्दुमिते सप्तसप्तत्यधिकत्रयोदशशतमिते क्रैष्टशके द्वितीयोरिचार्डकाभिधः शुभेऽह्नि सुदिवसे मुदा हर्षेण पैतामहकं पितामहसम्बन्धि "विद्यायोनिसम्बन्धेभ्योवुञ् । तद्धितेष्विति आदिवृद्धिः । युवोरनाकावित्यकादेशः" नृपासनं राज्यपीठं नृणां लोकानां "नृचअस्यनामित्वादीर्घः" मनांसि चेतांसि च । अतिमनोहरत्वादितिभावः । समंएककालावच्छेदेन समध्यास्त उपाविशत् "अधिशीङ्स्थासां कर्म इत्याधारस्य कर्मत्वम्" अत्रातिशयोक्तिरलङ्कारः कार्य्यकारणयोः पौर्वापर्य्यविपर्ययश्च कारणात्पूर्वं कार्य्यस्यभावे द्वयोः समकालत्वेनेति द्विधा ॥

भा०—अनन्तर यह निश्चय है कि उससमय १३७७ ईसवीमें द्वितीय रिचार्ड अच्छे मुहूर्तपर हर्षके साथ पितामहके राज्यासनमें और साथही लोगोंके चित्तोंमें भी बैठा ॥ ९० ॥

---

1. Richard II.

वृथैव हि फ्रान्सपतेर्महाहवः
समन्तदा नन्दनभूमिपैरभूत् ।
अनल्परौप्यापगमैककारणं
प्रजासुखोन्मूलकरोऽतिदुःसहः ॥ ९१ ॥

टी०—वृथेति । तदा तस्मिन्समये फ्रान्सपतेः फ्रान्सेश्वरस्य नन्दन-भूमिपैर्नन्दनाधिपतिभिः समं सार्धं अनल्पानि यानि रौप्याणि तेषामपगमो व्ययस्तस्यैककारणं मुख्यहेतुः तथा प्रजायाः सुखस्य उन्मूलकर उत्खातकः अतएव अतिदुःसहः सोढुमशक्यो महाहवः संग्रामो वृथाएवाभूत् ॥

भा०—उससमय फ्रान्सेश्वरका नन्दनाधिपतियोंके साथ अधिक रुपयोंका व्यय करनेवाला तथा प्रजाके सुखका नाशक बड़ा भयङ्कर संग्राम व्यर्थही हुआ ॥ ९१ ॥

यतो रिचार्डेन च वस्त्रवाप्तये
करातिभारः प्रकृतावधार्यत ।
अतः प्रजा सन्ततखिन्नमानसा
नृपानुशिष्टौ विमुखी बभूव सा ॥ ९२ ॥

टी०—यतइति । यतोऽतिव्ययकारणात् रिचार्डेन राज्ञा च वस्त्र-वाप्तये द्रव्यलाभाय प्रकृतौ प्रजायां करातिभारो बलिभारो ऽधार्य्यत आरोप्यत अतः कारणात् सन्ततं निरन्तरं खिन्नं मानसं यस्याः सा प्रजा प्रकृतिर्नृपानुशिष्टौ भूपाज्ञायां विमुखीबभूव पराङ्मुखतां प्राप ॥

भा०—इस अधिक व्यय होनेके कारण राजारिचार्डने द्रव्यप्राप्तिके लिये प्रजापर अधिक कर लगाया जिससे कि अत्यन्त खिन्न प्रजा राजाकी आज्ञामें विमुख होगई ॥ ९२ ॥

---

1. France. 2. London. 3. Richard II.

ततश्च तेष्वेव दिनेषु टैलरो
ययौ तदग्रे सरतां कृतोद्यमः ।
तदा महीभृत्कृतलोकसत्क्रियः
करार्धभागं जगृहे समन्ततः ॥ ९३ ॥

टी०--ततइति । ततोऽनन्तरं तेष्वेवदिनेषु टैलरोनाम कश्चित्पुरुषः कृतोद्यमो विहितोद्योगःसन् तदग्रे सरतां तेषां प्रतिकूलानां अग्रगण्यभावं "पुरोऽग्रतोऽग्रेषु सर्तेः ट प्रत्ययःस्यात् । सूत्रे अग्रे इति एदन्तत्वमपि निपात्यते ततो भावे तल्" ययौ प्राप तदा कृतलोकसत्क्रियो विहितजनसंमानो महीभृत् राजा समन्ततः करार्धभागं जगृहे ॥

भा०--अनन्तर उन्हीं दिनोंमें बड़ा उद्योगी टैलरनामक पुरुष उन राजप्रतिकूल लोगोंका अग्रगण्य होगया उससमय लोगोंको सन्मान करतेहुए राजाने सब लोगोंसे करका आधा भाग लिया ॥ ९३ ॥

तथापि वैमुख्यमुपागताः खला
नरान्विजघ्नुर्जनितागसोऽपरे ।
समग्रपौरेषु नृपापकारिणी-
मकुर्वताख्यां भयदायिनीं नृणाम् ॥ ९४ ॥

टी०--तथेति । तथापि राज्ञा करार्धभागे गृहीते सत्यपि वैमुख्यं विमुखतां उपागताः प्राप्ताः खलाः समग्रपौरेषु अशेषनगरवासिषु विषये नृपस्य अपकारिणीं नृणां भयदायिनीं भीत्युत्पादिनीमाख्यामाख्यानं कथनमकुर्वत ॥

भा०--राजाके आधा करलेने परभी शत्रुभावको प्राप्त दुष्टलोगोंने कईएक आदिमी मारदिये और अपराधीलोग सबलोगोंके बीच राजाको हानि पहुंचानेवाली और लोगोंको भय दिखलानेवाली उक्ति करनेलगे ॥ ९४ ॥

1. Wat Tyler.

स्मिताह्वये क्षेत्रविशेषके ततः
समं नृपो द्वेषकराग्रगामिभिः ।
चकार जन्यं रुधिरौघवर्षि हि
क्षये नराः सन्ति धिया परिच्युताः ॥ ९५ ॥

टी०--स्मितेति । ततोऽनन्तरं नृपो भूपः स्मिताह्वये स्मितनामके क्षेत्रविशेषे द्वेषकराणां विद्वेषिणां अग्रगामिभिर्मुख्यैः समं सार्धं रुधिरौघं असृङ्निवहं वर्षतीति तज्जन्यं युद्धं चकार कृतवान् हीति निश्चयेन क्षये विनाशे नरा मनुष्या धिया बुद्ध्या परिच्युताः सन्ति भवन्तीत्यर्थः इत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—अनन्तर राजाने स्मितनामक रणक्षेत्रमें द्वेषियोंके साथ रुधिरनिवह को वर्षानेवाला संग्राम किया यह बात ठीकहै कि विनाशकालमें मनुष्य विनष्ट बुद्धिके होजाते हैं ९९ ॥

ततश्च विद्वेषकरं हि टैलरं
महाजिसत्रज्वलितक्रुधाग्निषु
नृपोऽपि जन्याध्वरदीक्षितः क्षणा-
ज्जुहाव खड्गस्रुचया नयास्पदम् ॥ ९६ ॥

टी०—तत इति । ततोऽनन्तरं जन्यं युद्धमेवाध्वरो यज्ञस्तत्र दीक्षितः कृतसंकल्पो राजापि अनयो ऽनीतिस्तदास्पदं तत्स्थानभूतम् “आस्पदं प्रतिष्ठायामिति सुट् निपात्यते” अतएव विद्वेषकरं टैलरं महाजिरायोधनं तदेवसत्रं यज्ञस्तस्मिन्ज्वलिताः प्रदीप्ता ये क्रुधग्नयः क्रोधपावकास्तेषु मध्ये खड्गं एव स्रुवा यज्ञकरणोपकरणं तया क्षणात् अविलम्बात् जुहाव आहुतियुक्तं चकार । अत्र साङ्गः समस्तवस्तुविषयो रूपकालङ्कारः तद्रू-

1. Smithfield. 2. Wat Tyler.

पक्रमभेदोय उपमानोपमेययोः । समस्तवस्तुविषयं श्रौता आरोपिता यदा साङ्गमेतदिति लक्षणात् ॥

भा०—अनन्तर संग्रामरूपी यज्ञमें कृतसंकल्पराजाने अन्यायका स्थानभूत विद्वेषकरनेवाले टैलरनामकपुरुषको महासंग्रामरूप यज्ञके प्रज्वलित क्रोधाग्निमें तरवाररूपी स्रुवासे जल्दीही हवन करदिया ॥ ९६ ॥

अथो महीपो विषयाधिवासिनः
स्वतन्त्रकार्य्यस्य कृते व्यजिज्ञपत् ।
धरेशवाग्बन्धनकृष्टमानसा
रणान्न्यवर्तन्त समेऽसमप्रियाः ॥ ९७ ॥

टी०—अथो इति । अथो ऽनन्तरं महीपो राजा विषयेदेशे ऽधिवसन्तीति तान्सर्वाञ्जनान् स्वतन्त्रकार्य्यस्य कृते स्वाधीनकार्य्यार्थं व्यजिज्ञपत् आज्ञापयामास ( यूयं स्वतन्त्रा यथेच्छं कार्य्यं कुरुत इति ) धरेशस्य या-वाक् तदेवबन्धनं तेनाकृष्टं मानसं येषां ते अशमप्रियाः कलहप्रियाः समे सर्वे मनुजा रणाद् युद्धात् न्यवर्त्तन्त विरता बभूवुः ॥

भा०—अनन्तर राजाने सबदेशीयलोगोंको स्वतन्त्रताकेलिये आज्ञादेदी राजाकी वाणीरूप बन्धनसे खींचेहुए चित्तवाले कलहप्रिय वे सबलोग शान्त होकर संग्रामसे हटगये ॥ ९७ ॥

ततोऽभवँस्तेषु परेषु केचन
गतासवः कण्ठविलग्नरश्मयः ।
तथाऽपरेनीतिपथाद्विनिःसृता
उपाययुर्बन्दिगृहं ह्यनारतम् ॥ ९८ ॥

टी०—तत इति । ततो रणशान्त्यनन्तरं तेषु परेषु शत्रुषु केचन पुरुषाः कण्ठेषु विलग्ना रश्मयो येषां अतएव गतासवो विगतप्राणा अभवन् हीति निश्चयेन तथा तादृशमेव अपरे ऽन्ये खला नीतिपथात् " ऋकृ

पूरवितिति समासान्तो ऽप्रत्ययः" न्यायमार्गात् विनिःसृताः पृथग्भूताः सन्तो ऽनारतं अजस्रं यथा तथा वन्दिगृहं बन्धनालयं उपाययुः प्रापुः ॥

भा०—युद्धशान्तिके अनन्तर उन शत्रुओंमें से कईएक तो फाँस देनेसे गत प्राणहुए उसीतरह कोई अन्यायीलोग जन्मक़ैद को पहुंचगये ॥ ९८ ॥

अथो पुरोधस्सु विचक्षणाग्रणीः
सजौनवीक्लिफ्[1] प्रथितः कविर्महान् ।
पुरोधसां नन्दनवासिनां[2] मतं
निराकरोन्मान्द्यमपि स्वभावजम् ॥ ९९ ॥

टी०—अथो इति । अथो ऽनन्तरं पुरोधस्सु पुरोहितेषु मध्ये विचक्षणाग्रणीः पण्डिताग्र्यः प्रथितः प्रख्यातो महान् कविः कवितानिपुणः स प्रसिद्धो जौनवीक्लिफ्नामा पुरुषो नन्दनवासिनां पुरोधसां पुरोहितानां मतं स्वनिर्मितन्यायमतं स्वभावजं प्रकृतिसमुत्पन्नं मान्द्यं कार्य्यमन्दतामपि निराकरोद् दूरीचकार ॥

भा०—अनन्तर पादरियोंमें बड़ा पण्डित और प्रख्यातकवि उस प्रसिद्ध जौनवीक्लिफ्नामक पादरीने नन्दनपुरमें रहनेवाले पादरियोंका निर्मित न्यायधर्म्म को तथा उनके स्वभावोत्पन्न आलस्यको भी दूरकिया ॥ ९९ ॥

स शास्त्रविद्वैबलनाम[3] पुस्तकं
विविच्य तच्चैंग्लिशलोकवाग्विधौ ।
बृहत्प्रयत्नैरनुवाद्य धार्मिक-
मशेषदेशे प्रथयाम्बभूव च ॥ १०० ॥

टी०—स शास्त्रेति । शास्त्रवित् शास्त्रज्ञः स जौनवीक्लिफ् धार्म्मिकं धर्म्मसम्बन्धि तत्प्रसिद्धं वैबलनामपुस्तकं विविच्य विचार्य्य ऐंग्लिशलोकानां या वाक् इंग्लिशदेशभाषा तद्विधौ तत्क्रमे [ कल्पेविधिक्रमौ इत्य-

1. John Wycliff. 2. Londoners. 3. Bible.

मरः ] बृहत्प्रयत्नैर्महायत्नैरनुवाद्य परिवर्त्याशेषदेशे समग्रविषये प्रथयाम्बभूव प्रख्यातंचकार ॥

भा०—शास्त्रज्ञ उस जौनवीक्लिफ्ने धर्म्मसम्बन्धि प्रसिद्ध वैबलनामक पुस्तक को विचारकर बड़े प्रयत्नसे इंग्लिशदेशभाषामें परिवर्तनकर उसका सारे देशमें प्रचार कराया ॥ १०० ॥

असौ महीपः स्वपितृव्यमीर्ष्यया
गुणान्वितं ग्लौस्सटराभिधन्तदा ।
अनेकमान्याँश्च धनाशयान्यह-
न्नघं धनाशान्धजनो न पश्यति ॥ १०१ ॥

टी०—असाविति । तदा तस्मिन्समये असौ महीपो राजा ईर्ष्ययाऽसूयया गुणान्वितं सद्गुणाढ्यं ग्लौस्सटराभिधं ग्लौस्सटरनामकं स्वपितृव्यं स्वजनककनिष्ठभ्रातरं तथा धनाशया ऽनेकमान्यांश्च पुरुषान् न्यहन् हतवान् कुतः धनाशान्धजनो ऽघं पापं न पश्यति नावलोकयतीत्यर्थान्तरेणालङ्कारेण समर्थ्यते ॥

भा०—उससमय उस राजाने ईर्ष्यासे गुणान्वित ग्लौस्सटरनामक अपने कनिष्ठपितृव्यको तथा धनाभिलाषासे बड़ेमान्यपुरुषोंको भी मारदिया क्योंकि धनाशासे अन्धपुरुष पापको नहीं देखता है ॥ १०१ ॥

सहेरफोर्डादिपितृव्यपुत्रकान्
निराकरोत्स्वाद्विषयाद्विषादितान् ।
तदेव गौण्टे च मृतेऽथ तद्धनं
जहार भूपोऽपयशःसमाश्रयः ॥ १०२ ॥

टी०—स इति । स भूपो राजा विषादितान् खेदयुक्तान् हेरफोर्डादयो ये पितृव्यपुत्रकास्तान् स्वात्स्वकीयाद्विषयाद्देशात् निराकरोत् निष्का-

1. Gloucester. 2. Henry Hereford. 3. Gaunt.

शयामास अथानन्तरं तदैव अपयशसोदुष्कीर्तेः समाश्रयः स्थानभूतो भूपो गौण्टे तन्नामके पुरुषे मृतेसति तद्धनं गौण्टद्रव्यं जहार स्वयमेवाग्रहीत् ॥

भा०—उसराजाने खेदयुक्त हेरफोर्डप्रभृति अपने कनिष्ठपितृव्यके पुत्रों को अपनेदेशसे निकालदिया अनन्तर उसीसमयमें दुष्कीर्तिके स्थानभूत राजाने गौण्टके मरनेपर उसका धन आपही ग्रहण करलिया ॥ १०२ ॥

सहेरफोर्डोऽपि नृपस्य सन्निधौ
स्वतातरिक्थार्थमुपागमत्स्वयम् ।
स राजकीयैः पुरुषैः समञ्चितो
निजाधिपत्ये कृतनिश्चयोऽभवत् ॥ १०३ ॥

टी०—स इति । स हेरफोर्डस्तन्नामकः पुरुषोऽपि नृपस्य राज्ञः सन्निधौ समीपे स्वतातरिक्थार्थं निजपितृधनार्थं स्वयमुपागमत् अयासीत् स हेरफोर्डो राजकीयैः पुरुषैः अधिकारिपुरुषैः समञ्चितः सम्यगर्हितः सन् निजाधिपत्ये स्वप्रभुत्वे कृतनिश्चयो विहितप्रत्ययो ऽभवत् ॥

भा०—वह हेरफोर्डनामक पुरुष राजाके पास अपने पितृधनके लिये आया वहां अधिकारी पुरुषों से आदरयुक्त उस हेरफोर्डने अपनेको राजा होनेमें निश्चय किया ॥ १०३ ॥

ततोऽखिलालोकविशेषका नृपं
नृपासनाद्दूरतरं ह्यकुर्वत
सहेरफोर्डोऽपि तुरीयहेनरी-
समाख्यया रूढिमगान्महीपतिः ॥ १०४ ॥

टी०—तत इति । ततोऽनन्तरं अखिलाः समग्रा लोकानां मध्ये विशेषा जना नृपं राजानं, नृपासनाद् राज्यपीठाद् दूरतरमतिशयेन

1. & 2. Henry, Hereford.

दूरमकुर्वत सहेरफोर्डोऽपि महीपतिः सन् तुरीयहेनरीसमाख्यया चतुर्थहेनरीनाम्ना रूढिं प्रसिद्धिं अगात् प्राप्त् ॥

भा०—अनन्तर सम्पूर्ण अधिकारीलोगोंसे राजारिचार्ड राज्यासनसे दूर कियागया और वह हेरफोर्ड राजा होकर चतुर्थहेनरीके नामसे प्रसिद्धिको प्राप्त हुआ ॥ १०४ ॥

नवनवशुचिभूमिते शके ऽस्मिन्
रिपुमधिपं विनिवर्त्य सर्व्वकार्य्यात्
सकलजनतया सुसेव्यमानो
नरपतिपीठमसौ समाधितष्ठौ ॥ १०५ ॥

टी०—नवेति । असौ हेनरीः नवनवशुचिभूमिते नवाधिकनवत्यधिकत्रयोदशशतमिते क्रैष्टशके रिपुं शत्रुभूतं अधिपं रिचार्ड भूपतिं सर्व्वकार्य्यात् समग्रराज्यकृत्यात् विनिवर्त्य दूरीकृत्य सकलजनतया समग्रलोकसमुदायेन "ग्रामजनेति तल्प्रत्ययः" सुसेव्यमान उपास्यमानः सन् नरपतिपीठं भूपसिंहासनं समाधितष्ठौ उपाविशत् "उपसर्गात्सुनोतीत्यादिना तिष्ठतेः सस्य षत्वम्" अस्मिन्पद्ये पुष्पिताग्रावृत्तम् अयुजिनयुगरेफतोयकारो युजिचनजौ जरगाश्चपुष्पिताग्रा इति लक्षणात् ॥

भा०—यह चतुर्थहेनरी १३९९ ईस्वीमें शत्रुभूत रिचार्डराजाको सब राज्यकार्य्यसे पृथक् कर सबलोगोंसे उपासनायुक्त कियाजाता हुआ राज्यसिंहासन पर बैठा ॥ १०५ ॥

इति उर्व्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये अङ्गभूतनौर्मनीयभूपवंशवर्णनन्नाम द्वितीयः सर्गः २ ॥

# तृतीयः सर्गः ॥

तत्र नन्दनपुरे स हेनरीः
पार्लिमेण्टे शुभशंसिभिर्जनैः ।
मानकीर्तिपरिवर्धकं पद-
मौपनामिकमथाभ्यपद्यत ॥ १ ॥

टी०—तत्रेति । अथानन्तरं स हेनरीराजा तत्र नन्दनपुरे तन्नामके नगरे पार्लिमेण्टे तदाह्वये सदसि शुभशंसिभिः सद्वचनपरैर्जनैः सभासद्भिः मानः सन्मानः कीर्तिर्यशस्तयोर्वर्धकं वृद्धिकारकं औपनामिकं उपनामयुक्तं उपाधिविशिष्टं इति यावत् पदं पदकं [ पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रि वस्तुषु इत्यमरः ] अभ्यपद्यत लेभे । अस्मिन्सर्गे रथोद्धताछन्दः रान्नराविह रथोद्धतालगौ इति लक्षणात् ॥

भा०—अनन्तर उस राजाहेनरीने वहां नन्दननगरमें पार्लिमेण्टके सद्वचन परायण सभासदोंसे मान कीर्त्तिका बढ़ानेवाला उपाधिविशिष्ट पदक ( तमगा ) पाया ॥ १ ॥

दासभावपदवीं समाश्रिता
ये पुरासमभवन् कुलक्रमात् ।
लाउँलार्डमनुजास्तथाविधाँ-
स्तान्स्वतन्त्रगतिकान्प्रचक्रिरे ॥ २ ॥

टी०—दासेति । पुरा पूर्वं ये जनाः कुलक्रमाद्वंशपरिपाट्या दासभावस्य क्रीतानुचरत्वस्य पदवीं सरणीं समाश्रिताः प्राप्ताः समभवन् समजायन्त

1. Henry IV. 2. Parliament. 3. Lollards.

लाउलार्डाश्चते मनुजा लाउलार्डसंज्ञका ये जनास्ते तथाविधांस्तादृशां स्तान्दासान् स्वतन्त्रगतिकान् स्वेच्छाचारिणः दासभावविनिर्मुक्ता-नित्यर्थः प्रचक्रिरे विदधिरे ॥

भा०—पहिले जो लोग कुलक्रमसे दास हुआकरतेथे लाउलार्डसंज्ञक पुरुषोंने उन दासोंको दासत्वसे निर्मुक्त करदिया ॥ २ ॥

हेनेरी[1]: स्वमतखण्डनोद्यताँ–
ल्लाउलार्ड[2]मनुजान्नवैं नयैः ।
भस्मसादकृत लोकसम्मुखे
येन सर्वमनुजोऽवगच्छतु ॥ ३ ॥

टी०—हेनरीरिति। हेनरीराजा स्वमतस्य निजसम्मतन्यायस्य खण्डने छेदने उद्यतान् तत्परान् लाउलार्डमनुजांस्तत्संज्ञकाञ्जनान् नवैर्नयैर्नूतना-भिर्नीतिभिः लोकसम्मुखे सर्वजनसमक्षे भस्मसादकृत भस्मीचकार "वि-भाषासातिकात्स्न्यें "विविषये सातिर्वा स्यात्साकल्ये—इति साकल्ये ऽर्थे साति प्रत्ययः" येन हेतुना सर्वमनुजः सकलजनोऽवगच्छतु राज्ञः प्रति-कूलाचरणेनैवं भवतीति जानातु "प्रेषातिसर्गप्राप्तकालेषु कृत्या-श्चेति लोट्" ॥

भा०—राजाहेनरीने अपने मतखण्डनमें तत्पर लाउलार्ड लोगोंको नूतन-नीतियों से जलादिया जिससे कि सबलोग राजमत खण्डनका फल जान जायँ ॥ ३ ॥

राजजीविमनुजैश्च यैः पुरा
मन्यतेस्म धरणीधरस्तु सः ।
तेऽखिलाः समभवन्पराङ्मुखाः
पात्रमस्ति विपदो जनाप्रियः ॥ ४ ॥

---

1. Henry IV. 2. Lollards.

टी०—राजेति। पुरा पूर्वं यै राजजीविमनुजैरधिकारिपुरुषैः सहेरफोर्डस्तु धरणीधरो भूपतिर्मन्यतेस्माङ्गीक्रियतेस्म तेऽखिलाः पुरुषाःपराङ्मुखा विमुखाः समभवन् अजायन्त जनाप्रियो लोकवैमनस्योत्पादकः पुरुषो विपद आपत्तेः पात्रं भाजनमस्ति भवतीत्यर्थान्तरेण समर्थ्यते ॥

भा०—पहिले जिन अधिकारी पुरुषोंसे वह हेरफोर्ड राजा मानागयाथा वे समग्र लोग विमुख होगये क्योंकि लोगोंका अप्रियजन विपत्तिका पात्र होता है ॥ ४ ॥

नौरदम्बरकॅलैण्डवासिना
राजवंश्यमनुजेन शत्रुणा।
स्कौटलैण्डकसुवेल्स मानवाः
प्रातिकूल्यमधिपस्य पेदिरे ॥ ५ ॥

टी०—नौरदेति। स्कौटलैण्डकश्च सुवेल्सश्च तयोर्देशयोर्मानवाःपुरुषाः नौरदम्बरकलैण्डे वसतीति तथाविधेन शत्रुणा राज्ञो विपक्षभावं प्राप्तेन राजवंशेभवो राजवंश्यः स चासौ मनुजस्तेन करणेन अधिपस्य हेनरीनृपस्य प्रातिकूल्यं विपरीतभावं पेदिरे प्रापुः ॥

भा०—स्कौटलैण्ड और वेल्सवासी मनुष्य नौरदम्बरलैण्डवासी राजकुलोत्पन्न तथा राजाहेनरीके शत्रुभावको प्राप्त कीसी पुरुषकी सम्मतिसे राजहेनरीके विरुद्धभावको प्राप्तहुए ॥ ५ ॥

हेनरीर्मृधमतीव चर्कर-
ञ्छत्रुभिः सह तदाऽवनीपतिः।
श्रयूस्वरीविषयभूस्थले तदा
तच्छिरोभिरवतस्तरे क्रुधा ॥ ६ ॥

---

1. Northumberland. 2. Scotland. 3. Welsh.
4. Henry IV. 5. Shrewsbury.

टी०—हेनरीरिति । ततो ऽनन्तरं हेनरीस्तन्नामको ऽवनीपतिर्भूपः शत्रुभिः सह अतीवात्यन्तमेव मृधं संग्रामं चर्करत् पुनः पुनः कुर्वन्सन् " ऋतश्चेति कृधातोर्यङ्लुकि रुगागमे शतरि रूपम् " तदा तस्मिन्समये कुधा कोपेन अयूस्वरीन मा यो विषयो देशस्तद्रूस्थलं रणक्षेत्रं तच्छिरोभिस्तेषां शत्रूणां उत्तमांगैः अवतस्तरे आच्छादयामास ॥

भा०—अनन्तर राजाहेनरीने उन शत्रुओंके साथ बड़ा संग्रामकर उस समय क्रोधसे अयूस्वरीदेशके रणक्षेत्रको उन वैरियोंके शिरोंसे आच्छादन करदिया ॥ ६ ॥

एवमित्यधिकजन्यकारिणं
पावकेन्दुयुगभूमिते शके ।
श्रान्तमाशु किल हेनरीं नृप-
मन्तको ऽन्त्यसमयं न्ययोजयत् ॥ ७ ॥

टी०—एवमिति । किलेति निश्चयेन पावकेन्दुयुगभूमिते त्रयोदशाधिकचतुर्दशशतमिते क्रैष्टशके अन्तको यम एवं इत्यनेन पूर्वोक्तमकारेण अधिकं जन्यं युद्धं करोतीति अतएव श्रान्तं श्रमयुक्तं हेनरीनृपं नन्द आशु शीघ्रमेव अन्त्यसमयं अवसानकालम् [ अन्तो जघन्यं चरमम पाश्चात्त्यपश्चिममित्यमरः ] न्ययोजयत् मापयत् ॥

भा०—यह निश्चयहै कि १४१३ ईसवी में कृतान्तने इस पूर्वोक्त प्र अधिक युद्धकरनेवाले इसीकारण थकेहुए हेनरीनामक राजाको जल्दी प्राप्त करदिया ॥ ७ ॥

हेनरीसुतनयोऽपि हेनरीः
पञ्चमोऽथ पितृशासने ऽविशत् ।

1. Henry V.

शौर्य्यवीर्य्यकृतिकौशलैश्च यः
पौरदैशिकजनप्रियोऽभवत् ॥ ८ ॥

टी०—हेनरीति । अथानन्तरं हेनरीनामकस्य राज्ञः सुतनयः सुपुत्रः पञ्चमो हेनरीः पितुर्जनकस्यासने पीठे ऽविशत् तस्थौ यो भूपः शौर्य्य-वीर्य्यकृतिकौशलैः स्थामपराक्रमकार्य्यप्रावीण्यैश्च पौरदैशिकजनानां नागरिकवैषयिकलोकानां प्रियः अभवत् अजायत । अत्र यच्छब्दस्तूत्तर-वाक्यानुगतत्वेनोपात्तः सामर्थ्यात्पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते ॥

भा०—अनन्तर चतुर्थहेनरी राजाका पुत्र पञ्चमहेनरी अपने पिताके सिंहा-सनपर बैठा जोकि शूरता पराक्रम कार्य्यकुशलताओंने भी नागरिक दैशिक लोगों का प्रिय हुआ ॥ ८ ॥

फ्रान्सकाख्यविषये नराधिपो-
ऽभूत् तृतीय इडवर्डकः पुरा ।
आधिपत्यमिति तत्र बोधयन्
स्वाधिकारमधिपो ह्यजीगणत् ॥ ९ ॥

टी०—फ्रान्सेति । हीति निश्चयेन पुरा पूर्वं फ्रान्सकाख्यविषये त-न्नामके देशे तृतीय इडवर्डकस्तदाख्यो राजा नराधिपो भूपतिरभूत् अधिपः स पञ्चमो हेनरी इति हेतोस्तत्र फ्रान्से आधिपत्यं प्रभुत्वं बोधयन्सन् स्वा-धिकारं स्वत्वं ( अहमेवात्र राज्याधिकारीति ) अजीगणत् अमन्यत ॥

भा०—पहिले फ्रान्सदेशमें नन्दनाधिपति तृतीय एडवर्ड राजा हुआथा इस कारण उस देशमें अपना स्वामिभावको बोधन करातेहुए राजाहेनरीने अपना अधिकार वहां मानलिया ॥ ९ ॥

फ्रान्सभूमिपतिभिः समं नृपः
संगरे भयकरो हि विद्विषाम् ।

1. France. 2. Edward III.

वाहिनीशतसमावृतान्तरो
वैरिसैन्यदहनो ऽन्वयुध्यत ॥ १० ॥

टी०—फ्रान्सेति । हि यस्मात्कारणात् वैरिसैन्येषु दहनो ऽग्निसमो ऽतितेजस्वितयेति भावः अतएव संगरे संग्रामे विद्विषां शत्रूणां भयङ्करो भीतिविधायको नृपो हेनरीराजा वाहिनीशतैः सम्यगावृतः परिवेष्टितो ऽन्तरो मध्य आत्मस्थितिप्रदेशो यस्य चक्रव्यूहरचनायुक्तः सन् फ्रान्स भूमिपतिभिः समं सार्धं अन्वयुध्यत असंग्रामयत ॥

भा० - इसी कारण शत्रुसैन्यमें अग्नितुल्य अतएव संग्राममें शत्रुओं को भय दिखलानेवाला राजाहेनरी बड़े व्यूहरचनायुक्त होकर फ्रान्सदेशके राजाओं के साथ युद्ध करनेलगा ॥ १० ॥

फ्रान्सवासिमनुजान् महारणे
तान् भृशं ह्यगिनकोर्टभूस्थले[1] ।
संनिहत्य समराध्वरक्षमो
नौरमण्डिविषयं[2] जिगाय सः ॥ ११ ॥

टी०—फ्रान्सवासीति । हीति निश्चयेन समर एवाध्वरो यज्ञस्तत्र क्षमः समर्थः स हेनरीभूपः अगिनकोर्टस्य भुवः स्थलं तस्मिन् तान् युद्धाभिसारिणः फ्रान्सवासिमनुजान् भृशमत्यर्थं संनिहत्य विनाश्य नौरमण्डिनामको यो विषयो देशस्तं जिगाय जितवान् अत्रैकदेशविवर्ति रूपकम् ॥

भा०—यह निश्चयहै कि संग्रामरूपी यज्ञमें समर्थ उस राजाहेनरीने अगिनकोर्टस्थानके रणक्षेत्रमें उन फ्रान्सवासी शत्रुओंको बड़े संग्राममें विनाशकर नौरमण्डिदेश को जीतलिया ॥ ११ ॥

---

1. Agincourt. 2. Normandy.

विक्रमैकरसमाहितक्रियं
हेनरीं नृपमुदीक्ष्य चार्लसः ।
फ्रान्स[1]भूमिपतिरात्मकन्यकां
नन्दना[2]धिपतये ददौ ततः ॥ १२ ॥

टी०—विक्रमेति । ततो ऽनन्तरं फ्रान्सभूमिपतिश्चार्लसस्तन्नामको राजा आहिता विहिता क्रिया येन एवंविधं हेनरीं नृपं तन्नामकं भूपं विक्रमैकरसं पराक्रमैकमनस्कं उदीक्ष्य दृष्ट्वा आत्मकन्यकां स्वां पुत्रीं नन्दनाधिपतये हेनरीनृपाय ददौ दत्तवान् ॥

भा०—फ्रान्सदेशाधिपति चार्लसने कृतकृत्य और पराक्रमशील राजा हेनरी को देखकर अपनी कन्या उस नन्दनेश हेनरीके लिये देदी ॥ १२ ॥

चार्लस[3]स्य मरणादनन्तरं
फ्रान्स[4]देशनृपतिर्भविष्यति ।
हेनरी[5]र्मुदितचेतसेति स
आर्तबन्धुरखिलप्रियो ऽभवत् ॥ १३ ॥

टी०—चार्लसेति । हेनरीराजा चार्लसस्य फ्रान्सदेशाधिपतेर्मरणादनन्तरं फ्रान्सदेशनृपतिर्भविष्यति इति हेतोः स हेनरीः मुदितचेतसा प्रसन्नचित्तेन आर्तबन्धुर्दीनोद्धरणमानसो ऽतएवाखिलप्रियः सर्वहृदयङ्गमो ऽभवत् ॥

भा०—हेनरीराजा चार्लसके मरनेपर फ्रान्सदेशाधिपति होवेगा इस कारण वह हेनरी प्रसन्नचित्तसे दुःखियोंका उद्धारक अतएव सब लोगोंका प्रिय हुआ ॥ १३ ॥

युग्मयुग्मयुगभूमिते शके
यौवनोल्लसितविग्रहो नृपः ।

1. France. 2. London. 3. Charles, King of France. 4. France. 5. Henry V.

सर्वदा दुरवसादकारिणं
मृत्युमाप जनताश्रुभिः सह ॥ १४ ॥

टी०—युग्मेति। यौवनेन उल्लसितो विग्रहो यस्यैवंविधो नृपो हेनरी भूपः युग्मयुग्मयुगभूमिते द्वाविंशत्यधिकचतुर्दशशतमिते क्रैष्टशके जनताश्रुभिः सह प्रकृतिबाष्पैः समं सर्वदा सततं दुरवसादकारिणं अतिदुःखविधायकं मृत्युं कालधर्मं आप प्राप्तवान् ॥

भा०—यौवनसे शोभितशरीरवाला राजाहेनरी प्रजाके अश्रुपातके साथही १४२२ ईसवी में निरन्तर दुःखदायी मृत्यु को प्राप्त हुआ ॥ १४ ॥

तत्सुतोऽथ ननु षष्ठहेनरी-
स्तातपीठकमधिष्ठितस्तदा।
साधुतामुपगतोऽतिपावनः
फ्रान्समिंग्लिशपुराणि तान्यशात् ॥ १५ ॥

टी०—तत्सुत इति। अथानन्तरं नन्विति निश्चयेन तदा तस्मिन्समये साधुतां उपगतः साधुभावं प्राप्तो ऽतिपावनः पवित्रस्तत्सुतः तस्य पञ्चमहेनरीनृपस्य पुत्रः षष्ठहेनरीः तातस्य पितुः पीठकं सिंहासनं अधिष्ठित आरूढः सन् फ्रान्सं देशं तानि प्रसिद्धानि इंग्लिशपुराणि अशात् अनुशासनं व्यधात् " शासु अनुशिष्टौ धातोर्लङि तिप्यनस्तेरिति सस्य दत्वे कृते सति रूपम् " ॥

भा०—अनन्तर यह निश्चयहै कि उससमय सज्जन और पवित्र पञ्चम हेनरीके पुत्र छठे हेनरीने पिताके सिंहासनपर बैठकर फ्रान्स और इंग्लिशदेशके नगरों का पालन किया ॥ १५ ॥

बालिशत्वमुपलभ्य भूपते-
र्बैडफोर्डविषयाधिपः सुधीः।

1. Henry VI. 2. France, and England. 3. Bedford.

तत्पितृव्य इति संभृतेङ्गितः
फ्रान्सनेतृपदवीमपद्यत ॥ १६ ॥

टी०—बालिशेति । संभृतेङ्गितो गुप्तचेष्टः सुधीर्बुद्धिमान् वैडफोर्डविषयस्य तन्नामकदेशस्याधिपतिः स्वामी भूपतेर्हेनरीनृपस्य बालिशत्वं बालभावं उपलभ्य ज्ञात्वा तत्पितृव्यो भूपस्य पितुः कनिष्ठो भ्राता इति हेतोः फ्रान्सदेशस्य नेतृपदवीं नायकपदं अपद्यत प्राप्नोत् ॥

भा०—गुप्तचेष्टावाला और बुद्धिमान् वैडफोर्डदेशाधिपति राजाके बालभाव को जानकर राजाका पितृव्यहूँ इसकारण फ्रान्सदेशका नायक बनगया ॥ १६ ॥

फ्रान्सदेशमनुजैः समं तदा
नन्दनेक्षितिपतेर्महाहवः ।
संबभूव रजसा त्विषांपति-
स्तत्र चापदवलोकनीयताम् ॥ १७ ॥

टी०—फ्रान्सेति । तदा तस्मिन्समये फ्रान्सदेशमनुजैः समं नन्दनक्षितिपतेर्नन्दनाधीशस्य महाहवः संग्रामः संबभूव तत्र युद्धे च त्विषांपतिः सूर्य्यो रजसा सैन्यपदसंक्षोभोत्थितधूलिनिवहेनावलोकनीयतां दृष्टिगोचरतामापत् अयात् सूर्य्यस्यातितीक्ष्णतया सहसा दर्शनासामर्थ्याद् धूल्यावरणेन तेजसो मन्दत्वाद्दर्शनोपलब्धिरिति काव्यलिङ्गालङ्कारः ॥

भा०—उस समय फ्रान्सदेशवालोंके साथ नन्दनेशका बड़ा संग्राम हुआ जहां कि सैन्यचरणचाञ्चल्यसे उद्धतधूलिनिवहसे आवृत सूर्य्यमण्डल भी अच्छी तरह दृष्टिगोचर को प्राप्तहुआ ॥ १७ ॥

फ्रान्सदेशनृपतिः समन्तत
ऑर्लियन्सनगरं परावृतम् ।

---

1. French. 2. London. 3. France. 4. Orleans.

वीक्ष्य चैंग्लिशजनैः सचार्ल्सः
पौरुषैर्विरहितस्तदा ऽभवत् ॥ १८ ॥

टी०—फ्रान्सेति । फ्रान्सदेशनृपतिः स चार्लस ऐंग्लिशैर्जनैः समन्ततः समन्तात् ओर्लियन्सनगरं तन्नामकं पुरं परावृतं संवीतं च [ वेष्टितं स्याद्वलयितं संवीतं रुद्धम् वृतमित्यमरः ] वीक्ष्य तदा तस्मिन्समये पौरुषैः स्वपराक्रमैर्विरहितो विहीनो ऽभवत् ॥

भा०—फ्रान्सदेशाधिपति चार्लस ऐंग्लिशलोगोंसे चारों तरफसे वेष्टित स्वकीय ओर्लियन्स नगरको देखकर उससमय पौरुषविहीन होगया ॥ १८ ॥

जोन्नाम वनिता बलान्विता
चौर्लियन्सनगरं विमोचितुम् ।
अन्तकस्य दशनावलिर्यथा
शत्रुसंघदलनी ह्यहन्नरीन् ॥ १९ ॥

टी०—जोनेति । हीति निश्चयेन बलान्विता बलोत्कटा जोन नाम वनिता जोननामिका स्त्री ओर्लियन्सनगरं तन्नामकं पुरं विमोचितुम् वैरिहस्तादित्यर्थः अन्तकस्य यमस्य दशनावलिर्यथा दन्तपङ्क्तिरिव शत्रूणां संघं समूहं दलतीत्येवंविधा सती अरीन् वैरिणो ऽहन् व्यनाशयत् ॥

भा०—यह निश्चयहै कि बड़ी बलवाली अतएव शत्रुसंघविनाशिका जोन नामिका स्त्रीने ओर्लियन्स नगरको छुटानेके लिये सर्वभक्षक यमकी दन्तपंक्ति की तरह शत्रुओंका नाश किया ॥ १९ ॥

फ्रान्सदेशनृपतिर्हि चार्ल्सो
रीम्सनामनगरे नृपो ऽभवत् ।

---

1. Charles. 2. Joan of Arc. 3. Rheims.

जोननाम वनिताऽथ नान्दनै-

र्भस्मसादक्रियत प्रमादतः ॥ २० ॥

टी०—फ्रान्सेति। हि यस्मात्कारणात् फ्रान्सदेशनृपतिश्चार्लसो रीम्सनाम यन्नगरं तत्र नृपो राज्यासनारूढो ऽधिकारविशिष्टश्चाभवत् अथानन्तरं नान्दनैर्नन्दननगरवासिभिर्जनैः जोननाम वनिता तन्नामिका स्त्री प्रमादतो ऽनवधानतया "सार्वविभक्तिकस्तसिल्" भस्मसादक्रियत भस्मीचक्रे "कर्म्मणिलङ्, विभाषासातिकार्त्स्न्ये च्विविषये साति प्रत्ययः" ॥

भा०—जिस कारणसे कि फ्रान्सेश्वर चार्लेस रीम्सनामनगरमें राज्यासनारूढ होगया अनन्तर नन्दननगरीय पुरुषोंने प्रमादसे जोननामिका स्त्री अग्निमें भस्म करदी ॥ २० ॥

फ्रान्सकात्स्वविषयात्तदैंग्लिशाँ-

श्चार्लसो बहुबलो निराकरोत्।

निःसृतैंग्लिशजना धियाऽन्विताः

कैलनाम नगरं स्वकं ययुः ॥ २१ ॥

टी०—फ्रान्सेति। तदा तस्मिन्समये बहुबलो ऽतिबलोपयुक्तश्चार्लसो राजा फ्रान्सकात्स्वविषयान्निजदेशात् ऐंग्लिशान् पुरुषान् निराकरोत् निरकाशयत् धिया बुद्ध्या अन्विताः तथा निःसृताश्च ते ऐंग्लिशजनाः स्वकं निजायत्तं कैलनामनगरं पुरं ययुः प्रापुः ॥

भा०—बड़े बलवाले चार्लेस राजाने फ्रान्सनामक स्वदेशसे ऐंग्लिशलोग निकालदिये—बुद्धिविशिष्ट निकलेहुए ऐंग्लिशलोग अपने अधीन कैलनाम नगर को प्राप्तहुए क्योंकि वहां उसवक्त उनके पास वही नगरमात्र रहगया ॥ २१ ॥

---

1. Charles. 2. Calais.

नन्दने[1] ऽरिभिरथो मदान्धकै-
स्तैः सफोक[2]विषयाधिपो युवा ।
नन्दनेशसचिवो ऽतिवाक्पटु-
श्चच्छषे रहसि कारणादृते ॥ २२ ॥

टी०—नन्दनेति । अथो ऽनन्तरं नन्दने नगरे मदान्धकैर्मदनिमीलितैः तैररिभिर्बैरनसंज्ञकैरधिकारिपुरुषैः सफोकविषयाधिपः सफोकदेशभूपतिः अतिवाक्पटुरतिचतुरो युवा तरुणो नन्दनेशस्य सचिवो मन्त्री कारणात् ऋते हेतुमन्तरा रहस्येकान्ते चच्छषे छन्ने "छष हिंसायामिति धातोः कर्म्मणि लिट्" ॥

भा०—अनन्तर नन्दननगरमें मदमूर्च्छित उन प्रसिद्ध बैरनसंज्ञक शत्रुओं ने सफोकदेशाधिपति बड़ा चतुर युवावस्थापन्न नन्दनेशका मन्त्री बगैर कारणसे एकान्तमें मारदिया ॥ २२ ॥

हेनरी[3]र्बहुविधानुपद्रवान्
वीक्ष्य शान्तहृदयो ऽप्यशान्तिकान् ।
क्षिप्तमानस इवातिविह्वलो-
ऽगात्समग्रविषयस्य शोच्यताम् ॥ २३ ॥

टी०—हेनरीरिति । शान्तहृदयो ऽपि हेनरीर्भूपो ऽशान्तिकाञ्छान्तिरहितान् बहुविधान् अनेकप्रकारान् उपद्रवान् विघ्नान् वीक्ष्यावलोक्याऽतिविह्वलो व्याकुलः क्षिप्तमानसो विक्षिप्तचेता इव समग्रविषयस्याशेषदेशस्य शोच्यतां शोचनीयभावं अगात् प्रापद् विक्षिप्तो बभूवेति भावः ॥

भा०—शान्तचित्तवाला भी राजाहेनरी बहुतप्रकारके उत्कट उपद्रवों को देखकर अतिव्याकुल विक्षिप्तचित्तवाले पुरुषकी तरह सारे देशकी शोचनीयदशाको प्राप्तहुआ ॥ २३ ॥

1. London. 2. Suffolk ( Duke of ). 3. Henry VI.

योर्क[1]भूपतिरतो ऽत्र नन्दने
शासिता समभवत् सुबुद्धिमान् ।
धीतनुत्रपरिरक्षितात्मकः
को न जायत इहालयः श्रियः ॥ २४ ॥

टी०—योर्केति । अतो ऽस्मात्कारणात् अत्र नन्दने नगरे सुबुद्धिमान् योर्कभूपतिर्योर्काधिपतिः शासिता नेता ऽभवत् धीर्बुद्धिरेव तनुत्रं वर्म्म तेन परिरक्षितः परित्रात आत्मा यस्य [ तनुत्रं वर्म्म दंशनमित्यमरः ] एवंविधः कः पुरुष इहास्मिञ्जगति श्रियो लक्ष्म्या आलयः स्थानं न जायते अपितु सर्व एव जायते इति काका प्रकाश्यते अत्र सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासालङ्कारः ॥

भा०—इसी कारण यहां नन्दननगरमें बुद्धिविशिष्ट योर्कदेशाधिपति शासन करनेवाला हुआ बुद्धिरूप कवच से रक्षित आत्मावाला कौन पुरुष इस संसारमें लक्ष्मीका पात्र नहीं होता ॥ २४ ॥

तत्र योर्क[2]नृपतिर्नृपासने
ह्याधिकारिक इवाभवत् स्वयम् ।
येन घोरसमरः परस्परं
योर्कनन्द[3]नमहीभुजोरभूत् ॥ २५ ॥

टी०—तत्रेति । हीति निश्चयेन तत्र नन्दनपुरे योर्कनृपतिः स्वयं नृपासने राज्यासने विषये आधिकारिको ऽधिकारयुक्त इवाभवत् येन कारणेन योर्कश्च नन्दनं च तयोर्महीभुजो राज्ञोः परस्परमन्योऽन्यं घोरसमरो महारणो ऽभूत् ॥

भा०—यहां नन्दननगरमें योर्कनृपति राज्यासन विषयमें स्वयमेव अधिकारवाला जैसा होगया जिससे कि योर्कनृपति और नन्दनेशका परस्पर बड़ा संग्राम हुआ ॥ २५ ॥

---

1–2. Duke of York. 3. Loudon.

नन्दनाधिपतिसैनिकैस्तदा
योर्कभूपतिरघानि चाहवे ।
मृत्युपाशपरिवेष्टितो जनः
सार्धमाश्रयजनैर्नियुध्यते ॥ २६ ॥

टी०—नन्दनेति । तदा तस्मिन्समये नन्दनाधिपतेर्ये सैनिका योद्धारस्तैर्योर्कभूपतिराहवे संग्रामे ऽघानि अहन्यत "हन् धातोः कर्मणि लुङि चिण् भावकर्मणोरिति चिणि हो हन्तेरिति कुत्वे रूपम्" मृत्युपाशेन परिवेष्टितो बद्धो जन आश्रयजनैराधारभूतैः पुरुषैः सार्धं नियुध्यते विग्रहयुक्तो भवतीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—उससमय नन्दनेशके सैनिकोंने संग्राममें योर्कभूपतिको मारदिया क्योंकि कालपाशनिबद्ध पुरुष आश्रयजनोंके साथ युद्ध करताहै ॥ २६ ॥

योर्क[1]भूपतिसुतेन टौटने[2]
नन्दनक्षितिपतेः पताकिनी ।
खड्गभल्लशरमुद्गरादिभि-
र्हन्यते स्म वनितेव नेश्वरा ॥ २७ ॥

टी०—योर्केति । टौटने तन्नामके स्थानविशेषे योर्कभूपतेः सुतेन तनूजेन नन्दनक्षितिपतेर्हेनरीनृपस्य पताकिनी पृतना खड्गः कृपाणो भल्लः शूलाकारो ऽस्त्रविशेषः शरा बाणा मुद्गरादीनि गदादीनि तैरस्त्रविशेषैर्नेश्वरा स्वामिरहिता "नैकधेत्यादाविवात्र नशब्देन सह सुप्सुपेति समासः" वनिता इव स्त्रीव भूपरहितत्वादिति भावः हन्यते स्म मार्यते स्म ॥

भा०—टौटननामकस्थानमें योर्काधिपतिके पुत्रसे नन्दनेशकी सेना कृपाण, भाला, बाण और मुद्गरादिकोंसे स्वामिरहित वनिताकी तरह मारीगई ॥ २७ ॥

1. York. 2. Towton.

भूरसाब्धिधरणीमिते शके
यश्चतुर्थ इडवर्डको ऽभवत् ।
योर्कभूपतनयः स पीठके-
ऽतिष्ठदात्तभुजवीर्य्यसंश्रयः ॥ २८ ॥

टी०—भूरसेति । यश्चतुर्थस्तुरीय इडवर्डको ऽभवद् अजायत आत्मनो भुजौ बाहू तयोर्वीर्य्यं तदेवसंश्रय आश्रयो यस्यैवंविधो योर्कभूपतनयः स इडवर्डो भूरसाब्धिधरणीमिते एकषष्ट्यधिकचतुर्दशशतमिते क्रैष्टशके पीठके नन्दनराज्यासने ऽतिष्ठद् उपाविशत् ॥

भा०—जो कि चतुर्थ एडवर्ड हुआ था बड़ा पराक्रमी योर्कभूपका पुत्र वही एडवर्ड १४६१ ईसवी में नन्दनराज्यासन पर बैठा ॥ २८ ॥

वैरनान् समरसीम्नि भूपति-
र्वीर्य्यहीनविभवान् विधाय सः ।
भृत्यवप्रपवणिग्जनाँस्तदा
संजुगोप शरणाहितव्रतः ॥ २९ ॥

टी०—वैरनानिति । तदा तस्मिन् राज्यप्राप्तिसमये स भूपतिरिडवर्डः समर एव सीमा वा समरस्य सीमा स्थितिस्तस्यां वैरनान् तत्संज्ञकान् विपरीताधिकारिपुरुषान् वीर्य्यहीनविभवान् पराक्रमरहितैश्वर्य्यान् विधाय कृत्वा शरणे रक्षितृभावे आहितो व्रतो विहितो नियमो येन स तथाविधः सन् भृत्याः कर्म्मकरा वप्रपाः कृषका वणिग्जना वैश्यवृत्तयः पुरुषास्तान् सर्वान् संजुगोप ररक्ष ॥

भा०—उससमय राजा एडवर्डने संग्राममें वैरनलोगोंको पराक्रमरहित कर दीनोंके उद्धारमें तत्परहोकर मजदूर किसान और बनियोंकी रक्षाकी ॥ २९ ॥

---

1. Edward IV. 2. Barons.

हेनरीं[1] नरपतिं पुरासने
ऽस्थापयन्निजधियैव षष्ठकम् ।
वारवीक[2] इति योजनाग्रणी-
स्तं महीपतिरसावतर्दयत् ॥ ३० ॥

टी०—हेनरीमिति । जनाग्रणीरग्रगण्यो वारवीक इति प्रसिद्धो यः पुरुषः पुरा पूर्वं निजधिया स्वबुद्ध्या एव षष्ठकं हेनरीं नाम नरपतिं भूपं आसने राज्यपीठे ऽस्थापयत् असौ महीपतिरिडवर्डस्तं वारवीकं अतर्दयद् अपमानयुक्तं व्यधात् ॥

भा०—जनाग्रगण्य जिस वारवीकनामक पुरुषने पहिले छठा हेनरीराजा राज्यसिंहासनपर बैठायाथा इस एडवर्ड राजाने उस वारवीकको निरादरयुक्त करदिया ॥ ३० ॥

फ्लाण्डरं[3] विषयकं यतो नृपः
संपलायत तदैव नन्दनात्[4] ।
वाहिनीशतसमावृतः पुन-
र्वारवीक[5]सविधं समाययौ ॥ ३१ ॥

टी०—फ्लाण्डरमिति । यतो यस्मात्कारणात् तदैव विरोधसमय एव नृपो भूपो नन्दनान्नगरात् फ्लाण्डरं नाम विषयं देशं संपलायत गतवान् पुनर्वाहिनीशतैरनेकसेनाभिः समावृतो युक्तः स भूपो वारवीकसविधं वारवीकसंमुखं समाययौ प्राप ॥

भा०—जिससे कि उसी विरोधसमयमें राजा नन्दननगरसे फ्लाण्डरदेशको भागगया फिर बहुतसेनाओंसे युक्तहोकर वारवीकके संमुख आ पहुँचा ॥ ३१ ॥

बार्नेट[6]समरांगणे ततो
वारवीकमनुजं निहत्य सः ।

1. Henry VI. 2. Warwick. 3. Flanders. 4. London. 5. Warwick. 6. Barnet.

हेनरीं नरपतिं प्रकोष्ठके

सन्दितं रहसि तं व्यनाशयत् ॥ ३२ ॥

टी०—वारनेटेति। ततोऽनन्तरं स भूपः बारनेटसमराङ्गणे बारनेटाख्यरणक्षेत्रे वारवीकमनुजं तन्नामकं पुरुषं निहत्य प्रकोष्ठके उच्चप्राकारवेष्टिते गृहे सन्दितं बद्धम् "दो अवखण्डने धातोः क्तप्रत्यये द्यतिस्यतिमास्थामित्ति किति इतीत्वे रूपम्" [बद्धे सन्दानितं मूतमुदितं सन्दितं सितमित्यमरः] एवंविधं तं हेनरीं नरपतिं राजानं रहस्येकान्ते व्यनाशयत् अतर्दयत्॥

भा०—अनन्तर उस एडवर्डराजाने बारनेटनामक रणक्षेत्रमें वारवीकको मारकर कोठेमें कैदकियेहुए उस हेनरीराजाको एकान्तमें मरवादिया ॥ ३२ ॥

पार्लिमेण्टसमितिं विना तदा

राज्यकार्य्यमकरोद्विशांपतिः।

सर्वकृत्यकुशलः सहायतां

नाभिवाञ्छति परस्य कर्हिचित् ॥ ३३ ॥

टी०—पार्लिमेण्टेति। तदा तस्मिन्समये विशांपतिर्भूपः पार्लिमेण्टसमितिं पार्लिमेण्टाख्यसभां विना राज्यकार्य्यमकरोद् विहितवान् सर्वकृत्येषु समग्रकार्य्येषु कुशलः प्रवीणः पुरुषः कर्हिचित् कदापि परस्यान्यस्य सहायतां साहाय्यं नाभिवाञ्छति नाभिलषतीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—उससमय राजा एडवर्डने बगैर पार्लिमेण्टके सारा राज्यकार्य्य किया क्योंकि समग्रकार्य्यकुशल पुरुष कभी भी दूसरेकी सहायता को नहीं चाहता ॥३३॥

ये धरापतिविपक्षतां गता-

स्तत्समग्रधरणीं नृपोऽग्रहीत्।

1. Henry VI. 2. Parliament.

द्वेषता बलवता समं जनं
दीर्घकं दिशति दुःखमन्वहम् ॥ ३४ ॥

टी०—ये धरेति । ये पुरुषा धरापते राज्ञो विपक्षतां शत्रुभावं गताः प्राप्ता अभूवन्निति शेषः नृपो राजा तत्समग्रधरणीं तेषां पुरुषाणां अशेषभूमिं अग्रहीत् गृहीतवान् बलवता समर्थेन समं सार्धं द्वेषता शत्रुता ऽन्वहं प्रतिदिनं दीर्घकं महद् दुःखं दिशति प्रयच्छतीत्यर्थान्तरन्यासेन समर्थ्यते ॥

भा०—जो लोग राजाके विमुखहुए उनकी सारी ज़मीन राजाने लेली क्योंकि बलवालेके साथकी शत्रुता प्रतिदिन बड़ा दुःख देती है ॥ ३४ ॥

षण्नगाब्धिधरणीमिते शके
भूभुजोऽस्य विषये सुबुद्धिना ।
नूतनैव किल कैक्‌ष्टनेन सा
वर्णमुद्रणकला व्यकाश्यत ॥ ३५ ॥

टी०—षण्नगेति । किलेति निश्चयेन अस्य भूभुजो राज्ञो विषये देशे सुबुद्धिना कैक्‌ष्टनेन तन्नामकेन पुरुषेण नूतनैव नवीनैव सा प्रसिद्धा सर्वोपकारिणी वर्णमुद्रणस्याक्षरमुद्रणस्य कला तद्विधानक्रिया व्यकाश्यत प्रकाश्यते स्म ॥

भा०—यह निश्चयहै कि १४७६ ईसवी में इस राजाके राज्यमें बड़े बुद्धिविशिष्ट कैक्‌ष्टनसे नवीन वह प्रसिद्ध वर्णमुद्रणकला ( छापेकी कल ) प्रकाशित कीगई ॥ ३५ ॥

अस्य भूपतिवरस्य पुत्रकः
पञ्चमः स इडवर्डकाभिधः ।
वह्निनागयुगभूमिते शके
ऽतिष्ठदात्मजनकासने ततः ॥ ३६ ॥

---

1. William Caxton. 2. Edward V.

टी०—अस्येति । ततोऽनन्तरं अस्य भूपतिवरस्य भूपश्रेष्ठस्य पुत्रकस्तनूजः स पञ्चम इडवर्डकाभिध इडवर्डनामा वह्निनागयुगभूमिते त्र्यशीत्यधिकचतुर्दशशतमिते क्रैष्टशके आत्मजनकासने स्वपितुरासने ऽतिष्ठत् ॥

भा०—अनन्तर इस एडवर्डराजाका पुत्र पञ्चम एडवर्ड १४८३ ईसवीमें अपने पिताके आसन पर बैठा ॥ ३६ ॥

तत्र राजपुरुषै रिचार्डको
भूपपित्र्यवरजो महीपतेः ।
रक्षितेति सकलार्थसाधको-
ऽवाप्तमुख्यगणनो ऽन्वयुज्यत ॥ ३७ ॥

टी०—तत्रेति । तत्र पुरे राजपुरुषैरधिकारिपुरुषैः सकलार्थसाधको निखिलप्रयोजनविधायको ऽतएवावाप्तमुख्यगणनः प्राप्ताग्रगण्यभावो भूपपित्र्यवरजो भूपपितृव्य इत्यर्थः महीपते रक्षिता रक्षणसमर्थ इत्येवं अन्वयुज्यत प्रेर्यते स्म ॥

भा०—वहां नन्दननगरमें मुख्याधिकारियोंसे संपूर्ण अर्थसाधक अतएव प्राप्तमुख्यगणनावाला राजाका पितृव्य रिचार्डनामक पुरुष राजाका रक्षक नियुक्त कियागया ॥ ३७ ॥

लौरेंडं क्षितिभुजो ऽथ मातुलं
शान्तभावमशमो रिचार्डकः ।
वञ्चितं किल मृगव्यकैतवै-
राजघान स कृपाणधारया ॥ ३८ ॥

टी०—लौरडमिति । अथानन्तरं किलेति निश्चयेन अशमः शान्तिरहितः स रिचार्डकः शान्तभावं अतएव मृगव्यकैतवैर्मृगयोपधिभिर्व-

1. Richard, Duke of Gloucester. 2. Lord Rivers.

ञ्चितं प्रतारितं लौर्डनाम क्षितिभुजो राज्ञो मातुलं कृपाणधारया ऽसिधारयाऽऽजघान हतवान् ॥

भा०—अनन्तर यह निश्चय है कि क्रूरस्वभाववाले उस रिचार्डने शान्तप्रकृति अतएव आखेटकेबहाने वञ्चित लौर्डनामक राजाके मातुलको तरवारसे मारदिया ॥ ३८ ॥

भूपतेः पितुरमात्यकं तत-
श्चचक्षे स खलु लौर्डहैष्टिंगम्[1] ।
भूपतिञ्च सुमतिं सहानुजं
बन्धनेन युयुजे रिचार्डकः[2] ॥ ३९ ॥

टी०—भूपतेरिति । ततो ऽनन्तरं खल्विति निश्चयेन स रिचार्डको भूपपितृव्यः सपदि तत्कालएव लौर्डहैष्टिंगंनाम भूपतेराज्ञः पितुर्जनकस्यामात्यकं सचिवं चचक्षे हतवान् "क्षष हिंसायां धातोर्लिटि रूपम्" तथा रिचार्डकः सहानुजं अनुजेनसह वर्तमानं "तेनसहेति तुल्ययोगे इति तृतीयान्तेन समासः" सुमतिं सुबुद्धिं भूपतिञ्च राजानञ्च बन्धनेन युयुजेऽयुङ्क्त ॥

भा०—अनन्तर रिचार्डने उसीसमय राजाके पिताका मन्त्री लौर्डहैष्टिंगनाम पुरुषको मारदिया और कनिष्ठभ्राताके साथ सुबुद्धिराजाको भी बन्धनयुक्त करदिया ॥ ३९ ॥

पार्लिमेण्टकसदो[3] यदृच्छया
स्वानुकूल्यमुपयोज्य तत्क्षणात् ।
भूपपीठमतुलं रिचार्डक-
श्चाध्यतिष्ठदविवेकमानसः ॥ ४० ॥

1. Lord Hastings. 2. Richard, Duke of Gloucester.
3. Parliament.

टी०—पार्लिमेण्टेति । अविवेकमानसः सद्विचारशून्यो रिचार्डक स्तत्क्षणात् तत्समयात् यदृच्छया स्वेच्छया पार्लिमेण्टकसदः पार्लिमेण्टाख्यसभां स्वानुकूल्यं निजानुकूलभावं उपयोज्य संप्रेर्य अतुलं सर्वोत्कृष्टं भूपपीठं नृपासनं अध्यतिष्ठत् अस्थात् " अधिशीङ्स्थासां कर्म्म इत्याधारस्य कर्म्मत्वम् " ॥

भा०—विवेकशून्य वह रिचार्ड उसीसमयसे पार्लिमेण्टसभाको अपने अनुकूल नियुक्तकर अतुलराज्यासनपर बैठा ॥ ४० ॥

भूपतिं रहसि तं कुमारकं
शङ्कितः स्वविषयाज्जघान सः ।
आत्मदोषसुविलिप्तचेतसः
कस्य धीः कलुषिता न जायते ॥ ४१ ॥

टी०—भूपतिमिति । स रिचार्डो भूपः स्वविषयात् स्वदेशाद्धेतोः "कदापि मे राज्यच्युतिर्जायेत" इति शङ्कितः सन् रहस्येकान्ते कुमारकं "अनुकम्पायां कन्प्रत्ययः" अल्पवयस्कं भूपतिं पञ्चमं इडवर्ड जघान हतवान् आत्मदोषेण सुविलिप्तं चेतो यस्यैवंविधस्य कस्य पुरुषस्य धीः कलुषिता मलिना न जायते अपितु सर्वस्यैव जायत इत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—उस राजारिचार्डने राज्यच्युतिकी भयसे शङ्कितहोकर बाल्यावस्थापन्न पञ्चमएडवर्ड राजाको एकान्तमें मारदिया क्योंकि अपने दोषसे दूषितचित्तवाले किस आदमीकी बुद्धि मलिन नहीं होतीहै ॥ ४१ ॥

वह्निनागयुगभूमिते शके
भूपतिः स करुणाविवर्जितः ।
दौर्बलोऽतिचपलो रिचार्डकः
प्रादुरासीहि तृतीयसंख्यकः ॥ ४२ ॥

1. Richard, Duke of Gloucester ( Richard III ).

टी०—वह्नीति । हीति निश्चयेन वह्निनागयुगभूमिते त्र्यशीत्यधिकचतुर्दशशतमिते क्रैष्टशके दोर्बलोबाहुबलोपेतो ऽतिचपलश्चलप्रकृतिः करुणाविवर्जितो दयाहीनः स भूपतेः पितृव्यस्तृतीयसंख्यको रिचार्डस्तन्नामको भूपतिर्महीपः प्रादुरास अकस्मात् प्रकटीबभूव ॥

भा०—यह निश्चयहै कि १४८३ ईस्वीमें बाहुबलयुक्त चलस्वभाव और दयारहित राजाका पितृव्य तृतीयरिचार्ड राजा होगया ॥ ४२ ॥

यो रिचार्डकुभुजे सहायतां
संददौ बकिन[1]ग्रामभूपतिः ।
सैव चात्र रिचमौण्ड[2]नामकं
कर्तुमैच्छदधिपं हि सत्वरम् ॥ ४३ ॥

टी०—य इति । यो बकिनग्रामभूपतिर्बकिनग्रामदेशाधिपो रिचार्डकुभुजे तन्नामकाय महीपतये [ गोत्राकुः पृथिवीपृथ्वीत्यमरः ] सहायतां राज्यप्राप्तिविषये साहाय्यं संददौ दत्तवान् हीति निश्चयेन स एव " सोऽचिलोपेचेत्पादपूरणमिति सुलोपः " बकिनग्रामभूपतिरत्रदेशे सत्वरं शीघ्रमेव रिचमौण्डनामकं तदाख्यकं पुरुषं अधिपं भूपं कर्तुं विधातुं ऐच्छत् इच्छतिस्म ॥

भा०—जिस बकिनग्रामदेशाधिपतिने रिचार्डराजाके लिये राज्यप्राप्तिविषय में सहायता दीथी यह निश्चयहै कि उसी बकिनग्रामभूपतिने यहां जल्दीही रिचमौण्डनामक पुरुषको राजा बनानाचाहा ॥ ४३ ॥

क्ष्मापतिर्झटिति शत्रुतां गतं
तं जिहिंस गलपाशबन्धनात् ।
यः परापकरणोद्यमोद्यत-
स्तस्य चास्ति निधनं सुखागतम् ॥ ४४ ॥

1. Buckingham. 2. Richmond.

टी०—क्ष्मापतिरिति । क्ष्मापतिर्महीपः स रिचार्डः शत्रुतामरिभावं गतं प्राप्तं तं बकिनघामभूपतिं झटिति शीघ्रमेव गले कण्ठे पाशबन्धनात् जिहिंस हतवान्. यः पुरुषः परस्यापकरणं अपकारस्तस्मिन्नुद्यतो बद्धपरिकरो भवति तस्य पुरुषस्य निधनं मृत्युर्मुखागतं सन्मुखप्राप्तो ऽस्ति भवतीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—राजारिचार्डने शत्रुभावको प्राप्त उस बकिनघामभूपतिको जल्दीही फांसी देकर मारदिया क्योंकि जो दूसरेके अपकार करनेमें उद्यत होताहै उसका मृत्यु सन्मुख प्राप्त होताहै ॥ ४४ ॥

बौसेवर्थसमरांगणे पुनः
सैव चात्र रिचमौण्डकाभिधः ।
तं रिचार्डनरपं महासिना
ऽच्छिनच्छरेभयुगभूमिते शाके ॥ ४५ ॥

टी०—बौसवर्थेति । पुनर्भूयः स एव "सोऽचिलोपेचेदिति सुलोपः" रिचमौण्डकाभिधस्तन्नामधेयः पुरुषः शरेभयुगभूमिते षडशीत्यधिकचतुर्दशशतमिते क्रैष्टशके अत्रदेशे बौसवर्थसमराङ्गणे बौसवर्थाख्यरणक्षेत्रे तं रिचार्डनरपं तन्नामकं भूपतिं महासिना करवालेनाच्छिनत् द्विधा ऽकरोत् ॥

भा०—अनन्तर उसी रिचमौण्डनामक पुरुषने १४८६ ईस्वीमें इसी देशमें बौसवर्थनामकरणक्षेत्रमें उस रिचार्डनामक राजाको तरवारसे मारडाला ॥४५॥

नीतिमान्स रिचमौण्डकाभिधो
हेनरीरिति नृपश्च सप्तमः ।
राज्यपीठमपरैर्दुरासद-
मध्यतिष्ठदहितान्वयान्तकः ॥ ४६ ॥

1. Bosworth. 2. Richmond. 3. Richard III.
4. Richmond ( Henry VII ).

टी०—नीतिमानिति। अहितान्वयस्य शत्रुकुलस्यान्तको यमस्वरूपो नीतिमान् न्यायशीलः स रिचमौण्डकाभिधो रिचमौण्डाख्यः सप्तमोहेनरी-रिति प्रसिद्धो नृपश्चसन् अपरैरन्यैर्दुरासदं दुष्प्रापं राज्यपीठं राज्यासनं अध्यतिष्ठत् तस्थौ "अधिशीङ्स्थासां कर्म्मइत्याधारस्य कर्म्मत्वम्"॥

भा०—शत्रुओंका कुलनाशक न्यायशील वह रिचमौण्डनामक पुरुष सप्तम हेनरीनामसे प्रसिद्ध राजा अन्यलोगोंसे दुष्प्राप्य राज्यासन पर बैठा॥ ४६॥

यश्चतुर्थइडवर्डभूमिप-<br>
स्तत्सुतांस रिचमौण्डहेनरीः।<br>
स्वीकरोतु विधिनेति संगरं<br>
वीक्ष्य भूपतिरतस्तथाऽकरोत्॥ ४७॥

टी०—य इति। यश्चतुर्थइडवर्डस्तन्नामको भूमिपो बभूवेति शेषः स रिचमौण्डहेनरी रिचमौण्डाभिधः सप्तमोहेनरीर्नृपः तत्सुतां इडवर्डपुत्रीं विधिना स्वीकरोतु परिणयतु इतीत्थं संगरं प्रतिज्ञां अधिकारिणामिति शेषः वीक्ष्यावलोक्य विज्ञायेति यावत् भूपतिर्हेनरीराजा ऽतः कारणात् तथा तादृशमेवाऽकरोद् व्यदधात्॥

भा०—जो कि चतुर्थएडवर्ड हुआ था यह रिचमौण्डहेनरीराजा उसकी पुत्रीका नियमपूर्वक पाणिग्रहणकरे इसतरह अधिकारीलोगोंकी प्रतिज्ञा देखकर राजा सप्तमहेनरीने उसीतरह किया॥ ४७॥

येन तत्र जनतामहीभुजो-<br>
वैरभावमपहृत्य तत्क्षणात्।<br>
सर्वसौख्यविभवैककारणं<br>
संमुदैव शुभसन्धिराबभौ॥ ४८॥

टी०—येनेति। येन विवाहहेतुना तत्र पुरे जनतामहीभुजोः प्रजा

1. Elward IV. 2. Richmond (Henry VII).

भूपत्योः तल्लग्नात् तत्समयात् वैरभावं शत्रुतां अपहृत्य दूरीकृत्य संमुदा शुभप्रीत्या एव सर्वेषां सौख्यं शर्म्म विभवऐश्वर्य्यं तयोरेककारणं केवलो हेतुरेवंविधः शुभसन्धिर्मैत्री आवभौ शुशुभे ऽजायतेति भावः ॥

भा०—जिससे कि वहां प्रजा और राजाका उसक्षणसे वैरभाव दूरकर बड़े प्रेमसे सबलोगोंका आनन्द और ऐश्वर्य्यका एक हेतुभूत मिलाप होगया ॥ ४८ ॥

सकलविषयभोगानन्दसन्दोहमुख्य-
प्रणयभरितचेतःसागराप्लावितात्मा ।
अवनिपतिरतन्द्रः स्वं समध्यास्यपीठं
निरवधिशुभकीर्तिं राज्यसौख्यञ्च लेभे ॥४६॥

टी०—सकलेति । सकलाः समग्रा ये विषयाः स्रक्चन्दनवनितादयस्तेषां यो भोगो विलासस्तस्य य आनन्दसन्दोहः सुखपरिपूर्तिस्तत्र यो मुख्यप्रणयः प्रेम तेन भरितः पूरितो यश्चेतःसागरश्चित्तसमुद्रस्तेनाऽऽप्लावितः प्रक्षालितः शुद्ध आत्मा यस्य अतएवातन्द्र आलस्यरहितो ऽवनिपतिः सप्तमोहेनरीभूपः स्वंपीठं राज्यासनं समध्यास्यास्थाय "अधिशीङित्याधारस्य कर्मत्वम्" निरवधि अवधिरहितं यथा तथा शुभकीर्तिं सुयशो राज्यसौख्यञ्च लेभेऽलब्ध । अत्र समस्तरूपकालङ्कारः । अस्मिन् पद्ये मालिनीवृत्तम् ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ॥

भा०—सम्पूर्ण विषयभोगके आनन्दपरिपूर्तिमें मुख्यप्रेमसे पूर्णचित्तरूपी सागरसे प्रक्षालित आत्मावाला अतएव आलस्यरहित राजा सप्तमहेनरीने अपने राज्यासन पर बैठकर निरन्तर शुभकीर्ति और राज्यसौख्य को प्राप्त किया ॥ ४९ ॥

इति उर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये अङ्गभूतलङ्काष्टर-
यौर्कभूपवंशवर्णनन्नाम तृतीयः सर्गः ॥ ३ ॥

——०※०——

# चतुर्थः सर्गः ॥

अथ भूमिपतिश्च हेनरीः[1]
पृथुकीर्तिः स्वबलार्जवैस्तदा ।
इडवर्ड[2]महीभुगात्मजा-
ग्रहणाद्राज्यममन्यत स्वकम् ॥ १ ॥

टी०—अथेति । अथानन्तरं तदा तस्मिन्समये स्वबलार्जवैर्निजपराक्रमसरलस्वभावैः पृथुकीर्तिर्बृहद्यशा हेनरीर्भूमिपतिश्च इडवर्डमहीभुज आत्मजा तनया तस्या ग्रहणात् परिणयात् स्वकं निजं राज्यं अमन्यत मेने अस्मिन्सर्गे सुन्दरीछन्दः अयुजोर्यदि सौ जगौ युजोः सभरालगौ यदि सुन्दरी तदा इति लक्षणात् ॥

भा०—अनन्तर उससमय अपने पराक्रम और सरलस्वभावसे सुयशको प्राप्त हेनरीनामकराजाने चतुर्थएडवर्डराजाकी पुत्रीके पाणिग्रहणसे राज्यको अपनाकरके माना ॥ १ ॥

मदमीलितदृग्विभर्जक-
स्तनयः क्लैरनिसा[3]चलापतेः ।
अहमेव भवामि निश्चित-
मिति वैलम्बरटो[4]ऽन्वकीर्तयत् ॥ २ ॥

टी०—मदेति । वै इति निश्चयेन मदेन मीलिता दृग्यस्यैवंविधो विभर्जको धान्यादिभर्जनशीलो लम्बरटो नाम कश्चित्पुरुषः क्लैरनिसो देशविशेषस्तस्याचलापते भूपतेस्तनयः पुत्रो निश्चितं सन्देहरहितं यथा तथा

1. Henry VII. 2. Elward IV. 3. Duke of Clarence. 4. Lambert.

ऽहमेव भवाम्यस्मि इति अन्वकीर्तयत् अकथयत् । अतोऽहमेव राज्याधिकारीति भावः ॥

भा०—यह निश्चयहै कि मदान्ध भड़भुजा लम्बरटनामकने ( क्लैरनिसदेश भूपतिका पुत्र निश्चयकरके मैं हीं हूँ ) इसतरह कहा ॥ २ ॥

अथ चायरलैण्डवासिना-
मुपलभ्याशु सहायतामसौ ।
युयुधे सह भूभुजातदा
भवतिस्थानमसम्पदां कुधीः ॥ ३ ॥

टी०—अथेति । अथानन्तरं तदा तस्मिन्समये आशु शीघ्रं आयरलैण्डवासिनां आयरलैण्डीयानां नृणां मनुष्याणां सहायतां साहाय्यं उपलभ्य प्राप्य भूभुजा हेनरीनृपेण सह युयुधे युद्धंकृतवान् कुधीः कुत्सितबुद्धिः पुरुषो ऽसंपदां विपत्तीनां स्थानं पात्रं भवतीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—अनन्तर उससमय जल्दीही उस लम्बरटने आयरलैण्डवासीलोगों की सहायताको पाकर राजाहेनरीकेसाथ लड़ाईकी क्योंकि दुष्टबुद्धिवाला पुरुष विपत्तियोंका स्थान होताहै ॥ ३ ॥

स महीपतिरत्र भर्जकं
प्रतिगृह्याशु हठाद्धृतश्रियम् ।
प्रथमं सुनियम्य तं पुन-
र्विदधे भाजनमार्जनाक्रियम् ॥ ४ ॥

टी०—सइति । समहीपतिर्भूपो ऽत्र संग्रामे हृतश्रियं नष्टशोभं भर्जकं लम्बरटं आशु शीघ्रं हठाद्बलात्कारात् प्रतिगृह्य गृहीत्वा प्रथमं पूर्वं सुनियम्य बध्वा पुनर्भूयस्तं लम्बरटं भाजनानां मार्जनं शुद्धिः सैव क्रिया कर्म्म यस्यैवंविधं विदधे चक्रे ॥

1. Ireland.

भा०—उस राजाहेनरीने इस संग्राममें नष्टशोभावाले भड्भुजे को जल्दी-ही हठसे पहिले बन्धनालयमें रखकर अनन्तर बर्तनमलनेवाला नौकर बनादिया ॥ ४ ॥

बलिभारनिरोपणान्नृषु
समरोपार्जितवस्तुसञ्चयात् ।
अपराधिजनानुदण्डना-
दभवद्भूमिपतिर्महाधनः ॥ ५ ॥

टी०—बलिभारेति । भूमिपतिर्महीपो नृषु जनेषु बलिभारनिरोपणाद् अधिकराजकरारोपणात् समरे संग्रामे उपार्जितानां वस्तूनां द्रव्याणां सञ्चयात् एकत्रीकरणात् तथा ऽपराधिजनानां दण्ड्यानामनुदण्डनाद्धेतो-र्महाधनो धनाढ्योऽभवदजायत । अत्र कारकाख्यो हेत्वलङ्कारः ॥

भा०—राजाहेनरी प्रजापर अधिककर लगानेसे संग्राममें जीतेहुए द्रव्यके सञ्चयसे और अपराधियोंको दण्डदेनेसे बड़ा धनाढ्य होगया ॥ ५ ॥

अथ नूनममेरिकास्थलं
सुशके युग्मनवाब्धिभूमिते
अवगम्य धराधरः पुरं
रचयामास बृहत्स तत्र तत् ॥ ६ ॥

टी०—अथेति । अथानन्तरं नूनमिति निश्चयेन स धराधरो भूपति-र्युग्मनवाब्धिभूमिते द्विनवत्यधिकचतुर्दशशतमिते सुशके शुभसंवत्सरे अमेरिकास्थलं तन्नामकं भूप्रदेशमवगम्य बुद्ध्वा तत्र स्थले बृहत्तत्प्रसिद्धं पुरं नगरं रचयामास निर्मापयाञ्चकार ॥

भा०—अनन्तर यह निश्चयहै कि उस राजाहेनरीने १४९२ ईसवीमें अमे-रिका भूप्रदेशको मालूमकर वहां बड़ाप्रसिद्ध नगर बनवाया ॥ ६ ॥

1. America.

नवखेषुमहीमिते शके
प्रथितः सप्तमहेनरीसुतः ।
स तु चाष्टमहेनरीर्नृपो
जनकान्ते पितुरासने ऽविशत् ॥ ७ ॥

टी०—नवखेषुमहीमित इति । नवखेषुमहीमिते नवाधिकपञ्चदश शतमिते क्रैष्टशके प्रथितोविख्यातः सप्तमहेनरीनृपस्यसुतः सो ऽष्टमहेनरीनृपस्तु जनकान्ते तातस्यावसाने पितुर्जनकस्यासने राज्यासने अविशत् तस्थौ ॥

भा०—१५०९ ईसवीमें वह प्रसिद्ध सप्तमहेनरीका पुत्र अष्टमहेनरीराजा पिताके समाप्तहोनेपर पितृसिंहासनपर बैठा ॥ ७ ॥

व्यवसायपरो दृढव्रतः
स्वधिया कार्य्यविधायकोऽधिपः ।
सुकुलीनजनाँश्च लैटिनं
विबुधैर्ग्रीकमपाठयन्मुदा ॥ ८ ॥

टी०—व्यवसायेति । व्यवसायपर उद्योगतत्परो दृढव्रतो निश्चलनियमः तथा स्वधिया निजबुद्ध्या कार्य्यविधायको ऽधिपो राजा मुदा हर्षेण विबुधैः पण्डितैः सुकुलेजाताः सुकुलीनाः "कुलात्खः खस्य ईन्" तेचतेजनास्तान् लैटिनं ग्रीकंचेत्यभिधानयुक्तेद्वे शास्त्रे ऽपाठयद् अध्यापयत् "अत्र गतिबुद्धिप्रत्यवसानार्थशब्देत्यादिना अण्यन्तावस्थायां यः कर्ता स ण्यन्तावस्थायां कर्म्म" ॥

भा०—उद्योगशील निश्चलनियमोपेत और अपनी बुद्धिसे कार्य्यकरनेवाले राजाहेनरीने हर्षसे पण्डितद्वारा अच्छे कुलीनपुरुषोंको लैटिन और ग्रीक शास्त्रों को पढवाया ॥ ८ ॥

---

1. Henry VIII. 2. Latin. 3. Greek.

अथ भूपतिरात्तविक्रियो-
ऽखिलहीनान्वयजान्नराँस्तदा ।
अनुजीविपदात्समुज्झिता-
नतिनैःस्व्योपहतानहेडत ॥ ९ ॥

टी०—अथेति । अथानन्तरं तदा तस्मिन्समये आत्तविक्रियो गृहीतविकारो भूपतीराजा अनुजीविपदात् सेवकस्थानात् समुज्झितान् परित्यक्तान् अतएव निःस्वस्यभावो नैःस्व्यं अत्यधिकंनैस्स्व्यं निर्धनत्वं तेनोपहतान् पीडितान् अखिलाः समग्रा ये हीनान्वयजा न्यूनकुलोत्पन्ना स्तान्नरान् अहेडत निरादृतवान् "हेडृ अनादरे धातोर्लङिरूपम्" ॥

भा०—अनन्तर उससमय कुपित राजाहेनरीने आजीविकासे पृथक् कियेहुए अतएव अतिदरिद्रताको प्राप्त कमजातिके लोगोंको निरादरयुक्त किया ॥ ९ ॥

घनसस्यसमोर्व्वरांभुव-
मकरोद्गोचरतां हि भूपतिः ।
गुरुकार्य्यसुषेविनो जनान्
निषिषेधात्महिताँस्तथैव सः ॥ १० ॥

टी०—घनेति । हीति निश्चयेन भूपतीराजा घनानि निविडानि सस्यानि धान्यानि यस्यां सा चासौ समा निम्नोन्नतभागरहिता उर्वरा धान्ययुक्ता भूमिः यद्यपि[उर्वरा सर्वसस्याढ्या इत्यमरात्] उर्वराशब्देनैव गतार्थत्वात् तथापि पुनर्घनसस्येति विशेषणस्य नपौनरुक्त्यम् अत्युत्कृष्टधान्यबोधार्थं "कर्णावतंसादिपदेकर्णादिध्वनिनिर्मितिः सन्निधानादिबोधार्थम्" इति नियमात् उर्वरा शब्दस्यग्रहणम् यद्वा [उर्वरातु भूमात्रे सर्वसस्याढ्य भुव्यपि इति हैमः] अत्रोर्वराशब्दस्य भूमात्रपरत्वात् । एवं विधां उर्वरां धान्योत्पादिनीं भुवं पृथ्वीं गोचरतां गावश्चरन्तियस्यां तद्भावयुक्तां अकरोत् तथैव तादृशमेव स भूपो गुरु बृहत्कार्यं सेवन्ते विदधते

ये तान् आत्मने हितान् आत्महितैषिणोजनान् निषिषेध कार्य्याद्दूरीचकार " उपसर्गात्सुनोतीत्यादिना षत्वम् " ॥

भा०—यह निश्चय है कि राजाहेनरीने अत्युत्कृष्ट धान्ययुक्त समभूमि को गोचर बनादिया तैसेही उसने बड़े बड़े आत्महितैषीकर्म्म कर लोग आजीविकासे पृथक् करदिये ॥ १० ॥

कृषका नृपसेवकाश्च ते
कृषिसेवापगमादकिञ्चनाः ।
अनुवेश्म च भैक्ष्यमोषणैः
स्ववयोयापनमाव्यधुस्तदा ॥ ११ ॥

टी०—कृषका इति । तदा तस्मिन्समये कृषकाः कृषिकर्म्मपरायणास्ते नृपसेवकाश्च राजोपजीविनः कृषिर्भूमिः सेवा राजानुचरत्वं तयोरपगमादभावात् निष्काशनादिति भावः अकिञ्चना दारिद्र्योपेताः सन्तोऽनुवेश्म वेश्मनि वेश्मनीत्यर्थः भैक्ष्यं भिक्षाकर्म्म मोषणानि स्तेयकर्म्माणि तैः करणभूतैः स्ववयसो निजजीवनकालस्य यापनं समापनं आव्यधुः अकार्षुः ॥

भा०—उससमय भूमि और आजीविकासे वञ्चित किसान और वे राजोपजीवी लोग घर घरमें भिक्षासे और चोरीकरने से अपनी उमर विताने लगे ॥ ११ ॥

अथ जर्म्मनिवासिलूथरः
स्वमतं धर्म्मपथं व्यशोधयत् ।
अतएव पुरोधसां तदा-
ऽपटुता दुष्कृतयोऽनुमेनिरे ॥ १२ ॥

टी०—अथेति । अथानन्तरं जर्मनिदेशे वसतीति सचासौ लूथरस्तन्नामकः पुरोहितः स्वमतं निजाभिसम्मतं धर्म्मपथं " ऋक्पूरब्धूःपथा-

1. Germany. 2. Luther.

मिति समासान्तो ऽप्रत्ययः" धर्म्ममार्गं व्यशोधयत् शुद्धीचकार अतएव कारणात् तदा तस्मिन्समये पुरोधसां पुरोहितानां अपटुता मौढ्यं दुष्कृतयो ऽन्यायाचरणानि अनुमेनिरे सर्वैरिति शेषः "कर्म्मणि लिट्"

भा०—अनन्तर जर्मनिदेशरहनेवाले लूथरनामक पुरोहित (पादरी) ने अपना अभीष्ट धर्म्ममार्ग शोधन किया जिससे कि उससमय सब पादरियोंका मूर्खत्व और दुराचरण सब जानेगये ॥ १२ ॥

अपराधविशेषकारिणीं
वनितां स्वां नृपतिस्तदा ऽत्यजत् ।
क्षितिपस्य पुरोधसो यतः
कलहो ऽभूल्लघुतोपलम्भकः ॥ १३ ॥

टी०—अपराधेति । तदा तस्मिन्समये नृपतिर्भूपो ऽपराधविशेषं करोतीति तथाविधां स्वां वनितां निजांस्त्रियं अत्यजत् अजहात् यतोयस्मात् कारणात् क्षितिपस्य भूपतेः पुरोधसो राजपुरोहितस्य लघुतोपलम्भको लाघवापादकः कलहो विवादो ऽभूत् ॥

भा०—उससमय राजाने विशेषापराधिनी अपनी स्त्रीको त्यागदिया जिससे कि राजा और पादरीका लघुताको प्राप्त करनेवाला विवाद हुआ ॥ १३ ॥

अथ भूमिपतिः प्रजार्थक-
स्स्वपरोद्वाहमकारयत्स्वकम् ।
निखिलार्थविशेषशालिनः
किमसाध्यं भवतीह मानिनः ॥ १४ ॥

टी०—अथेति । अथानन्तरं प्रजार्थकः सन्तत्यभिलाषुकः [ प्रजास्यात्सन्ततौजने इत्यमरः ] भूमिपतिर्महीपः स्वकं स्वकीयं अपरोद्वाहं द्वितीयपरिणयं अकारयद् व्यधापयत् इह जगति निखिला ये ऽर्थविशेषास्तैः शलते शोभते "शल चलनसंवरणयोरिति धातोरनेका-

र्थत्वात् " तस्य मानिनो मानवतः पुरुषस्यासाध्यं किमस्ति न किमपीति भावः इत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—अनन्तर सन्ततिकी इच्छावाले राजाने अपना द्वितीय विवाह करवाया क्योंकि इस जगत् में सर्वसम्पन्नमानी पुरुषको क्या असाध्यहै ॥ १४ ॥

चरमं नयकार्य्यकं तदा-
ऽभवदस्मिन्ननुशासति क्षितिम् ।
नृपतेर्गुरुतां निरूपयन्
सुनयः प्रादुरभूज्जनेष्वरम् ॥ १५ ॥

टी०—चरममिति । तदा तस्मिन्समये अस्मिन्नृपतौ क्षितिं पृथ्वीमनुशासतिसति चरममन्तिमं "चरेश्च इत्युणादिनिष्पन्नो ऽमच् प्रत्ययः" नयकार्य्यकं हाईकोर्टाभिधेयं नीतिकार्य्यं अभवद्जायत तथा नृपतेर्भूपस्य गुरुतां गौरवं निरूपयन् सम्पादयन् जनेषु लोकेषु सुनयः सुनीतिः अरमत्यर्थं प्रादुरभूत् प्रकटीबभूव ॥

भा०—उससमय इस राजाके राज्य करनेपर हाईकोर्टनामक न्यायकार्य्य प्रकटहुआ और राजाके महत्त्वका सम्पादनकरनेवाला लोगोंमें एक न्याय अतिशय से प्रसिद्ध हुआ ॥ १५ ॥

यतएव महीपतिं तदा
भजनस्थानसुराष्ट्रयोः प्रजाः
प्रभुरित्यनुमेनिरे धिया
सुखमापादयतीह सत्क्रिया ॥ १६ ॥

टी०—यतइति । यतएवकारणात् तदा तस्मिन्समये प्रजाः सर्वेजना महीपतिं भूमीशं भजनस्थानञ्चसुराष्ट्रञ्च तयोरुभयोः प्रभुः स्वामीति अनुमेनिरे बुबुधिरे इह जगति सत्क्रिया सत्कारः मान्यस्येति शेषः सुखं आपादयति जनयतीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—जिससे कि उससमय प्रजावर्गने अपनी बुद्धिसे राजाको गिरजाघरोंका और देशभरका मालिककरके माना क्योंकि जगत्में मान्यजनका मान सुखोत्पादन करताहै ॥ १६ ॥

निजधर्म्मविरोधिनो ऽधिपो
ननु प्रोटेष्टनजातिमानवान् ।
नयवर्त्मनिरीक्षणैकदृग्
जनदुर्वादभयाददीदहत् ॥ १७ ॥

टी०—निजेति । नन्विति निश्चयेन नयवर्त्मनि निरीक्षणं तत्रैकदृग् यस्यैवंविधो ऽधिपो निजधर्म्मे विरोधो येषां तथा विधाः प्रोटेष्टन जातयश्च ये मानवास्तान् जनानां यो दुर्वादः (दण्ड्यान्नदण्डयतीत्यपवादस्तद्भयात्) अदीदहत् भस्मीचकार ॥

भा०—यह निश्चयहै कि न्यायशील राजाहेनरीने अपने धर्म्मसे विरुद्ध प्रोटेष्टण्टजातिलोगों को जनापवाद भीतिसे भस्मकरदिया ॥ १७ ॥

कपटावृतचेतसो भृश
मिहकैथोलिकमानवान्नृपः ।
गलयन्त्रितपाशमूर्च्छितान्
गतजीवानकरोत्प्रतीपगान् ॥ १८ ॥

टी०—कपटेति । नृपोराजा इहास्मिन्नगरे प्रतीपगान् विपरीतभावान् कपटेनावृतं चेतो येषां तथाविधान् कैथोलिकास्तज्जातीया ये मानवास्तान् गले कण्ठे यन्त्रितो वेष्टितोपाशो गुणस्तेन मूर्च्छितान् वैचित्ययुक्तान् अतएव गतजीवान् विगतासूनकरोत् ॥

भा०—राजाने नन्दननगरमें विरुद्धमतिवाले कपटयुक्त कैथोलिकलोगोंको फांसीदेकर मारदिया ॥ १८ ॥

---

1. Protestant. 2. Catholic.

नृपतिं परिणेतुकामक-
सुपधेर्वारितवन्तमञ्जसा ।
सुनियन्त्रितदामकण्ठकं
किलमोरीख्यमघातयन्नृपः ॥ १६ ॥

टी०—नृपतिमिति । किलेति निश्चयेन नृपोराजा परिणेतुंकामोयस्य "तुम्कामनसोरपीति नियमात् मकारस्य लोपः" तथाविधं नृपतिं भूपमुपधेश्छद्मतः [ कपटो ऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे इत्यमरः ] वारितवन्तं प्रतिषेधितवन्तम् अतएव सुनियन्त्रितः परिवेष्टितो दाम्ना-कण्ठको यस्यैवंविधं मोराख्यं कञ्चित्पुरुषं अञ्जसा शीघ्रं अविचारितं यथातथा ऽघातयद् व्यनाशयत् ॥

भा०—यह निश्चयहै कि राजाने विवाहेच्छुक अपनेको छलसे निवारणकरने में उद्यत मोरनामक किसी पुरुषको फांसीदेकर जल्दीही मरवादिया ॥ १९ ॥

अथ भूमिपतिर्मदोच्छ्रितः
सचिवं क्रोम्बिलनामधेयकम् ।
अनुमन्त्र्य मठान्समन्ततो
लघुसारान्निरपातयत्क्रुधा ॥ २० ॥

टी०—अथेति । अथानन्तरं मदोच्छ्रितो मदोद्धतो भूमिपतिर्महीपः क्रोम्बिलनामधेयकं क्रोम्बिलाभिधं सचिवं मन्त्रिणमनुमन्त्र्य सम्बोध्य क्रुधा कोपेन समन्ततो ऽभितः लघुसारान् अनतिदृढान् मठान् देवालया-दीन् निरपातयद् उदखानयत् ॥

भा०—अनन्तर उस मदोत्कटराजाने क्रोम्बिलनामक अमात्यको सम्बोधनकर कोपसे सारेनगरके छोटे छोटे मन्दिर वगैरह उजड़वादिये ॥ २० ॥

1. More. 2. Cromwell ( Thomas ).

## ( विशेषकम् )

निजकर्म्मपरायणो वशी
भवतु ह्यत्र पुरोहितोऽग्रणीः ।
अबला पतिधर्म्मशालिनी
त्वनुवर्तेत पतिं पतिव्रता ॥ २१ ॥

मनुजश्च कदापि कश्चन
ननु कैथोलिक[1]लोकसम्मतान् ।
नियमान् खण्डितीहि नन्दने[2]
न विदध्यात्स मृतिं समेष्यति ॥ २२ ॥

इति भूमिपतिर्धुरन्धरो
निजराष्ट्रे पटहादिताडनैः ।
वशितादिषडाश्रवाँस्तदा
कुलधर्म्माभिमतानघोषयत् ॥ २३ ॥

टी०--निजेति। हीति निश्चयेन अत्र पुरेऽग्रणीरग्रगण्यः पुरोहितो निजकर्म्मपरायणः स्वाचरयुक्तः सन् अतएव वशी जितेन्द्रियो भवतु तथा पत्युर्धर्म्मं शलतेऽनुगच्छतीति "शल चलनसंवरणयोर्धातोर्णिनिप्रत्ययः ऋन्नेभ्योङीबितिङीप्" एवंविधाऽबला स्त्री तु पतिव्रता सती पतिं अनुवर्तेत अतिशयेनाज्ञाकारिणी भवत्वित्यर्थः ॥

ननु इह नन्दने नगरे कदापि कस्मिन्नपि समये कश्चन "चन शब्दे धातोः पचादित्वादच् प्रत्ययान्तमसाकल्येऽर्थे चन अव्ययं किंशब्देन युज्यते" [असाकल्ये तु चिच्चनेत्यमरः] मनुजो मनुष्यः कैथोलिकलोकैः

1. Catholic. 2. London.

सम्मतान् इतीदं षड् नियमान् न विदध्यात् न कुर्य्यात् स मनुजो मृतिं मृत्युं समेष्यति आप्स्यति ॥

धुरन्धरो भूमिपतिस्तदा तस्मिन्समये निजराष्ट्रे स्वविषये पटहादिताडनैः डिण्डिमवादनैः "उपलक्षणे तृतीया" इति पूर्वोक्तान् कैथोलिकसंमतान् कुलधर्म्माभिमतान् वशितादिषडाश्रवान् जितेन्द्रियत्वादिषण्नियमान् अघोषयद् घोषणायुक्तांश्चकार ॥

भा०—यह निश्चय है कि इस नन्दननगरमें मुख्य पादरी अपने धर्म्ममें तत्पर जितेन्द्रिय होकररहे पतिधर्म्मानुगामिनी अबला पतिव्रता होकर अपने पतिकी आज्ञापालन करनेवालीहो और इस नगरमें कोई भी मनुष्य कभी भी कैथोलिक लोगोंके संमत जितेन्द्रियत्वादि छः नियमों को न करेगा वह मृत्यु को प्राप्तहोगा इसतरह धुरन्धर राजाहेनरीने अपने राज्यभरमें डिण्डिमताडनपूर्वक निजकुलधर्म्म संमत वशितादि छः नियमों को घोषणायुक्त किया ॥ २१ । २२ । २३ ॥

अथ चेंग्लिशदेशवाग्विधौ
स्तवमन्त्राननुवाद्य लैटिनात् ।
नगवेदशरेन्दुसम्मिते
स शके मृत्युमवाप भूपतिः ॥ २४ ॥

टी०—अथेति । अथानन्तरं स प्रसिद्धो भूपती राजा लैटिनात् तन्नामकभाषाविषयात् इंग्लिशदेशस्य वाग्विधौ वाग्विधाने स्तवाश्च मन्त्राश्च तान् अनुवाद्य च परिवर्त्य च नगवेदशरेन्दुसंमिते सप्तचत्वारिंशदधिकपञ्चदशशतमिते क्रैष्टशके मृत्युं अवाप ययौ ॥

भा०—अनन्तर वह प्रसिद्ध राजा अष्टम हेनरी लैटिनभाषासे इंग्लिशभाषामें स्तोत्र मन्त्रादिकों को अनुवादकर १५४७ ईसवीमें मृत्यु को प्राप्त हुआ ॥ २४ ॥

अथ चाष्टमहेनरीसुत
इडवर्डः स हि षष्ठसंख्यकः ।

1. Latin. 2. Henry VIII. 3. Edward VI.

स्वपितुः परमासने ऽविशद्
नगमूर्ध्नीव कृतार्थकेसरी ॥ २५ ॥

टी०—अथेति। अथानन्तरं च हीति निश्चयेन अष्टमहेनरीराजस्य सुतः पुत्रः षष्ठसंख्यकः षष्ठसंख्यान्वितः स प्रसिद्ध इडवर्डः स्वपितुर्निजतातस्य परमासने श्रेष्ठराज्यपीठे कृतार्थकेसरी कृतकृत्यः सिंहो नगमूर्ध्नीव पर्वतमस्तक इवाविशत् तस्थौ ॥

भा०—अनन्तर राजा अष्टमहेनरीका पुत्र छठा एडवर्ड अपने पिताके उत्कृष्ट सिंहासन पर कृतकृत्य सिंह पर्वतमस्तकमें जैसा बैठा ॥ २५ ॥

नृपतेः खलु सेमियोरकः[1]
स्वपितृव्यः परिरक्षको भवन्।
बहुशास्त्रसुतत्त्वकोविदैः
सततं भूपमपाठयन्नयम् ॥ २६ ॥

टी०—नृपतेरिति। खल्विति निश्चयेन सेमियोरकस्तन्नामधेयो नृपतेर्भूपस्य स्वपितृव्यो निजकनिष्ठपितृव्यः परिरक्षको रक्षिता भवन्सन् बहूनि यानि शास्त्राणि तेषां सुतत्त्वं सारस्तत्र कोविदैः पण्डितैः करणैः सततं निरन्तरं यथा तथा भूपं राजानं नयं नीतिं अपाठयद् अध्यापयत् "गतिबुद्धीत्यादिना ण्यन्तावस्थायां भूपस्यापि कर्म्मत्वम्" ॥

भा०—यह निश्चयहै कि सेमियोरकनामक पुरुष भूपपितृव्य जो कि राजाका रक्षक नियत था उसने अच्छे अच्छे पण्डितोंसे राजा को निरन्तर नीतिशास्त्र पढ़वाया ॥ २६ ॥

स्वहठात्परिणेतुमिच्छतो
नरपां स्कौट[2]भुवस्तु मेरिकाम्[3]।

---

1. Seymour. 2 & 3. Queen of Scots ( Mary ).

नृपतेः खलु तत्र संगरो
मनुजैः सार्धमभूद्विरोधिभिः ॥ २७ ॥

टी०--स्वहठादिति । खल्विति निश्चयेन स्कौटभुवरतन्नामकदेशभूभागस्य नरपां नरेश्वरीं मेरिकां स्त्रियं तु स्वहठात् निजबलात्कारात् परिणेतुं विवाहयितुमिच्छतो नृपतेरिडवर्डस्य तत्र स्कौटदेशे विरोधिभिर्द्वेपपरैर्मनुजैः सार्धं संगरः संग्रामो ऽभूद् अजनि ॥

भा० --यह निश्चयहै कि स्कौटदेशकी रानी मेरी नाम वनिता को अपने हठसे विवाह करनेकी इच्छावाला राजा एडवर्डका स्कौटदेशमें विरोधविशिष्ट वहांके लोगों के साथ संग्राम हुआ ॥ २७ ॥

अथ धर्म्मविशोधनात्पुन-
रभिजाताः स्तुतयो ऽभवँस्तदा ।
यत एव पुरोहितादयो
नगरे ऽस्मिन् समुदं समासत ॥ २८ ॥

टी०--अथेति । अथानन्तरं तदा तस्मिन्समये पुनर्भूयो धर्म्मविशोधनाद् धर्मस्य शुद्धीकरणात् स्तुतयः स्तोत्रादयो ऽभिजाता नूतना अभवन् यत एव कारणात् पुरोहितादयः सर्वे जना अस्मिन्नगरे समुदं सहर्षं यथा तथा "आयः इति समास...न्तष्टुञ्ज्ञा" समासत अतिष्ठन् ॥

भा०—अनन्तर उससमय फिर धर्म्मशोधनसे नूतन स्तोत्रादिक हुए जिससे कि पादरी वगैरह लोग इस नगरमें हर्षपूर्वक रहनेलगे ॥ २८ ॥

युधि भूपतिना हतश्रियां
ननु डेभोननिवासिनां ततः ।
भजतां गृहवस्तुसञ्चय-
मधिपस्तत्र हठादुपाग्रहीत् ॥ २९ ॥

1. Devon.

टी०—युधीति। नन्विति निश्चयेन ततो ऽनन्तरं अधिपो राजा युधि संग्रामे भूरतिना हेतुभूतेन हतश्रियां नष्टशोभानां डेभोननिवासिनां पुरुषाणां तत्र डेभोने विषये भजनागृहाणां यानि वस्तूनि तेषां संचयं समुदायं हठाद् बलात्काराद् उपाग्रहीत् स्वीचकार ॥

भा०—यह निश्चयहै कि अनन्तर राजा एडवर्डने संग्राममें अपने पराक्रम से हरायेहुए डेभोननिवासी लोगोंके गिरजाघरोंका संचितद्रव्य हठसे ग्रहण कर लिया ॥ २९ ॥

नृपतिर्ननुसेमियोरक-
मृजुभावं त्वपवादरोपणात्।
प्रथमं स्वपदात्परिच्युतं
पुनरेनं न्यवधीन्मुधैव सः ॥ ३० ॥

टी०—नृपतिरिति। नन्विति निश्चयेन स नृपतिर्भूप ऋजुभावं सरलस्वभावं सेमियोरकं नाम स्वपितृव्यं अपवादरोपणात् मिथ्यादोषाभिनिवेशात् प्रथमं स्वपदात् निजाजीविकाविषयात् परिच्युतं दूरीकृतं पुनर्भूयो मुधा एव व्यर्थमेव एनं सेमियोरकं न्यवधीत् हतवान् ॥

भा०—यह निश्चयहै कि उस राजा एडवर्डने सरलस्वभाववाले सेमियोरक नामक अपने पितृव्यको जो कि पहिले मिथ्यादोष लगाने से स्वपदच्युत किया गयाथा उसीको फिर व्यर्थही मारदिया ॥ ३० ॥

अथ भूपतिरात्ममन्त्रिण-
मितिनौर्दम्बरलैण्डभूमिपम्।
विदधे किल वारवीककं
स्वसमग्रार्थविधानशिक्षितम् ॥ ३१ ॥

टी०—अथेति। अथानन्तरं किलेति निश्चयेन भूपती राजा नोर्द-

1. Seymour. 2. Northumberland. 3. Warwick.

म्बरलैएडस्य भूमिं भूपतिं वारवीककं तन्नाम्ना प्रसिद्धं पुरुषं स्वस्य यः समग्रार्थः सर्वप्रयोजनं तस्य विज्ञाने शिक्षितं अभिज्ञं इति हेतोः आत्ममन्त्रिणं स्वामात्यं विदधे चक्रे ॥

भा०—अनन्तर यह निश्चयहै कि राजाने अपने समस्तकार्य्यमें कुशल नौर्दम्बरलैण्डाधिपति वारवीक नामक पुरुषको अपना मन्त्री बनालिया ॥ ३१ ॥

इडवर्ड[1]महीपतिस्ततः
शुचिबाणेषुमहीमिते शके ।
परलोकमगाद्धि नश्वरं
जगदेतत्परिरह्य यौवने ॥ ३२ ॥

टी०—इडवर्डेति । ततोऽनन्तरं इडवर्डमहीपतिस्तन्नामको भूपो यौवने युवावस्थायां नश्वरं भंगुरं एतज्जगत्परिरह्य त्यक्त्वा शुचिबाणेषुमहीमिते त्रयः पञ्चाशदधिकपञ्चदशशतमिते क्रैष्टशके परलोकं लोकान्तरं अगात् प्रापत् ॥

भा०—यह निश्चयहै कि अनन्तर राजा एडवर्ड यौवनावस्थामें इस असार संसारको छोड़कर १५५३ ईसवीमें लोकान्तरको प्राप्तहुआ ॥ ३२ ॥

अथ चाष्टमहेनरी[2]सुता
मुदितैर्नन्दनवासिभिर्जनैः ।
धरणीधरणक्षमा तदा
ननु मेरी[3] नरपालिका ऽभवत् ॥ ३३ ॥

टी०—अथेति । अथानन्तरं च धरण्याः पृथिव्या धरणे पालने क्षमा समर्था अष्टमहेनरीराजस्य सुता पुत्री मेरी एतन्नाम्ना प्रसिद्धा स्त्री मुदितैः प्रसन्नैर्नन्दनवासिभिर्जनैर्लोकैर्हेतुभूतैर्नरपालिका नृपा ऽभवत् अजायत ॥

1. Edward VI. 2. Henry VIII. 3. Mary (Henry VIII's daughter ).

भा०—अनन्तर उससमय प्रजापालनके योग्य अष्टमहेनरीकी पुत्री मेरी नामिका स्त्री हर्षयुक्त नन्दनवासी लोगों से नरेश्वरी कीगई ॥ ३३ ॥

स्वविवाहमहोत्सवं ततः
फिलिपा स्पेनमहीभुजा समम् ।
युवती किल हेनरीसुता-
ऽसमरूपा ऽवनिपा व्यधत्त सा ॥ ३४ ॥

टी०—स्वविवाहेति । किलेति निश्चयेन ततो ऽनन्तरं हेनरीसुता ऽवनिपा नरेश्वरी असमरूपा ऽनुपमसौन्दर्य्या युवती नूतनवयाः सा मेरी स्पेनमहीभुजा स्पेनदेशाधिपतिना फिलिपा तन्नामकेन यूना समं सार्धं स्वविवाहस्य निजपरिणयस्य महोत्सवं आनन्दं व्यधत्त अकुरुत ॥

भा०—यह निश्चयहै कि अनन्तर हेनरीराजाकी पुत्री रूपवती और युवती उस नरपालिका मेरीने स्पेनदेशाधिपति फिलिप्के साथ अपना विवाहोत्सव किया ॥ ३४ ॥

कलहैकरसाः प्रतीपगा
ननु प्रोटेष्टनटेलरादयः ।
रिपुसंघकृतान्तया तया
धरणीश्या ज्वलनेन देहिरे ॥ ३५ ॥

टी०—कलहेति । नन्विति निश्चयेन रिपूणां संघः समुदायस्तत्र कृतान्तया यमस्वरूपया तया धरणीश्या नरपालिकया कलहैकरसा विवादप्रिया अतएव प्रतीपं विपरीतं गच्छन्तीति तथाविधाः प्रोटेष्टनजातीयाश्च ते टेलरादयः पुरुषा ज्वलनेन वह्निना करणेन देहिरे भस्मीचक्रिरे "कर्म्मणि लिट्" ॥

भा०—यह निश्चयहै कि शत्रुसमुदायमें यमस्वरूप उस मेरीनामक रानी से

1. Philip. 2. Spain. 3. Protestant. 4. Taylor(Rowland).

कलहप्रिय अतएव विपरीतकार्य्य करनेवाले प्रोटेष्टण्टजातीय टेलरादिक लोग अग्नि से फूँके गये ॥ ३५ ॥

अथ नन्दनवासिनां[1] पुनः
समभूत्फ्रान्सिभिराहवः समम् ।
विजितं पुरमैंग्लिशैः पुरा-
ऽन्वजयत्फ्रान्सपतिः[2] सकैलकम्[3] ॥ ३६ ॥

टी०—अथेति । अथानन्तरं पुनर्भूयो नन्दनवासिनामैंग्लिशानां आहवः समरः फ्रान्सिभिः पुरुषैः समं सार्धं समभूदजायत स फ्रान्सपतिः फ्रान्सेश्वरः पुरा पूर्वं ऐंग्लिशैः पुरुषैर्विजितं स्वायत्तीकृतं कैलकं नाम पुरं नगरं अन्वजयद् विजिग्ये ॥

भा०—अनन्तर फिर ऐंग्लिशलोगोंका संग्राम फ्रान्सवासियोंके साथ प्रवृत्त हुआ फ्रान्सदेशाधिपतिने पहिले ऐंग्लिशोंके जीतेहुए कैलनामक नगरको जीत लिया ॥ ३६ ॥

निजसद्मनि हेनरीसुता
गजबाणेषुमहीमिते शके ।
सुखसंस्थितजीवहारिणं
नृपतिर्मृत्युमवाप तत्क्षणम् ॥ ३७ ॥

टी०—निजेति । नृपतिर्नरपालिका हेनरीसुता मेरी गजबाणेषुमहीमिते अष्टपञ्चाशदधिकपञ्चदशशतमिते क्रैष्टशके निजसद्मनि स्वगृह एव नत्वन्यत्र सुखसंस्थितानां जीवं हरतीत्येवंविधं मृत्युं तत्क्षणं अवाप प्रापत् ॥

भा०—हेनरीराजाकी पुत्री मेरीनामिका रानी १५५८ ईसवीमें अपनेही घरमें सुखस्थितलोगोंके प्राण हरनेवाले मृत्यु को जल्दीही प्राप्तहोगई ॥ ३७ ॥

---

1. London. 2. France. 3. Calais.

भगिनीमरणादनन्तरं
नृपतिश्चेलिजवेथनामिका ।
मुदिताष्टमहेनरीसुता
जनमत्या ऽविशदग्रजासने ॥ ३८ ॥

टी०—भगिनीति । भगिनीमरणाद् अनन्तरं अष्टमहेनरीसुता मुदिता प्रसन्नाकृतिः इलिजवेथनामिका नृपतिर्नरेश्वरी सती जनमत्या लोकसंमत्या अग्रजाया मेर्य्या आसने राज्यपीठे ऽविशत् तस्थौ ॥

भा०—भगिनीमरणके अनन्तर अष्टमहेनरीराजाकी पुत्री प्रसन्नाकृति इलिजवेथनामिका स्त्री रानीहोकर लोकसंमतिसे अपनी ज्येष्ठभगिनीके राज्यासन पर बैठी ॥ ३८ ॥

अथ सेलिजवेथभूपति-
र्ननु प्रोटेष्टनजातिसम्भवात् ।
निरकाशयदाशु नन्दना-
न्निजकैथोलिकजं पुरोधसम् ॥ ३९ ॥

टी०—अथेति । अथानन्तरं नन्विति निश्चयेन सा इलिजवेथभूपतिस्तन्नामिका नरपालिका प्रोटेष्टनजातौ संभव उत्पत्तिस्तस्माद्धेतोः निजः स्वकीयः कैथोलिकजः कैथोलिकजातौ समुत्पन्न एवंविधं पुरोधसं आशु शीघ्रं नन्दनान्नगरात् निरकाशयत् निष्काशयाञ्चकार ॥

भा०—अनन्तर यह निश्चयहै कि रानी इलिजवेथने प्रोटेष्टएट होनेसे अपने कैथोलिकजातिसमुत्पन्न पादरीको नन्दननगरसे शीघ्रही निकालदिया ॥ ३९ ॥

इह चेंग्लिशदेशवर्त्तिभिः
सदृशं पूजनकर्म्म कुर्वताम् ।

---

1. Elizabeth. 2. Elgabeth. 3. Protestant. 4. Loudon. 5. CatLolie. 6. England.

मनुजा नरपालिकेति तां
बृहदाज्ञामकरोत्स्वराष्ट्रके ॥ ४० ॥

टी०—इहेति । इह च देशे मनुजाः सर्वे जना इंग्लिशदेशे वर्तन्त इति तैः पुरुषैः सदृशं तुल्यं पूजनकर्म्म सपर्याविधानं कुर्वताम् कुर्य्युः नरपालिका इतीत्थं तां प्रसिद्धां बृहदाज्ञां 'स्त्रियाः पुंवद्भाषितेति पुंवद्भावः'' महदनुशासनं स्वराष्ट्रे निजविषये ऽकरोद् व्यदधात् ॥

भा०—इस देशमें सबलोग इस इंग्लिशदेशवासियों के समान पूजनादिकर्म्म करें रानीने इसतरह बड़ी आज्ञा अपने राज्यभरमें करदी ॥ ४० ॥

अथ सेलिजवेथनामिका–
ऽजनि हीनाष्टमहेनरीसुता ।
ननु सप्तमहेनरीसुता–
सुतपुत्री कुलजैव मेर्य्यभूत् ॥ ४१ ॥

टी०—अथेति । अथानन्तरं सा इलिजवेथनामिका ऽष्टमहेनरीभूपस्य सुता पुत्री हीना अल्पकुलोत्पन्ना अजनि अभूत् । ननु सप्तमहेनरीसुतायाः सुतस्य पुत्री मेरी कुलजा कुलोत्पन्ना ऽभूत् ॥

भा०—वह इलिजवेथनामिका रानी अष्टमहेनरीराजाकी पुत्री कमसलथी और यह निश्चयहै कि सप्तमहेनरीराजाकी पुत्रीके पुत्रकी कन्या मेरी नामिका स्त्री कुलोत्पन्न थी ॥ ४१ ॥

इति मेर्य्यभिधानिका तदा
किल कैथोलिकजातिसंभवात् ।
नृपपीठमबोधयत्स्वकं
प्रयुयुत्सुः सुकुलावलेपतः ॥ ४२ ॥

1. Elizabeth. 2. Henry. VIII. 3. Mary ( Queen of Scots ).

टी०—इतीति । किलेति निश्चयेन तदा तस्मिन्समये इतीत्थं सुकुलस्यावलेपतो गर्वतः प्रयुयुत्सुर्योद्धुमिच्छुर्मेर्य्यभिधानिका स्त्री कैथोलिकजातौ संभवाद्धेतोर्नृपपीठं राज्यासनं स्वकं निजं अबोधयत् सर्वानज्ञापयदिति भावः ॥

भा०—यह निश्चयहै कि उससमय इसतरह अपने अच्छेकुलके गर्वसे युद्ध करनेकी इच्छावाली मेरीनामिका स्त्रीने कैथोलिकजातीय होनेसे राज्यासनपर अपना अधिकार सबको बोधनकराया ॥ ४२ ॥

स बभूव महाहवो भृश-
मिति मेरीलिजबेथयोस्तदा ।
युधि डार्नलिनामको बली
ननु मेरीपतिरन्त्यमभ्यगात् ॥ ४३ ॥

टी०—स इति । तदा तस्मिन्समये मेरीलिजबेथयोः स्त्रियोरितीत्थं स प्रसिद्धो महाहव आयोधनं भृशमत्यर्थं बभूव नन्विति निश्चयेन बली प्रबलो डार्नलिनामक एतन्नामधेयो मेरीपतिर्युधि संग्रामे ऽन्त्यं मरणं अभ्यगात् प्रापत् ॥

भा०—उससमय मेरी और इलिजबेथका इसतरह बड़ा संग्रामहुआ और उस संग्राममें बड़ा बलवान् डार्नलिनामक मेरीका पति मृत्युको प्राप्तहुआ ॥ ४३ ॥

अथ मेर्य्यबला महारणात्
प्रथितस्कौटभुवः पलायत ।
इति सेंग्लिशवासिभिस्तदा
स्वबलाद्बन्दिगृहं न्यवेश्यत ॥ ४४ ॥

टी०—अथेति । अथानन्तरं मेरी अबला एतन्नामिका स्त्री प्रथिता विख्याता या स्कौटदेशस्य भूस्तस्याः स्कौटदेशस्थलविशेषादित्यर्थः महा-

1. Darnley. 2. Scotland.

रणात् संग्रामात् पलायत "उपसर्गस्यायतावित्युपसर्गस्थरेफस्य लत्वम्" भग्ना बभूव तदा तस्मिन्समये इंग्लिशवासिभिर्जनैः सा मेरी इति हेतोः स्वबलात् निजपराक्रमाद् बन्दिगृहं बन्धनालयं न्यवेशयत न्ययोज्यत ॥

भा०—अनन्तर मेरीनामिका स्त्री स्कौटदेशसे संग्रामसे पलायनयुक्त हुई उससमय इंग्लिशदेशनिवासियोंसे इसीकारण अपने बलात्कारसे बन्धनालयमें रक्खी गई ॥ ४४ ॥

नरवाहनदिङ्निवासिनो
वयमत्रेलिजवेथनामिकाम्[1] ।
प्रणिहत्य विदध्महे नृपां
किल मेरीमिति[2] मन्त्रणां व्यधुः ॥ ४५ ॥

टी०—नरेति । किलेति निश्चयेन वयं इलिजवेथनामिकां नृपां प्रणिहत्य "नेर्गदेतिसूत्रेणोपसर्गस्थान्निमित्तान्नेरुपसर्गस्य णत्वम्" विहिंस्य अत्र राज्ये मेरीं नृपां विदध्महे कुर्महे इति त्यं नरवाहनस्य कुवेरस्य दिशि निवसन्तीति ते जना मन्त्रणां संमतिं व्यधुरकार्षुः ॥

भा०—यह निश्चयहै कि हमलोग इलिजवेथको मारकर मेरीको इस देशकी रानी नियत करते हैं इसतरह उत्तरदिशा की तरफ़ रहनेवाले लोगोंने संमति की ॥ ४५ ॥

पृतनाध्रसरं महाबलं
ननु नौफौकभटं[3] तदेंग्लिशाः ।
अभिजघ्नुरुरण्यदंष्ट्रिणां
प्रबलं कोलमिवास्त्रपाणयः ॥ ४६ ॥

टी०—पृतनेति । नन्विति निश्चयेन तदा तस्मिन्समये ऐंग्लिशा

---

1. Elizabeth. 2. Mary. 3. Norfolk.

जना महाबलं बलिष्ठं पृतनाग्रसरं विपक्षसेनाग्रगण्यं नौफौंकनामकं भटं वीरं अस्त्राणि पाणिषु येषां तथाविधाः पुरुषा अरण्यदंष्ट्रिणां वन-सूकराणां "यतश्च निर्धारणमिति षष्ठी। न निर्धारणे इति समासनिषेधः" प्रबलं अतिबलोपयुक्तं कोलं वराहमिव [ वराहः सूकरो घृष्टिः कोलः पोत्री किरः किटिः। दंष्ट्री घोणीत्यमरः ] अभिजघ्नुः अवधिषुः। अत्रोपमाल-ङ्कारः साधर्म्यमुपमाभेदे इति लक्षणात् ॥

भा०—यह निश्चयहै कि ऐंग्लिशलोगोंने बलिष्ठ विपक्षसेनाग्रगण्य नौफौं-कनामक वीरको अस्त्र लिये पुरुष जिसतरह जङ्गली सूकरोंमें प्रबल वराहको मारते हैं उसीतरह मारदिया ॥ ४६ ॥

अथ सेलिजवेथभूमिपा
प्रकृतिं रञ्जयति स्म नित्यशः ।
जनताश्च समुन्नतिं गता
नृपतिं प्रेमभरैरुपासत ॥ ४७ ॥

टी०—अथेति। अथानन्तरं सा इलिजवेथभूमिपा प्रकृतिं प्रजां नि-त्यशो रञ्जयतिस्म प्रसन्नामकरोत् समुन्नतिं उदयंगताः प्राप्ता जनताश्च "ग्रामजनबन्धुभ्यस्तल् तलन्तं स्त्रियाम्" नृपतिं भूमिपां प्रेमभरैः स्नेह-प्राचुर्यैः उपासत असेवन्त ॥

भा०—अनन्तर उस इलिजवेथरानीने प्रजाको अच्छीतरह प्रसन्नकिया और ऐश्वर्य्य को प्राप्त जनताने भी बड़े प्रेमसे रानीकी सेवाकी ॥ ४७ ॥

बहुयन्त्रकलादिकं तदा
विविधं भोजनमुन्नता गृहाः ।
सुबभूवुरमन्ददिष्टिना-
मसुलभ्यं किमिहास्त्यतन्द्रिणाम् ॥ ४८ ॥

---

1. Elizabeth.

टी०—बहिति । तदा तस्मिन्समये बहुयन्त्राणां कलादिकं क्रियाकौशलादिकं तथा विविधं नानाप्रकारं भोजनं खाद्यवस्तु तथा उन्नता उच्छ्रिता गृहाः [ गृहाः पुंसि च भूम्न्येवेत्यमरः ] सुबभूवुः सुष्ठु अजायन्त इह जगति अतन्द्रिणामालस्यरहितानां अमन्ददिष्टिनां प्रबलभाग्यवतां जनानां असुलभ्यं अप्राप्यं किमस्ति न किमपीति भावः इत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—उससमय बहुत यन्त्रादिककला नानाप्रकारके खाद्यवस्तु और ऊंचे ऊंचे घर होगए क्योंकि आलस्यरहित भाग्यशाली मनुष्योंको दुष्प्राप्य क्या वस्तु है ॥ ४८ ॥

ननु सेक्सपियर्[1] कविस्तदा
प्रथितोऽनेककलासु कोविदः ।
कवितामभिजातपद्धतिं
सरसां मूर्त्तिमतीमिवाऽतनोत् ॥ ४९ ॥

टी०—नन्विति । नन्विति निश्चयेन तदा तस्मिन् समये अनेककलासु कोविदो विद्वान् प्रथितो विख्यातः सेक्सपियर्नामकः कविः अभिजातपद्धतिं नूतनमार्गविशिष्टां सरसां शृङ्गारादिरसोपेतां कवितां काव्यरचनां मूर्तिमतीमिव स्वरूपविशिष्टामिवातनोद् विस्तारितवान् अत्रोत्प्रेक्षालङ्कारः ॥

भा०—यह बात प्रसिद्धहै कि अनेक कलाओंमें चतुर विख्यात सेक्सपियर्नामक कविने नवीन और रसयुक्त मानो मूर्त्तिविशिष्ट कविताको जैसा बनाया ॥ ४९ ॥

अतिनिःस्ववतां च रक्षणे
सुनयस्तत्प्रथमः समुद्ययौ ।
नयवर्त्मकृतार्थसम्पदां
ननु लक्ष्मीर्व्रजतीह सत्क्रियाम् ॥ ५० ॥

1. Shakespear.

टी०—अतीति। अतिनिःस्ववतां अतिदारिद्र्योपेतानां जनानामिति शेषः रक्षणे परित्राणविषये स एव प्रथमो यस्य तादृशः सुनयः समुच्चयौ प्रकटीबभूव नन्विति निश्चयेन इह जगति नयस्य वर्त्मना मार्गेण कृता अर्थस्य धनस्य संपत्समृद्धिर्यैस्तादृशानां जनानां लक्ष्मीः श्रीः सत्क्रियां सत्कर्म्म सत्कारं वा व्रजति प्राप्नोतीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते॥

भा०—गरीबोंके रक्षाविषयमें उससमय पहिलेपहिल एकन्याय प्रकटहुआ क्योंकि न्यायसे सञ्चित द्रव्यवाले जनोंकी लक्ष्मी अच्छे सत्कर्म्म वा सत्कारको प्राप्त होती है। ५०॥

मनुजैश्च निरादृतोऽभव-
दिह कैथोलिक[1]जातिमानवः।
नियतेर्विधुरा हि पूरुषा
उपयान्तीह दशां विसंष्ठुलाम्॥ ५१॥

टी०—मनुजैरिति। इहेंग्लिशदेशे कैथोलिकजातिविशिष्टो मानवो जनो मनुजैस्तत्रत्यलोकैर्निरादृतोऽपमानयुक्तोऽभवत् इति निश्चयेन नियतेर्भाग्याद्विधुरा अभिभूताः पूरुषा इह जगति विसंष्ठुलां विपरीतां दशामवस्थां उपयान्ति प्राप्नुवन्तीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते॥

भा०—इंग्लिशदेशमें कैथोलिकजातीयजन वहांके लोगोंसे निरादरयुक्त हुआ क्योंकि भाग्यरहितलोग इस संसारमें विपरीतदशाको प्राप्तहोते हैं॥ ५१॥

उदयंगमिता दिवानिशं
ननु प्रोटेष्टन[2]जातयस्तदा।
अतिमोदवता पुरोधसा-
मभवच्चेलिज[3]बेथिका प्रभुः॥ ५२॥

टी०—उदयमिति। नन्विति निश्चयेन प्रोटेष्टनजातय एतज्जातिवि-

1. Catholic. 2. Protestant. 3. Elizabeth.

शिष्टा जना दिवानिशं रात्रिदिवं उदयं ऐश्वर्य्यं गमनं गमः संजातो येषा-मित्यजन्तात् "तदस्य संजातमिति तारकादित्वादितच्" गमिता गमनयुक्ता अभूवन्निति शेषः तदा तस्मिन्समये इलिजवेथिका नृपा ऽति-मोदवतां अत्यानन्दयुक्तानां पुरोधसां पुरोहितानां च प्रभुः स्वामिनी अभवत् पुरोहितानामत्यौद्धत्यात् पुरा न कोऽपि तेषां प्रभुरभवदिति भावः ॥

भा०— यह निश्चयहै कि प्रोटेष्टण्टजातीयलोग प्रतिदिन ऐश्वर्य्यको प्राप्तहुए और उससमय इलिजवेथरानी अतिहर्षयुक्त पादरियोंकीभी स्वामिनी हुई ॥ ५२ ॥

अथ रोमनिवासिनस्तदा
समुपागम्य पुरोधसो ऽमलाः ।
इह चेंग्लिशवासिनो जनान्
स्वमतं धर्म्मपथं व्यशुश्रुवन् ॥ ५३ ॥

टी०—अथेति । अथानन्तरं तदा तस्मिन्समये रोमे देशविशेषे निव-सन्तीति तथाविधा अमलाः शुद्धाः पुरोधस इहैंग्लिशे देशे समुपागम्य प्राप्य इंग्लिशे वसन्तीति ताञ्जनान् स्वस्य मतं निजसंमतं धर्म्मस्य पन्था-स्तम् "ऋक्पूरब्धूरिति समासान्तो ऽप्रत्ययः" व्यशुश्रुवन् श्रावयाम्बभूवुः ॥

भा०—अनन्तर उससमय रोमदेशवासी पवित्र पादरीलोगोंने इंग्लिशदेशमें आकर इंग्लिशदेशनिवासीलोगों को अपने संमत धर्म्ममार्ग को सुनाया ॥ ५३ ॥

ननु रोमपुरोधसां गिरं
विनिशम्येलिजवेथनामिका ।
अविभेत्स्वमताभिखण्डना-
त्स्वनयात्तानथ सात्वपेठयत् ॥ ५४ ॥

टी०—नन्विति । नन्विति निश्चयेन इलिजवेथनामिका ऽवनिपा रोम-

1. & 2. Rome. 3. Elizabeth.

देशस्य पुरोधसां पुरोहितानां गिरं वाचं विनिशम्य स्वमतस्य प्रोटेष्टनजातिधर्म्मस्याभिखण्डनाद् व्यपोहनाद् अबिभेद् भययुक्ता बभूव अथानन्तरं सा ऽधिपा तु स्वनयात् निजनीत्यास्तान् पुरोहितान् अपेठयत् क्लेशयुक्तानकरोत् " भवादेः पिठ हिंसासंक्लेशनयोर्धातोर्णिचि लङि रूपम् " ॥

भा०—यह निश्चयहै कि इलिजबेथरानी रोमदेशीय पादरियोंके व्याख्यान सुनकर अपने प्रोटेष्टण्टजातिधर्म्मके खण्डनसे भयभीत होगई अनन्तर रानीने तो फिर अपने न्यायसे उन पादरियों को दुःखदेना आरम्भ किया ॥ ५४ ॥

अथ चेंग्लिशदेशमञ्जसा
गजनागेषुमहीमिते शके ।
तरणीनिवहावृतः फिलिप्[1]
नृपतिर्जेतुमुपागमत्क्रुधा ॥ ५५ ॥

टी०—अथेति । अथानन्तरं गजनागेषुमहीमिते अष्टाशीत्यधिकपञ्चदशशतमिते क्रैष्टशके तरणीनां निवहेनावृतो युक्तः फिलिप् एतन्नामधेयो नृपतिः स्पेनदेशाधिपो ऽञ्जसा शीघ्रं इंग्लिशदेशं जेतुं स्वायत्तीकर्तुं क्रुधा कोपेन " इत्थंभूतलक्षणे तृतीया " उपागमत् प्राप ॥

भा०—अनन्तर १५८८ ईसवी में नौकाओंके समूह ( आरमैडा ) युक्त फिलिप्नामक स्पेनदेशाधिपति इंग्लिशदेशको जीतनेके लिये बड़ेक्रोधसे शीघ्र आपहुँचा ॥ ५५ ॥

विषयावनहेतवे तदा
किल प्रोटेष्टन[2]जातिमानवाः ।
शुभसन्धिमकुर्वता ऽखिलाः
सह कैथोलिक[3]जातिपूरुषैः ॥ ५६ ॥

टी०—विषयेति । किलेति निश्चयेन तदा तस्मिन्समये ऽखिलाः

1. Philip. 2. Protestant. 3. Catholic.

समग्राः प्रोटेष्टनजातिमानवा एतज्जातीयाः पुरुषा विषयस्य देशस्यावनं रक्षणं तस्यहेतवे कारणाय कैथोलिकजातयश्च ते पुरुषास्तैः सह शुभसन्धि सुसन्धानं अकुर्वत व्यदधत ॥

भा०——यह निश्चयहै कि उससमय सम्पूर्ण प्रोटेष्टण्टजातीय लोगोंने देशरक्षाके लिये कैथोलिकजातीयलोगोंके साथ अच्छा मिलाप करदिया ॥ ५६ ॥

अथ बाहुबलोपशोभितो—
ऽहितहाड्रेक[1] इति प्रकोपनः ।
फिलिप[2]शननौव्रजं हठात्
स्वपदाजिप्रवरैरभञ्जयत् ॥ ५७ ॥

टी०——अथेति । अथानन्तरं बाहुबलेनोपशोभितो विराजितः प्रकोपनः क्रोधयुक्तो ऽहिताञ्छत्रून् हन्तीति "क्विप्च इति क्विप्" शत्रुविनाशकः ड्रेक इति प्रसिद्धः कश्चित् पुरुषः फिलिपः स्पेनदेशाधिपस्य फिलिप्नामकस्य अशनमभिव्याप्येत्याशनं तस्य नावां व्रजं समुदायम् [ आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे इत्यमरः ] हठात् बलात्कारात् स्वस्य ये पदाजयः पदचाराः "अज्यतिभ्यां पदे च इतीण् प्रत्ययः" तेषु प्रवरैः पुरुषैः करणभूतैः अभञ्जयत् नाशयाञ्चकार ॥

भा०——अनन्तर बाहुपराक्रमशाली क्रोधयुक्त तथा शत्रुओं का नाशक ड्रेकनामक पुरुषने जबर्दस्ती स्पेनदेशाधिपतिका भोजनादिकी नौकाओंके समुदायको अपने पदातियोद्धाओंसे नाश करादिया ॥ ५७ ॥

तरणीविसरं तदैंग्लिशा
उदगम्भोनिधिभाग ओजसा ।
अतिदुष्टरुगार्दितं यथा
मनुजं स्वान्नगरान्न्यवारयन् ॥ ५८ ॥

1. Drake. 2. Philip.

टी०—तरणीति । तदा तस्मिन्समये ऐंग्लिशाः पुरुषा ओजसा बलेन तरणीनिसरं नौसमुदायं उदीच्यां यो ऽम्भोनिधिः समुद्रस्तस्य भागे प्रान्ते अतिदुष्टरुजा कुष्ठरोगेण आसमन्तादर्दितं पीडितं मनुजं यथा मनुष्यमिव स्वान्नगरात् पुरात् न्यवारयन् निरकाशयन् ॥

भा०—उससमय ऐंग्लिशलोगोंने नौकाओंके समुदाय [ आरमैडा ] को बलसे उत्तरीयसमुद्रके किनारेमें कुष्ठयुक्तमनुष्यको जैसा अपने नगरसे हटा दिया ॥ ५८ ॥

अथ चेलिजबेथिकाहव-
मकरोत्स्पेनैनिवासिभिः समम् ।
तरणीनिलयाहितं च तद्
द्रविणं सापजहार कोपना ॥ ५९ ॥

टी०—अथेति । अथानन्तरं च इलिजबेथनामिका नृपा स्पेननिवासिभिः पुरुषैः समं सार्धं आहवं संग्राममकरोत् कोपना क्रोधयुक्ता सा ऽवनिपा तरणीनिलये नौकागृहे आहितं स्थापितम् " दधातेर्हिः तादौ किति " तद्द्रविणं तेषां सर्वं धनं च अपजहार उपाददे ॥

भा०—अनन्तर इलिजबेथरानीने स्पेनवालोंके साथ बड़ा संग्राम किया और कोपयुक्त उस रानीने नौकाओंमें रक्खाहुआ उनका सब द्रव्य अपहरण करदिया ॥ ५९ ॥

इति सा नरपालिका तदा
ध्वजिनीसंघसमावृता पुनः ।
अजयद्दृशमाॅरलैण्डकं
तमिमं सैंग्लिशसादकारयत् ॥ ६० ॥

टी०—इतीति । तदा तस्मिन्समये इतीत्थं नरपालिका सा नृपा पुन-

1. Elizabeth. 2. Spain. 3. Ireland.

भूयः ध्वजिनीसंघैः सेनानिवहैः समावृता युक्ता सती आरलैण्डकं देशं भृशमत्यर्थं अजयज्जिगाय सा नरेश्वरी तमिमं देशं ऐंग्लिशसात् ऐंग्लिशायत्तं अकारयद् व्यधापयत् ॥

भा०—उससमय इसतरह उस इलिजबेथरानीने फिर सेनासमुदाययुक्त होकर आरलैण्डको जीता और उस रानीने वह देश ऐंग्लिशलोगोंको देदिया ॥ ६० ॥

तत इंग्लिशवासिनोऽरयो
धरणीश्यै चुकुपुः प्रमादतः ।
शमितुं न शशाक तानरीन्
निहतोत्साह इसेक्सकाभिधः ॥ ६१ ॥

टी०—तत इति । ततो ऽनन्तरं इंग्लिशवासिनो ऽरयः शत्रवः प्रमादतो धरणीश्यै नरेश्वर्यै चुकुपुः कुपितावभूवुः "क्रुधद्रुहेर्ष्यासूयार्थानां यंप्रति कोप इति संप्रदानत्वम्" इसेक्सकाभिध एतन्नामकः कश्चित्पुरुषो निहतोत्साहो हतोद्यमः सन् तानरीन् शमितुं शान्तियुक्तान् कर्तुं न शशाक ॥

भा०—अनन्तर इंग्लिशदेशवासी विपरीतबुद्धिकेलोग प्रमादसे रानीके लिये कुपित होगये इसेक्सनामकपुरुष हतोत्साह होकर उनशत्रुओंको शान्तकरनेमें सामर्थ्ययुक्त न होसका ॥ ६१ ॥

अतएव धरापतिस्तदा
बहुदोषाभिनिरोपणादमुम् ।
गलयन्त्रितदामसूच्छितं
विदधे प्राणविहीनकं मुधा ॥ ६२ ॥

टी०—अतइति । तदा तस्मिन्समये धरापतिरवनिपा अतएव कारणात् कार्यासाधनत्वादिति भावः बहुदोषाणां अभिनिरोपणं स्थापनं

---

1. Essex.

तस्मात् मुधा व्यर्थमेव गले कण्ठे यन्त्रितं वेष्टितं यद्दाम रश्मिस्तेन मूर्च्छितं मोहयुक्तं अमुं इसेक्सकं प्राणैरसुभिर्विहीनकं विदधे चक्रे ॥

भा०—उससमय रानीने लोकशान्ति न करसकनेके कारण बहुत दोषोंके लगानेसे इस इसेक्सको व्यर्थही फाँसी देकर मारदिया ॥ ६२ ॥

अथ सा निजजातिसम्भवान्
सुवणिज्यार्थमपावृतांस्तदा ।
व्यदधादिति तत्स्वपक्षता-
मवलोक्यान्यजनोऽन्वदूयत ॥ ६३ ॥

टी०—अथेति । अथानन्तरं तदा तस्मिन्समये साऽवनिपा निजा स्वकीया या प्रोटेष्टनसंज्ञका जातिस्तस्यां सम्भवो जन्म येषां तान् लोकान् सुवणिज्यार्थं वणिग्व्यवहारार्थं अपावृतान् स्वतन्त्रान् [ स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दोनिरवग्रह इत्यमरः ] व्यदधादकरोत् अन्यजनस्त-ज्जातिभिन्नोलोक इतीत्थं तस्याः स्वपक्षतामवलोक्य दृष्ट्वाऽन्वदूयत दुःखीबभूव " दूङ् परितापे धातोर्लङि कर्म्मकर्तरि रूपम् " ॥

भा०—अनन्तर उससमय रानीने अपने जातीयलोगों को वाणिज्यके लिये स्वतन्त्रता देदी इसबात को देखकर औरलोग बड़ेदुःखित होगये ॥ ६३ ॥

इति वीक्ष्य नराधिपा पुनः
परिवादाङ्कितनीतिपद्धतिम् ।
अनुरुध्य समग्रतत्कृतिं
प्रकृतिं प्रेमभरैरपोषयत् ॥ ६४ ॥

टी०—इतीति । नरपा मनुष्येश्वरी सा इतीत्थं परिवादेनापवादेन अङ्किता चासौ नीत्याः पद्धतिस्तां वीक्ष्यावलोक्य पुनर्भूयः समग्रा चासौ तत्कृतिस्तां अनुरुध्य प्रतिपद्य प्रकृतिं प्रजां प्रेमभरैः स्नेहविशेषैः अपोषयत् पर्य्यपालयत् ॥

भा०—रानी इसतरह अपवाददूषित अपने न्यायको देखकर पुनः उससब कामको वन्दकरके प्रजाको बड़ेप्रेमसे पालन करनेलगीं ॥ ६४ ॥

इति सेंग्लिशदेशपालिका
स्वबलोपार्जितसर्वगौरवा ।
समयोपगतामयार्दिता
त्वनुचिक्लेश दिवानिशं तदा ॥ ६५ ॥

टी०—इतीति । तदा तस्मिन्समये इतीत्थं स्वबलेन उपार्जितः सर्व गौरवो गुरुत्वं यया एवं विधा इंग्लिशदेशपालिका सेलिजवेथनामिका तु समयेन कालक्रमेणोपगतः प्राप्त आमयो रोगस्तेनार्दिता पीडिता सती दिवानिशं अहर्निशं अनुचिक्लेश क्लेशयुक्ता बभूव ॥

भा०—उससमय इसतरह अपनेबलसे गौरवको प्राप्त इलिजवेथरानी कालक्रमसे प्राप्त रोगसे ग्रस्तहोकर रातदिन बड़ेक्लेशयुक्त होगई ॥ ६५ ॥

इलिंजवेथनृपाऽमयपीडिता
शुचिनभर्तुमहीप्रमिते शके ।
निरपहाय जगत्क्षणभङ्गुर-
मतिधृतिर्हि परत्र समभ्यगात् ॥ ६६ ॥

टी०—इलीति । हीति निश्चयेन आमयपीडिता रोगक्लेशिता अतिधृतिर्धैर्योपेता इलिजवेथनृपा शुचिनभर्तुमहीप्रमिते त्र्यधिकषोडशशतमिते क्रैष्टशके क्षणभङ्गुरं नश्वरं जगद् निरपहाय रहयित्वा परत्र परलोके समभ्यगात् प्राप । अस्मिन्पद्ये द्रुतविलम्बितं वृत्तं द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ॥

भा०—यह निश्चयहै कि रोगपीड़ित धृतियुक्त इलिजवेथरानी १६०३ ईसवीमें नश्वर जगत्को छोड़कर परलोकको चलीगई ॥ ६६ ॥

इति उर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये अङ्गभूतटयूडर भूपवंशवर्णनन्नाम चतुर्थः सर्गः ॥ ४ ॥

1. Elizabeth.

# पञ्चमः सर्गः ॥

स्कौटाख्यदेशस्य नराधिपाया-
मेर्य्याःसुतःप्राथमिकोऽथजेम्सः ।
महीपतिर्नन्दनराज्यपीठे
तस्थौ प्रजानन्दितदिव्यमूर्त्तिः ॥ १ ॥

टी०—स्कौटेति । अथानन्तरं स्कौटाख्यदेशस्य नराधिपाया मेर्य्या एतन्नामिकायाः सुतस्तनयः प्रजाभिर्नन्दिता स्तुतादिव्यामूर्तिर्यस्यैवंविधः प्राथमिकः प्रथमसंख्यो जेम्सो महीपतिर्नृपः सन् नन्दनस्य राज्यपीठे राज्यासने तस्थौ उपाविशत् । अस्मिन्सर्गे उपजातिवृत्तम् ॥

भा०—अनन्तर स्कौटदेशकी रानी मेरीकापुत्र सबलोगोंसे स्तुत्य प्रथमजेम्सनामक राजाहोकर नन्दनराज्यासनपर बैठा ॥ १ ॥

अथापि कैथोलिकमानवास्ते
महीपतेर्द्वेषमनुप्रपन्नाः ।
राज्ञासमग्रव्यवहारशून्या-
स्तदाव्यधीयन्तनिकारवन्तः ॥ २ ॥

टी०—अथेति । अथानन्तरमपि तदा तस्मिन्समये महीपतेर्भूपस्य द्वेषं शत्रुतामनुप्रपन्नाः प्राप्ताः अतएव निकारवन्तो ऽपमानयुक्तास्ते कैथोलिकमानवा राज्ञा भूपेन कर्त्रा समग्रव्यवहारैः शून्या रहिता अनधिकारिणो व्यधीयन्त अक्रियन्त कर्म्मणि लङ् ॥

1-2. Mary Queen of Scots. 3. James I. 4. London. 5. Catholic.

भा०—अनन्तर भी उससमय राजाके शत्रुभावको प्राप्त अतएव निरादर-युक्त वे कैथोलिकलोग राजासे समग्रकामोंसे रहित कियेगये ॥ २ ॥

अतःपरं कैट्सविकादयस्ते
केचिन्नृशंसाहतजीविताशाः ।
ससंसदं भूमिपतिं प्रदग्धुं
कृतोद्यमा दारुगृहं प्रतस्थुः ॥ ३ ॥

टी०—अतःपरमिति । अतः परं अनन्तरं हता जीवितस्य आशा येषां तथाविधाः केचिन् नृशंसा घातकाः ससंसदं सभासहितं भूमिपतिं राजानं प्रदग्धुं भस्मीकर्तुं कृतोद्यमा विहितोद्योगाः सन्तो दारुगृहं इन्धनादिनिर्मितं भूपसदोगृहं प्रतस्थुर्जग्मुः ॥

भा०—अनन्तर नष्टजीविताशावाले वे प्रसिद्ध कैट्सविकप्रभृति कोई घातकलोग सभासहित राजाको भस्मकरनेकेलिये कृतोद्यम होकर राजाका काष्टनिर्मित सभागृहको प्रविष्टहुए ॥ ३ ॥

द्विषच्चिकीर्षामवगम्य भूपः
संयम्य तान् कन्धरकासु रज्ज्वा ।
व्यनाशयन्मोहनिमीलिताक्षाः
प्रतीपतां यान्ति जनाधिपस्य ॥ ४ ॥

टी०—द्विषदिति । भूपो राजा द्विषतां शत्रूणां चिकीर्षां कर्तुमिच्छां अवगम्य ज्ञात्वा तान् कैट्सविकादीन् पुरुषान् रज्ज्वा दाम्ना कन्धरकासु ग्रीवासु संयम्य बद्ध्वा व्यनाशयत् अघातयत् मोहेन निमीलिते अक्षणी येषां "बहुव्रीहौसक्थ्यक्ष्णोः स्वाङ्गात् षच् इति समासान्तः षच् प्रत्ययः" ते पुरुषा जनाधिपस्य राज्ञः प्रतीपतां विपरीतभावं यान्ति प्राप्नुवन्तीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

1. Catesby.

भा०—राजाने शत्रुओंके कर्तव्यको जानकर उन कैद्सत्रिकादिलोगोंको फांसीदेकर मारदिया क्योंकि अज्ञानान्धलोग राजाके शत्रुभावको प्रसहोते हैं ॥४॥

ततश्च टैरोननृपस्यपुत्रः
सनन्दनाधीशकृतामनुज्ञाम् ।
अमन्यमानो विषयं विहाय
स्पेनं पलायिष्ट विधेः प्रतीपात् ॥ ५ ॥

टी०—ततो ऽनन्तरंच स प्रसिद्धः टैरोननृपस्य एतन्नाम्नो राज्ञः पुत्रस्तनुजो नन्दनाधीशेन कृतां विहितां अनुज्ञामाज्ञाममन्यमानो ऽस्वीकुर्वन् विषयं स्वदेशं विहाय त्यक्त्वा प्रतीपाद्विमुखाद्विधेर्दैवात् स्पेनं देशं पलायिष्ट दुद्राव "उपसर्गस्यायतावित्युपसर्गस्य रेफस्य लत्वम्" ॥

भा०—अनन्तर वह प्रसिद्ध टैरोननामक मण्डलेश्वरका पुत्र नन्दनेश्वरकी आज्ञाको अस्वीकार करताहुआ भाग्यविमुखतासे स्पेनदेशको भागगया ॥ ५ ॥

तदीयभूमिं नरराजराजः
स्कौटेंग्लिशावासिजनेभ्य एव ।
विभज्य सम्यक् प्रददौ यथेष्टं
श्रियोऽधिपं यान्ति हि पौरुषाढ्यम् ॥ ६ ॥

टी०—तदीयेति । नरराजराजो भूपेश्वरस्तदीयभूमिं टैरोनपुत्रस्य महीं सम्यक् समीचीनतया विभज्य विभक्तभागां विधाय स्कौटेंग्लिशयो रावसन्तीति ये जनास्तेभ्यएव यथेष्टं यथाभिमतं ददौ हीति निश्चयेन श्रियो लक्ष्म्यः शोभा वा पौरुषाढ्यं पुरुषार्थयुक्तं अधिपं राजानं यान्ति प्राप्नुवन्तीत्यर्थान्तरन्यासेन समर्थ्यते ॥

भा०—राजाजेम्सने टैरोनामक मण्डलेश्वरके पुत्रकी भूमि स्कौट और इंग्लिशदेशके लोगोंको अच्छीतरह विभागकर स्वेच्छासे देदी क्योंकि लक्ष्मी पुरुषार्थयुक्त राजाको प्राप्तहोती है ॥ ६ ॥

1. Tyrone. 2. Spain. 3. Scotland.

अथारलैण्डाधिनिवासिलोका-
न्निराकरोन्नन्दनभूमिपालः ।
अभूद्विरागोपचयादिहेतु-
स्तदेव तत्रत्यजनेषु राज्ञः ॥ ७ ॥

टी०—अथेति । अथानन्तरं नन्दनभूमिपालो जेम्स आरलैण्डे ऽधिवसन्तीति ताँल्लोकान् निराकरोद् निष्काशयाञ्चकार तत्रत्यजनेपु राज्ञो भूपस्य तदेव तन्निष्काशनमेव विरागस्योपचये वृद्धिरेवादिहेतुर्मुख्यबीजमभूत् ॥

भा०—अनन्तर राजाजेम्सने आरलैण्डवासी लोगोंको निकालदिया वहांके लोगोंमें राजाका वही एक विरागका मुख्यकारण हुआ ॥ ७ ॥

ततश्च भूपालमणिः स जेम्सो
जौर्जाभिधेयं सुहृदं विधाय ।
धनादियुक्तं ह्यधिकारवन्तं
चकार तं सर्वजनाग्रगण्यम् ॥ ८ ॥

टी०—ततइति । ततोऽनन्तरं हीति निश्चयेन भूपालमणिर्नृपश्रेष्ठः स जेम्सः जौर्जाभिधेयं जौर्जनामकं पुरुषं सुहृदं मित्रं विधाय धनादिभिर्युक्तं तथा अधिकारवन्तं सर्वाधिकारविशिष्टं सर्वजनेपु लोकेपु अग्रगण्यं मुख्यं तं जौर्जं चकार विदधे ॥

भा०—अनन्तर यह निश्चयहै कि राजाजेम्सने जौर्जनामक पुरुषको मित्र बनाकर धनादिसेयुक्त अधिकारवाला तथा सबलोगोंमें मुख्य उसीको बनादिया ॥ ८ ॥

अथाधिराजो बहुयौतकार्थी
निजात्मजस्योपयमं विधित्सुः ।

---

1. Ierland. 2. London. 3. James I. 4. George.

स्पेनाधिनाथस्य फिलिब्नृपस्य
सुतां तदानीं भृशमाचकाङ्क्ष ॥ ९ ॥

टी०—अथेति । अथानन्तरं तदानीं तस्मिन्समये निजात्मजस्य स्वपुत्रस्य उपयमं विवाहं विधित्सुः कर्तुमिच्छुः अधिराजोजेम्सो बहुयौतकार्थी समधिकसुदायार्थी सन् स्पेनाधिनाथस्य स्पेनदेशभूपतेः फिलिब्नृपस्य सुतां तनयां भृशमत्यर्थं आचकाङ्क्ष इयेष ॥

भा०—अनन्तर उससमय अपनेपुत्रका विवाहकरना चाहताहुआ जेम्सराजा बहुत दैय्यजका अभिलाषुक होकर स्पेनदेशाधिपति फिलिप्राजाकी कन्याको अत्यन्त चाहनेलगा ॥ ९ ॥

स्पेनाधिपोऽसौ विषयं निरोद्धुं
पुरा तरीसंघयुतः समागात् ।
इत्यैंग्लिशानां हृदयेष्वमर्षो
न शान्तिभावं प्रययौ तदाऽपि ॥ १० ॥

टी०—स्पेनेति । असौ स्पेनाधिपः फिलिप् पुरा पूर्वं तरीसंघेन युतो नौसमुदायोपेतः सन् विषयं देशं निरोद्धुं आक्रमितुं समागात् समाययौ "इणो गालुङि, गातिस्थेति सिचोलुक्" तदाऽपि तस्मिन्समये ऽपि इति पूर्वोक्तप्रकारेण ऐंग्लिशानां हृदयेषु अमर्षो विषादः शान्तिभावं प्रशमं न प्रययौ न प्राप ॥

भा०—यह स्पेनदेशाधिपति पहिले नौसमुदाय ( आरमैडा ) के साथ देश रोकनेको आयाथा इसतरह उससमयमें भी ऐंग्लिशलोगोंके हृदयोंमें पूर्वोक्तशत्रुकृतापकार शान्तिभावको प्राप्त न हुआ ॥ १० ॥

ततो महीपे हितमात्मबुद्ध्या
व्यपोहयन्तोऽसमताविवाहम् ।

1. Spain. 2. Philip III. 3. Spain.

तदैंग्लिशा भूमिपतिं प्रबोध्य
न्यषेधिषुः स्पेनजनाधिनाथम् ॥ ११ ॥

टी०—ततइति । ततोऽनन्तरं तदा तस्मिन्समये महीपे हितं भूपवाञ्छितं असमतायाः अतुल्यभावस्य विवाहं परिणयं आत्मबुद्ध्या स्वधिया व्यपोहयन्तो दूरीकुर्वन्त ऐंग्लिशाजना भूमिपतिं जेम्सं प्रबोध्य विज्ञाप्य स्पेनजनाधिनाथं फिलिब्नृं । न्यषेधिषुर्न्यवारयन् ॥

भा०- अनन्तर उससमय राजाका अभिलषित असमताके विवाहको अपनी बुद्धिसे दूरकरतेहुए ऐंग्लिशलोगोंने राजाजेम्सको समझ कर स्पेनेश्वरको परिणय विषयमें निषेध करदिया ॥ ११ ॥

जेम्सात्मजश्चार्लसनामधेयः
फिलिप्सुतां द्रष्टुमनास्तदानीम् ।
उपेयिवान्मैड्रिडनामभूमौ
विलोक्य तामिन्दुमुखीं ननन्द ॥ १२ ॥

टी०—जेम्सेति । तदानीं तस्मिन्समये फिलिप्सुतां द्रष्टुमनाः "तुम् काममनसोरपीति मकारस्यलोपः" निरीक्षितुकामो जेम्सात्मजो जेम्सपुत्रश्चार्लसनामधेयश्चार्लसाख्यो मैड्रिडनामभूमौ एतदाख्यस्थले उपेयिवान् "उपेयिवाननाश्वाननूचानश्च इतिक्वस्वन्तो निपात्यते" प्राप्तवान् सन् इन्दुमुखीं चन्द्राननां तां फिलिप्सुतां विलोक्य दृष्ट्वा ननन्द जहर्ष ॥

भा०—उससमय फिलिप्की पुत्रीको देखनेकी इच्छावाला जेम्सराजाका पुत्र चार्लसनामधेय मैड्रिडाख्यस्थलमें जाकर उस चन्द्रमुखी बालाको देखकर बड़ा हर्षयुक्त हुआ ॥ १२ ॥

अथो हि सा प्रेमभरेण बाला
बालार्कतुल्या कृतिमात्मयोग्यम् ।

---

1. James I. 2. Charles. 3. Philip. 4 Madrid.

जेम्सात्मजं प्राप्य कृतांगभूषा
तेनैव सार्धं विधिनोपयेमे ॥ १३ ॥

टी०—अथोइति। अथोऽनन्तरं हीति निश्चयेन सा बाला कुमारी बालार्कः प्रभातसूर्य्यस्तेनतुल्या आकृतिर्यस्य सन्तापरहितकान्त्यारूपलावण्येन च युक्तं आत्मयोग्यं स्वानुरूपं जेम्सात्मजं प्राप्य लब्ध्वा कृता अङ्गानां भूषा अलङ्कृतिर्यया सा एवंविधासती प्रेमभरेण स्नेहातिशयेन तेनैव वरेण सार्धं विधिना नियमेन उपयेमे पाणिग्रहणमकरोत्। अत्र यमकालङ्कारः॥

भा०—अनन्तर यह निश्चयहै कि उस कुमारीने बालसूर्य्यप्रभ अपने योग्य जेम्सराजाके पुत्र को पाकर अलंकृत होकर बड़ेप्रेमसे उसी वरके साथ विधिपूर्वक विवाह करदिया॥ १३॥

साम्राज्यमापादितुमात्मनीनं
नराधिपोऽसौ यततेस्म लोके।
सभ्यान् विषोढुं तदशक्नुवानान्
पदच्युतान्मानधनो व्यधत्त॥ १४॥

टी०—साम्राज्यमिति। असौ नराधिपो लोके जगति आत्मनीनं आत्मने हितं "आत्मन्विश्वजनभोगोत्तरपदात्खः,आत्माध्वानौ खे एतौ खेप्रकृत्या स्तः" साम्राज्यं चक्रवर्तित्वं आपादितुं विधातुं यततेस्म सयत्नो बभूव मानधनः सजेम्ससस्तत्साम्राज्यं विषोढुं मर्षितुं अशक्नुवानान् असहमानानित्यर्थः "शक्धातोः परस्मैपदित्वात् शानजभावे ताच्छील्यवयोवचनेत्यादिना चानश्, स्वादित्वात् श्नुः, अचिश्नुधातुभ्रुवामित्युवङ्" एवंविधान्सभ्यान् सभासदः पदच्युतान् कार्य्यरहितान् व्यधत्त कृतवान्॥

भा०—राजाजेम्सने सारेदेशमें अपना चक्रवर्तित्व सम्पादन करनेके लिये

बड़ायत्नकिया मानी राजाजेम्सने उस बातको नहीं सहतेहुए सभ्यलोगोंको पदच्युत करदिया ॥ १४ ॥

वाणद्विषड्भूमिमिते शकेऽस्मि-
न्नन्तर्हिते भूमिपतौ हि जेम्से[1]।
महीपतिश्चार्ल्सनामधेयः[2]
स्वतातराज्यासनमध्यतिष्ठत् ॥ १५ ॥

टी०—वाणेति। हीति निश्चयेन वाणद्विषड्भूमिमिते पञ्चविंशत्यधिकषोडशशतमितेऽस्मिन् क्रैष्टशके भूमिपतौ राज्ञि जेम्सेऽन्तर्हिते मृते-सति "यस्यचभावेन भावलक्षणमिति सप्तमी" चार्लसनामधेय एतन्नामको महीपतिःसन् स्वतातस्य निजपितूराज्यासनं राज्यपीठं अध्यतिष्ठत् उपाविशत् "अधिशीङ्स्थासांकर्म्म इत्याधारस्य कर्म्मत्वम्" ॥

भा०—यह निश्चयहै कि १६२५ ईसवीमें राजाजेम्सके मरनेपर चार्लसनामक पुत्र राजा होकर अपने पिताके राज्यसनपर बैठा ॥ १५ ॥

प्रजासुखार्थी किल भूमिपालः
सपार्लिमेण्टं[3] च सदो निवेश्य।
धुरं स्वराज्यस्य नयेन सर्वा-
मनारतं वाहुवलैरुवाह ॥ १६ ॥

टी०—प्रजेति। किलेति निश्चयेन प्रजायाः सुखस्यार्थोऽस्यास्तीति तादृशो भूमिपालो राजा स चार्लसः पार्लिमेण्टं तन्नामकं सद आस्थानं निवेश्य स्थापयित्वा नयेन नीत्या स्वराज्यस्य सर्वां समग्रां धुरं भारं अनारतं अजस्रं वाहुवलैः स्वभुजपराक्रमैः उवाह दधार ॥

भा०—यह निश्चयहै कि प्रजाके सुख को चाहनेवाले उस राजा चार्लसने पार्लिमेण्टसभाको स्थापनकर नीतिसे अपने राज्यके समग्रभारको नित्य अपने वाहुवलसे धारणकिया ॥ १६ ॥

---

1. James I. 2. Charles. 3. Parliament.

स पार्लिमेण्टाख्यसभासदश्च
सर्वान्समाहूय सुगूढभावात् ।
समं तदास्पेननिवासिलोकै-
र्नियोद्धुमर्थग्रहमभ्यकाङ्क्षत् ॥ १७ ॥

टी०—सइति । तदा तस्मिन्समये स भूपः पार्लिमेण्टाख्या या सभा तस्यां सीदन्तीति तान् सर्वान् सभ्यजनांश्च सुगूढभावात् प्रच्छन्नभावात् समाहूयाकार्य्य स्पेननिवासिनो ये जनास्तैः समं सार्धं नियोद्धुं संग्रामयितुं अर्थग्रहं धनादानं अभ्यकाङ्क्षत् ऐषीत् ॥

भा०—उससमय राजाने पार्लिमेण्टके सब सभासदों को गुप्तभावसे बुलाकर स्पेनवालोंके साथ लड़ाईकरनेको उनसे धन मांगनेकी इच्छाकी ॥ १७ ॥

( युग्मकम् )

तदा महीपालकृतामनुज्ञां
निशम्य सर्वे कथयाम्बभूवुः ।
यावद्बकिन्घाममसात्यमुख्यं
न वारयत्येष नृपः प्रमादी ॥ १८ ॥
तावद्वयं द्रव्यमनल्पमस्मै
महीभुजे स्वार्थकृते न दद्मः ।
इत्याश्रवं तद्विहितं निशम्य
नराधिपस्तान् किल प्रत्यषेधत् ॥ १९ ॥

टी०—तदेति । तदा तस्मिन्समये सर्वेसभ्याः महीपालकृतां राजविहितां अनुज्ञां आज्ञां निशम्य " प्रमादी अविचारपर एष नृपो यावत् अमात्यमुख्यं सचिवशिरोमणिं बकिन्घामकं एतन्नामकं पुरुषं न वारयति

1. Spain. 2. Buckingham.

नमतिपेधति वयं तावत् स्वार्थंकरोतीति तादृशायास्मै महीभुजेराज्ञे ऽनल्पं बहुद्रव्यं न दद्मः" इतीत्थं कथयाम्बभूवुः अत्र वाक्यार्थस्यकर्मत्वम् किलेति निश्चयेन नराधिपो राजा तद्विहितं सभ्यकृतं आश्रवं पूर्वोक्तं नियमं निशम्य श्रुत्वा तान् सभ्यान् मत्यषेधत् सभाकार्य्याद्दूरीचकार "षिध गत्यामिति भ्वादेर्धातोर्लङि प्राक्सितादड्व्यवाये ऽपीतिषत्वे रूपम्"

भा०—उससमय सब सभ्यलोगोंने राजाज्ञाको सुनकर कहा कि जबतक यह प्रमादीराजा मुख्यअमात्य वकिनुयामको दूर नहीं करताहै तबतक हम इस स्वार्थीराजाकेलिये ज्यादाद्रव्य नहीं देंगे यह निश्चयहै कि इसतरह उनके कियेहुए नियमको सुनकर राजाने उनसबोंको पदच्युत करदिया ॥ १८ । १९ ॥

संस्थाप्य भूयः समितिं क्षितीशः
सभासदांवाग्भिरमात्यमेतम् ।
तिरश्चकाराशु जयाभिलाषी
धनग्रहेऽसौ कृतनिश्चयोऽभूत् ॥ २० ॥

टी०—संस्थाप्येति । क्षितीशोराजा भूयः पुनः समितिं सभां संस्थाप्य सभासदां सभ्यानां वाग्भिर्वचोभिरेतं अमात्यं मन्त्रिणं आशु शीघ्रं तिरश्चकार निष्काशयामास जयाभिलाषी विजिगीषुरसौ भूपो धनग्रहेऽर्थग्रहणे कृतनिश्चयो विहितमत्ययो ऽभूत् अजायत ॥

भा०—राजाने पुनः सभा स्थापनकर सभासदोंके कहनेसे इस वकिनुवाम मन्त्रिवरको जल्दीही दूरकरदिया और जयाभिलाषी होकर वह धनलेनेमें कृतनिश्चय होगया ॥ २० ॥

तथाऽपि सभ्या न ददुर्यदार्थ-
मस्मैनृपायाहितपीडनार्थम् ।
तदैव भूयोऽपि सदो महीन्द्रो
निराकरोत्स्वार्थविहीनभावात् ॥ २१ ॥

टी०—तथेति । तथाऽपि सभ्याः सभासदो यदा यस्मिन्समये ऽहि-

तपीडनार्थं अस्मै नृपायार्थं धनं न ददुर्नार्पयाञ्चक्रुः महीन्द्रो राजा तदैव तस्मिन्समय एव भूयोऽपि स्वार्थविहीनभावात् स्वार्थरहितत्वात् सदः सभां निराकरोद् दूरीचकार ॥

भा०—तौभी सभ्यलोगोंने जब युद्धार्थराजाकेलिये धन न दिया तब फिर राजाने निजप्रयोजनशून्यहोनेसे सभाको दूरकरदिया ॥ २१ ॥

पुनः समास्थाप्य सभां तृतीयां
नृपोऽर्थकामः स्वकृतिं बभाषे ।
सामाजिकास्तं नियमान् विशेषान्
सुनीतिदक्षाः किल प्रत्यवोचन् ॥ २२ ॥

टी०—पुनरिति। किलेति निश्चयेन अर्थकामोधनाभिलाषुको नृपः पुनर्भूयः तृतीयां सभां समितिं समास्थाप्य निवेश्य स्वकृतिं निजकार्यं तत्राश्र्व इति शेषः बभाषे कथयाञ्चकार सुनीतिदक्षाः सुनयचतुराः सामाजिकाः सभ्यास्तं महीपतिं विशेषान् नियमान् प्रत्यवोचन् अचकथन् "ब्रूयातोर्द्विकर्मकत्वात् तथायुक्तं चानीप्सितमिति राज्ञः कर्म्मेतरम्" ॥

भा०—धनार्थीराजाने पुनः तृतीयसभाको स्थापनकर उन सभ्यलोगोंके पास अपना काम कहा यह निश्चयहै कि नीतिचतुर उन सभ्यलोगोंने राजाके लिये विशेषनियम कहे ॥ २२ ॥

( युग्मकम् )

सभासदां सम्मतिमन्तरेण
धनं न गृह्णीत नराधिनाथः ।
विना प्रतीतिं त्वधिकारिणश्च
दण्ड्यं नवा दण्डयतु क्षितीन्द्रः ॥ २३ ॥
तथाहवार्थे कृतनिश्चयत्वा-
न्नभूमिपालो नियमं विदध्यात् ।

इत्याश्रवं सभ्यजना नृपार्थं
प्रचक्रुरर्थग्रहणस्य पूर्वम् ॥ २४ ॥

टी०—सभेति । नराधिनाथो भूपः सभासदां सामाजिकानां सम्मतिं अन्तरेण विना "अन्तराऽन्तरेणयुक्ते आभ्यांयोगे द्वितीया" धनं न गृह्णीत नाददीत तथाऽधिकारिणो ऽधिकरणकस्य च प्रतीतिं विना प्रत्ययमन्तरा क्षितीन्द्रोराजा दण्ड्यं दण्डनीयं नवा दण्डयतु न शास्तु भूमिपालस्तथा तादृशपेव आहवार्थे संग्रामार्थे कृतनिश्चयत्वाद् विहितनिश्चयभावात् नियमं आवश्यकप्रतिज्ञां न विदध्यात् न कुर्यात् सभ्यजनाः सभासदो नृपार्थं अर्थग्रहणस्य धनादानस्य पूर्वं अग्रत इतीत्थं आश्रवं प्रतिज्ञानं प्रचक्रुर्विदधुः ॥

भा०—राज सभ्यलोगोंकी सम्मति वगैर धनग्रहण न करे तथा राजा अधिकरणक ( जज ) की प्रतीतिके वगैर दण्डनीय पुरुष को दण्ड न देवे और राजा संग्रामके लिये एकाएक कटिबद्ध होकर आवश्यकनियम न करे इस तरह सभ्यलोगोने राजाके लिये धनग्रहणके पूर्व नियम करदिया ॥ २३ । २४ ॥

तथेत्यसौ तद्वचनं निशम्य
स्वीकृत्य सर्वां नृपतिः प्रतिज्ञाम् ।
शत्रून्विजेतुं कृतसैन्यसंघो
जग्राह रायं सदसोऽनुकूलात् ॥ २५ ॥

टी०—तथेति । असौ नृपतिस्तद्वचनं तेषां वाचं निशम्य श्रुत्वा तथा इति एवं भवतु इति सर्वां प्रतिज्ञां तद्विहितमाश्रवं स्वीकृत्याङ्गीकृत्य शत्रून् वैरिणोविजेतुं कृतः सैन्यानां संघो येन तथाविधः सन् अनुकूलात्स्वपक्षाश्रितात्सदसः सभातो रायं धनं जग्राह गृहीतवान् ॥

भा०—इस राजाने सभ्यलोगोंके वचनको सुनकर ( बहुतअच्छा ) इसतरह उनके सब नियमोंको स्वीकारकर शत्रुओंको जीतनेके लिये सेनाको इकट्ठाकर अनुकूल सभासे धनको ग्रहणकिया ॥ २५ ॥

ततो बकिन्धाममतिप्रगल्भं
समं च मूभिर्नगरीं रुशेलीम् ।
संरक्षणार्थं रिपुपीडनार्थं
तं स्पेनदेशे प्रजिघाय भूपः ॥ २६ ॥

टी०—ततइति । ततोऽनन्तरं भूपो नृपतिरतिप्रगल्भं प्रौढं तं प्रसिद्धं बकिन्धाममेतन्नामकं अमात्यचरं चमूभिः समं सेनाभिः सह स्पेनदेशे रुशेलीं नामनगरीं संरक्षणार्थं तथा रिपुपीडनार्थं शत्रूणां हर्दनार्थं प्रजिघाय प्रेरयामास "हि गतौ धातो लिटिरूपम् ॥

भा०—अनन्तर राजाने बड़ाप्रगल्भ उस पूर्वमन्त्री बकिन्धामको स्पेनदेशमें रुशेलीनाम नगरीके रक्षणकेलिये और शत्रुपीडनार्थ भेजा ॥ २६ ॥

ततो महाघोरतरेरणेऽस्मि-
न्नसृक्प्रवाहाकुलवीरलोके ।
भृशं बकिन्धामकमासिकोऽत्र
जघान तं जोहॅनफेल्टनाख्यः ॥ २७ ॥

टी०—ततइति । ततोऽनन्तरं अत्र स्पेनदेशे आसिकः असिः प्रहरण मस्येति "प्रहरणं तदस्येतिठक्" जोहनफेल्टन आख्या यस्य तादृशो वीरः असृक्प्रवाहेणाकुलो वीरलोको यस्मिनन्तादृशेऽस्मिन्घोरतरेऽतिभयंकरे रणे भृशमत्यर्थं तं बकिन्धामकं जघान हतवान् ॥

भा०—अनन्तर स्पेनदेशमें कृपाणायुध जोहनफेल्टनने रुधिरप्रवाहसे व्याकुल वीरलोगविशिष्ट ऐसे भयङ्करसंग्राममें उस बकिन्धामको मारदिया ॥ २७ ॥

महीपतिः सैन्यविनाशनेन
हतोद्यमोऽभूद्विजये तदानीम् ।

1. Buckingham. 2. Rochelle. 3. Spain.
4. John Felton.

स पार्लिमेण्टाख्यसभां निवर्त्य
वर्षाण्यथैकादश चाजहौ ताम् ॥ २८ ॥

टी०--महीपतिरिति । तदानीं तस्मिन्समये स चार्लसोराजा सैन्यविनाशनेन सैन्यक्षयेण विजये शत्रूणां पराजयविषये हतोद्यमो नष्टोद्योगोऽभूत् अथानन्तरं स चार्लसस्तां पार्लिमेण्टाख्यसभां निवर्त्य दूरीकृत्य एकादशवर्षाणि च तां सभां आजहौ तत्याज " ओहाक् त्यागे धातोर्लिटिरूपम् " ॥

भा०—उससमय राजा चार्लस सेनाके नाश होनेसे विजयमें हतोद्यम होगया अनन्तर उसने पार्लिमेण्टको दूरकर ग्यारहवर्षतक पार्लिमेण्टको स्थापन न किया ॥ २८ ॥

ततोऽवनीशः समितिप्रमुख्यान्
नृपप्रतिद्वन्द्वितयोपयुक्तान् ।
कारागृहे न्यक्षिपदाशु सार्धं
दुःखं दिशत्युच्चबलैर्विरोधः ॥ २९ ॥

टी०—ततइति । ततोऽनन्तरं अवनीशो भूपतिर्नृपस्य प्रतिद्वन्द्वितया शत्रुभावेन उपयुक्तान् तथा समितौ सभायां ये प्रमुख्या अग्रगण्यास्तान्पुरुषान् कारागृहे बन्धनालये न्यक्षिपत् नियोजितवान् उच्चबलैः अतिबलोपयुक्तैः पुरुषैः सार्धं विरोध आशु शीघ्रं दुःखं दिशति ददाति ॥

भा०—अनन्तर राजाने आत्मद्वेषभावको प्राप्त सभ्यलोगोंको कारागारमें रखदिया क्योंकि बलयुक्तपुरुषोंके साथका विरोध जल्दीही दुःखको देताहै ॥२९॥

अथ क्षितीन्द्रो ध्वजिनीं स्वकीयां
सस्कौटलैण्डीयरिपून् विजेतुम् ।

---

1. Parliament. 2. Scotland.

सम्प्राहिणोत्सा प्रबलारिसंघैः

पराजिताऽभूत्प्रतियुध्यमाना ॥ ३० ॥

टी०—अथेति । अथानन्तरं स क्षितीन्द्रो भूपतिः स्वकीयां निजां ध्वजिनीं सेनां स्कौटलैण्डे भवास्ते च रिपवस्तान् विजेतुं पराजेतुं सम्प्राहिणोत् न्ययुनक् प्रतियुध्यमाना युद्धं कुर्वाणा सा सेना प्रबलायेऽरयस्तेषां संघैः समुदायैः पराजिताऽभूत् अपहृतबलाऽजायत ॥

भा०—अनन्तर राजा चार्लसने अपनीसेनाको स्कौटलैण्डीय रिपुओंको जीतनेके लिये भेजा परन्तु वहां उनकेसाथ युद्धकरतीहुई वहसेना उनशत्रुओं से पराजित हुई ॥ ३० ॥

पुनर्महीन्द्रोऽथ सदो निवेश्य

ह्यस्माज्जयार्थोऽर्थयतेस्म वित्तम् ।

निरर्थकं भूपवचस्तदाऽभूत्

सभां नृपस्तां प्रणुनोद पश्चात् ॥ ३१ ॥

टी०—पुनरिति । अथानन्तरं हीति निश्चयेन जयार्थो विजयाभिलाषी महीन्द्रो राजा पुनर्भूयः सद आस्थानं निवेश्य स्थापयित्वा अस्मात्सदसो वित्तं धनं अर्थयतेस्म आचकाङ्क्ष तदा तस्मिन्समये भूपवचो नृपतिवचनं निरर्थकं प्रयोजनशून्यं अभूत् नृपोराजा पश्चात् तां सभां प्रणुनोद दूरीचकार ॥

भा०—अनन्तर यह निश्चयहै कि जयाभिलाषी राजाने पुनः सभाको स्थापनकर उससे धनचाहा परन्तु उससमय राजाका वचन व्यर्थहुआ अनन्तर राजाने उससभाको दूर करदिया ॥ ३१ ॥

ततो धराभृद्विहितासमज्या—

ष्टार्चेम्बराद्वन्दिगृहे प्रविष्टान् ।

1. Star Chamber.

व्यमोचयत्तान् मनुजान्स्वनीत्या
मृगान्यथा वागुरया पिनद्धान् ॥ ३२ ॥

टी०—तत इति। ततोऽनन्तरं धराभृद्विहिता चिरकालात्कूपस्थापिता ऽपरा समज्या सभा ष्टार्चेम्बरात्स्थानविशेषाद् वन्दिगृहे दन्धनालये प्रविष्टान् स्थितांस्तान्मनुजान्सामाजिकान् वागुरया जालेन पिनद्धान् बद्धान् मृगान् यथा हरिणानिव सुनीत्या सुनयेन व्यमोचयद् बन्धनरहितानकरोत् ॥

भा०—अनन्तर राजाकी चिरस्थापित दूसरी सभा [ लौड्पार्लिमेण्ड ] ने ष्टार्चेम्बरनामक राजकार्य्य स्थानसे बन्धनलयको प्राप्त सामाजिक लोगोंको जालसे बँधेहुए मृगोंकी तरह सुनीतिसे छुटादिया ॥ ३२ ॥

ष्ट्राफोर्ड[1]लौर्डौ[2] विहितागसौ यौ
मृषापवादार्दितसाधुलोकौ ।
न्यायाभिसम्पादितकार्य्यसंघा
व्यनाशयत्सैव सभाग्रिमा तौ ॥ ३३ ॥

टी०—ष्ट्राफोर्डेति। मृषापवादेन मिथ्यादोषेणार्दिताः पीडिताः साधुलोका याभ्याम् अतएव विहितागसौ कृतापराधौ यौ ष्ट्राफोर्डलौर्डौ वास्तामितिशेषः न्यायेनाभितः सम्पादितः कार्य्यसंघो यया एवं विधा सा एवाग्रिमा मुख्या सभा परिषत् तावुभौ पुरुषौ व्यनाशयद्घातयत् ॥

भा०—मिथ्यादोष लगानेसे सब लोगोंको दुःखदेनेवाले अतएव अपराधयुक्त जो ष्ट्राफोर्ड और लौर्डनामक पुरुषथे नीतिसे सब काम करनेवाली उसमुख्य सभाने उनदोनों को मरवादिया ॥ ३३ ॥

पुरा महीभृद्विहितं तरीषु
व्यपोहितुं तत्र करातिभारम् ।
समुद्यतां तां समितिं नरेशः
ष्टार्चेम्बरं[3] च प्रतिजुह्वुवेऽसौ ॥ ३४ ॥

1. Strafford. 2. Laud. 3. Star Chamber.

टी०—असौ नृपस्तत्रपुरे पुरा पूर्वं तरीषु नौषु महीभृता राज्ञा विहितं कृतं करातिभारं बलिभारं व्यपोहितुं दूरीकर्तुं समुद्यतां उद्युक्तां तां सभां छार्चेम्बरं च सभास्थानविशेषं च प्रतिजुह्नुवे दूरीचकार "ह्नुङ् अपनयने अदादेर्धातोर्लिट्यात्मनेपदे रूपम् ॥

भा०—इस राजाने इसनगरमें पहिलेसे नौकाओंमें राजविहित अधिक करको दूर करनेके लिये उद्यत सभाको और छार्चेम्बरनाम सभास्थान विशेषको भी दूर करदिया ॥ ३४ ॥

अथारलैण्डाधिनिवासिलोकाः
स्कौटेंग्लिशावासिजनाँस्तदैव ।
जेम्साज्ञया तत्र कृतात्मसंस्थान्
निवारयाञ्चक्रुरतिप्रहारैः ॥ ३५ ॥

टी०—अथेति । अथानन्तरं तदैव तस्मिन्समय एव आरलैण्डे ऽधिवसन्तीति तेल्लोकास्तत्रारलैण्डे जेम्साज्ञयाकृता आत्मनः संस्था स्थितिर्यैस्तान् स्कौटे इंग्लिशदेशे आवसन्तीत्येवंविधाञ्जनान् अतिप्रहारैर्बहुप्रहरणैः निवारयाञ्चक्रुर्निष्काशयामासुः ॥

भा०—अनन्तर उसीसमय आरलैण्डके रहनेवाले लोगोंने आरलैण्ड में जेम्सराजाकी अज्ञासे बसेहुए स्कौट और इंग्लिशदेशके लोगोंको बड़े प्रहारोंसे निकालदिया ॥ ३५ ॥

ततो महीशो महतीं स्वसेनां
न्ययोजयच्छत्रुकुलं निहन्तुम् ।
सा वाहिनी चायरवासिलोकान्
हठाज्जिगायाप्रतिवार्य्यवीर्य्या ॥ ३६ ॥

टी०—तत इति । ततो ऽनन्तरं महीशोराजा महतीं स्वसेनां ध्वजिनीं

---

1. Ireland. 2. Scotland. 3. England. 4. James I.
5. Ireland.

शत्रुकुलं आरलैण्डीयशत्रुवंशं निहन्तुमुच्छेत्तुं न्ययोजयत् प्राहिणोदित्यर्थः अप्रतिवार्य्य वीर्य्यपराक्रमो यस्या एवंविधा सा वाहिनी सेना च आयरे वसन्तीति ताँल्लोकान् हठात् बलात्काराञ्जिगाय विजयिनी बभूवेत्यर्थः ॥

भा०—अनन्तर राजा चार्ल्सने आरलैण्डीय शत्रुओंके नाशके लिये बड़ी सेनाको भेजा बड़े पराक्रमविशिष्ट उस सेनाने भी आरलैण्डवासी लोगोंको बलात्कारसे जीतलिया ॥ ३६ ॥

अथो नृपस्थापितया समित्या
विभर्त्सिताभूपतिकार्य्यमुख्याः ।
पुनर्बलाढ्या परिषन्नयेन
क्षितीश्वरार्थं नियमान् व्यधत्त ॥ ३७ ॥

टी०—अथोइति । अथो अनन्तरं नृपस्य स्थापितया पृथग् निवेशितया समित्या सभया भूपतिकार्य्येषु मुख्या अधिकारिणो विभर्त्सिता न्यक्कृता बभूवुरिति शेषः पुनर्भूयो बलाढ्या बलिष्ठा परिषत्सभा नयेन नीत्या क्षितीश्वरार्थं नृपार्थं नियमान् आश्रवान् व्यधत्त अकरोत् ॥

भा०—अनन्तर राजाकी स्थापित सभा ( लॉर्ड्स्पार्लमेण्ट ) से राज्यकार्य्यके मुख्याधिकारीलोग भर्त्सनायुक्त कियेगये पुनः बलयुक्तसभाने नीतिसे राजाके लिये नियमकर दिये ॥ ३७ ॥

( युग्मकम् )

न भूपतिस्तावदमात्यमग्र्यं
कुर्य्यात्सदो यावदमुं न विद्यात् ।
कुर्य्युः समित्सम्मतिगौरवेण
पुरोधसःस्तोत्रविवर्त्तनञ्च ॥ ३८ ॥

इत्यादिकं संश्रवमर्थसिद्ध्यै
सभासदोऽकुर्वत नीतिमार्गात् ।
सचार्लसस्तान्नियमाँस्तदीयान्
नाङ्गीचकाराशु विवृद्धमन्युः ॥ ३९ ॥

टी०—नेति । भूपतिस्तावत् अग्र्यं मुख्यं अमात्यं मन्त्रिणं न कुर्याद् न विदध्याद् यावत्कालपर्य्यन्तं सदः सभा अमुं मन्त्रिणं न विद्याद् न जानीयात् तथा पुरोधसः पुरोहिताश्च समितः सभाया या सम्मतिस्तस्या गौरवेण श्रेष्ठत्वेन स्तोत्राणां विवर्तनं परिवृत्तिं कुर्य्युः सभासदः सभ्यानीतिमार्गान्नयपथात् इत्यादिकं पूर्वोक्तं संश्रवं नियमं अर्थसिद्ध्यै प्रयोजनसाफल्यार्थं अकुर्वत व्यदधुः आशु शीघ्रं विवृद्धमन्युः समेधितक्रोधः सराजा तदीयान् सभ्यकृतांस्तान्सर्वान्नियमान् नाङ्गीचकार नस्वीचकार ॥

भा०—राजा तबतक मन्त्रीको नियत न करे जबतक कि सभा उसको योग्य न जानले और पुरोहित ( पादरी ) लोग सभाकी सम्मतिसे स्तोत्रोंका अनुवादकरें सभासदोंने इसतरहके नीतिमार्गसे नियमकिये-जल्दीही क्रोधयुक्त राजाचार्लसने[1] उनके नियमोंको स्वीकार न किया ॥ ३८ । ३९ ॥

भटान्सशस्त्रांश्च चतुःशतानि
नृपः समादाय स पञ्चसभ्यान् ।
गृहीतुकामोऽनुययौ सरोषो
न ते कुभृद्धस्तगता बभूवुः ॥ ४० ॥

टी०—भटानिति । सरोषः क्रोधयुक्तः स नृपः सशस्त्रान् गृहीतायुधान् चतुःशतानि भटान् योद्धॄन् समादाय सहगमनयुक्तान् विधायेत्यर्थः पञ्चसभ्यान् गृहीतुकाम आलम्बनेच्छुकः सन् अनुययौ अनुदुद्राव ते सभ्याः कुं पृथ्वीं बिभर्ति तस्य हस्तगतास्तदादानयुक्ता न बभूवुः ॥

1. Charles I.

भा०—रोपसहित राजाचार्लस शस्त्रसहित चारसौ वीरोंको लेकर पांच सभ्यों को पकड़नेकी इच्छासे उनके पीछे दौड़ा परन्तु वे सभ्यलोग राजाके हाथ न आये ॥ ४० ॥

धराधरः सैन्ययुतश्च सभ्यान्
वितर्दितेत्येव हि भीतभीताः ।
सामाजिका भूपतिसेवकाना-
माजीविकार्थं स्ववचोऽन्वयुञ्जन् ॥ ४१ ॥

टी०—धराधर इति । हीति निश्चयेन सैन्ययुतो धराधरो राजा सभ्यान् वितर्दिता जिघांसुः इत्येव भीतभीता अतिभययुक्ताः सामाजिका भूपतिसेवकानां नृपकर्मचारिणां जनानामाजीविकार्थं वृत्त्यर्थं स्ववचः पूर्वोक्तं निजवचनं अन्वयुञ्जन् परिवर्तयाम्बभूवुः ॥

भा०—यह निश्चयहै कि सेनासहित राजा सभ्योंको मारेगा इसतरह अतिभीत सामाजिकलोगोंने राजसेवकोंके आजीविकार्थ अपने वचनको नियोजित किया ॥ ४१ ॥

ततो महीशो वचनं तदीय-
ममन्यमानः स्फुटकोपवह्निः ।
नोटिङ्घामे चतुरङ्गसैन्यं
चिचाय योद्धुं सह शत्रुसंघैः ॥ ४२ ॥

टी०—ततइति । ततोऽनन्तरं स्फुटकोपवह्निः मव्यक्तकोपाग्निः अतएव तदीयं "त्यदादीनि च वृद्धसंज्ञानि स्युः, वृद्धाच्छः छस्यईय्" वचनममन्यमानोऽस्वीकुर्वन् महीशो राजा नोटिङ्घामे स्थानविशेषे चत्वारि अङ्गानि यस्य [ हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुर्विधमित्यमरः ] तथाविधं सैन्यं शत्रुसंघैः सह योद्धुं संग्रामयितुं चिचाय एकत्रितमकरोत् ॥

1. Nottingham.

भा०—अनन्तर बड़ाकोपयुक्त अतएव उन सभ्योंके वचन को नहीं स्वीकार करतेहुए राजाचार्लसने नोटिङ्घामनामक स्थानविशेषमें चतुरङ्ग सेनाको शत्रुओंके साथ युद्ध करनेकेलिये इकट्ठा किया ॥ ४२ ॥

अथैज्जीहिल्स्थानविशेषकेऽसौ
समं सभासद्भिरयुद्ध भूपः ।
अनेकवीरापगमेऽपि जन्ये
समानताऽभूद्धि परस्परेण ॥ ४३ ॥

टी०—अथेति । अथानन्तरं असौभूप एज्जहिल्स्थानविशेषके सभासद्भिः सामाजिकैः समं सार्धं अयुद्ध युद्धं कृतवान् हीति निश्चयेन अनेकवीराणां अपगमः संक्षयोयस्मिन् एवंविधेऽपि जन्ये समरे परस्परेण उभयोः पक्षयोरिति शेषः समानता तुल्यत्वमभूदजायत ॥

भा०—अनन्तर उस राजाने एज्जहिल्स्थानविशेषमें सभासदोंके साथ संग्राम किया यह निश्चयहै कि अनेक वीरोंके नाशहोनेवाले उस संग्राममें दोनों पक्षोंका परस्पर समान युद्ध हुआ ॥ ४३ ॥

सभ्यास्ततस्कौटनिवासिनस्तान्
युगाब्धिषड्भूमिमिते शकेऽस्मिन् ।
आकारयन्निंग्लिशदेश एव
सौहार्दसम्पत्कृतबन्धुकार्य्याः ॥ ४४ ॥

टी०—सभ्या इति । ततोऽनन्तरं युगाब्धिषड्भूमिमिते चतुश्चत्वारिंशदधिकषोडशशतमिते ऽस्मिन्नब्दे क्रैष्टहायने सौहार्दमेवसम्पत् तया कृतं बन्धुकार्य्यं यैस्ते सभ्यास्तान् आरलैण्डीयपुरुषैर्निष्काशितान् स्कौटनिवासिनोलोकान् इंग्लिशदेश एव आकारयन् आह्वाययाम्बभूवुः ॥

भा०—अनन्तर १६४४ ईसवीमें मैत्रीरूप सम्पत्तिसे कृतकार्य्य उन सभ्यलो-

1. Edgehill. 2. Scotland. 3. England.

गोने आरलैण्डीय पुरुषोंके निकालेहुए स्कौटलैण्डनिवासी लोगोंको इंग्लिशदेशमें बुलालिया ॥ ४४ ॥

ततः सभासद्भिरनन्यपूर्वा
चमूरुपाचीयत चारुभावा ।
क्रोम्वेलफेर्फैक्सभटौ प्रहृष्टौ
बभूवतुः सैन्यपती उभौ तौ ॥ ४५ ॥

टी०—ततइति । ततोऽनन्तरं सभासद्भिः पुरुषैः अनन्यपूर्वा अभूतपूर्वा चारुभावा शुभाभिप्राया चमूः सेना उपाचीयत एकत्रिताऽक्रियत "कर्म्मणिलङ् क्रोम्वेलश्च फेर्फैक्सश्च तौ भटौ वीरौ प्रहृष्टौ प्रसन्नाकृती तावुभौ पुरुषौ सैन्यपती बभूवतुः ॥

भा०—अनन्तर सभासदोंने शुभाभिप्राययुक्त अपूर्व्वसेना इकट्ठीकी वहाँ क्रोम्वेल और फेर्फैक्सनाम दो पुरुष सेनापति नियतहुए ॥ ४५ ॥

नेस्वाभिधे क्षेत्रविशेषकेऽभूत्
सभासदां भूमिपतेश्च जन्यम् ।
द्विषद्भिराक्रान्तबलो महीभृत्
स पॉर्लिमेण्टाहितजीवितोऽभूत् ॥ ४६ ॥

टी०—नेस्वेति । नेस्वाभिधे क्षेत्रविशेषके स्थानविशेषे सभासदां सामाजिकानां भूमिपते राज्ञश्च जन्यंयुद्धं अभूत् द्विषद्भिः शत्रुभिराक्रान्तबलोऽधरीकृतपराक्रमः समहीभृद्राजा पार्लिमेण्टस्याहितं आयत्तं जीवितं यस्यैवंविधोऽभूत् ॥

भा०—नेस्वनामक रणक्षेत्रविशेषमें सामाजिकलोगोंका और राजाका युद्ध हुआ शत्रुओंसे पराजित वह राजा पार्लिमेण्टके आधीन होगया ॥ ४६ ॥

---

1. Cromwell ( Thomas ) 2. Fairfax. 3. Naseby. 4. Parliament.

ततश्चमूभिर्धरणीधरोऽसौ
कारागृहे हम्पटनेऽन्वयोजि ।
स भूपतिर्वाइटनामधेये
द्वीपे पलायिष्ट निजप्रयत्नात् ॥ ४७ ॥

टी०—तत इति । ततोऽनन्तरं चमूभिः सेनाभिः असौ धरणीधरो राजा हम्पटने स्थानविशेषे कारागृहे वन्दिगृहेऽन्वयोजि अस्थाप्यत " कर्मणिलुङ् " सभूपतिर्नृपो निजप्रयत्नात् स्वबुद्धिकौशलात् वाइटनामधेये द्वीपे पलायिष्ट भग्नोबभूव " उपसर्गस्यायताविल्युपसर्गस्थरेफस्य लत्वम् " ॥

भा०—अनन्तर सैनिकोंने उस राजाको हम्पटननाम कारागारमें रखदिया वह राजा अपनेही प्रयत्नसे वाइटनामक द्वीपान्तरमें भागगया ॥ ४७ ॥

तथाऽपि सैन्यैरनुमृग्यमाणः
क्षितीश्वरस्तत्र समाललम्बे ।
आदाय कारिस्ब्रुकसौधजाले
न्यक्षेपि दुर्गम्यतमे ऽरिभिः सः ॥ ४८ ॥

टी०—तथेति । तथापि एवं सत्यपि सैन्यैः अनुमृग्यमाणोऽन्विष्यमाणः क्षितीश्वरो भूपस्तत्र वाइटनामधेये द्वीपे समाललम्बे अवलम्ब्यतेस्म " कर्मणि लिट् " अरिभिस्तैः शत्रुभिः आदाय गृहीत्वा सराजा दुर्गम्यतमेऽतिदुर्गे कारिस्ब्रुकोयःसौधस्तस्य जालं गवाक्षस्तस्मिन् न्यक्षेपि अधार्यतेतिभावः " कर्मणि लुङ् " ॥

भा०—ऐसे भगजानेपरभी सैनिकोंसे अन्वेषितराजा वाइटनामक द्वीपमें पकड़ागया और उन शत्रुओंने ग्रहणकर अगम्य कारिस्ब्रुकनामक महलके झरोखे में क़ैद करदिया ॥ ४८ ॥

1. Hampton. 2. Wight. 3. Carisbrooke.

स्कौटीयसेना नृपपक्षसंस्था
समं विपक्षैः प्रतियुध्यमाना ।
क्रोम्वेलनाम्ना ध्वजिनीश्वरेण
पराजिताऽभूत्किल प्रेष्टनेऽसौ ॥ ४६ ॥

टी०—स्कौटीयेति । किलेति निश्चयेन नृपपक्षे राजपक्षे संस्थास्थितिर्यस्या एवंविधा सा प्रसिद्धा स्कौटीयसेना विपक्षैः शत्रुभिः समं सार्धं प्रतियुध्यत इति प्रतियुध्यमाना युद्धं कुर्वाणा सती प्रेष्टने स्थलविशेषे क्रोम्वेलनाम्ना ध्वजिनीश्वरेण सेनापतिना पराजिता विजिताऽभूत् ॥

भा०—यह निश्चयहै कि राजपक्षाश्रित स्कौटलैण्डकी सेना शत्रुओंके साथ युद्ध करतीहुई प्रेष्टननामक स्थलमें क्रोम्वेलनामक सेनापति से पराजित होगई ॥ ४९ ॥

अथो समज्यान्तिमनीतिमार्गा-
न्महापराधीति सचार्लसस्तैः ।
अघानि कण्ठार्पितकालरज्ज्वा
नन्दाब्धिषड्भूमिमिते शकेऽस्मिन् ॥ ५० ॥

टी०—अथोइति । अथोऽनन्तरं तैः सामाजिकैः पुरुषैः समज्या सभा [ समज्या परिषद्गोष्ठीत्यमरः ] तस्या या ऽन्तिमा चरमा नीतिर्नयस्तस्या मार्गाद्वर्त्मनः चार्लसो महापराधी इतिहेतोः सराजा नन्दाब्धिषड्भूमिमिते ऊनपञ्चाशदधिकषोडशशतमिते ऽस्मिन् क्रैष्टशके कण्ठे अर्पिता या कालरज्जुस्तयाकरणभूतया अघानि व्यनाशि "कर्म्मणि लुङ्" ॥

भा०—अनन्तर उन सभासदोंने पार्लिमेण्टके अन्तिम नीतिमार्ग ( हाईकोर्ट ) से (चार्लस बड़ा अपराधी है) इसकारण वह राजा चार्लस १६४९ ईसवीमें फाँसी देकर मारदिया ॥ ५० ॥

1. Scotch. 2. Cromwell. 3. Preston. 4. Charles.

इति निखिलनृपाणां संक्षयात्तत्र पुर्य्यां
पुरजनपदनॄणां नीतिमार्गोत्सुकानाम् ।
कुनयजनितखेदोऽन्योऽन्यवैमुख्यहेतुः
कतिपयदिवसेषु प्रादुरासीत्समन्तात् ॥ ५१ ॥

टी०—इतीति । तत्र पुर्य्यां नन्दनाख्यायां नगर्य्यां इतीत्थममुना पूर्वोक्तप्रकारेण निखिलनृपाणां अशेषभूपानां संक्षयात् नीतिमार्गे उत्सुकानां अभिलाषवतां पुरजनपदयोर्नगरदेशयोर्नरो मनुष्यास्तेषां अन्योऽन्येन वैमुख्यस्य विमुखताया हेतुःकारणं कुनयेन जनितः समुत्पादितः खेदो वैरस्यं कतिपयदिवसेषु किञ्चित्कालानन्तरं समन्तात् परितः प्रादुरास प्रकटीबभूव ॥

भा०—उसनन्दननगरमें इसतरह सब राजाओंके समाप्त होनेपर नीतिमार्गमें उत्सुक पौरदैशिकलोगोंका परस्पर वैर कारण कुनयोत्पन्नखेद कितनेही दिनोंमें सब जगह प्रकटहुआ ॥ ५१ ॥

इति उर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये अङ्गभूतष्टुआर्टभूपानां पूर्वार्धवंशवर्णनन्नाम पञ्चमःसर्गः ॥ ५ ॥



# षष्ठः सर्गः ॥



अथ चेंग्लिशदेशसम्भवानां
धरणीशान्वयभूभृतामभावात् ।
मनुजैः समितेरशीतिसंख्यै
र्विहितंकौमनवेल्थराज्यमासीत् ॥ १ ॥

टी०—अथेति । अथानन्तरं च इंग्लिशदेशसम्भवानां इंग्लिशदेशोत्पन्नानां धरणीशानां राज्ञां अन्वये वंशे ये भूभृतोनृपास्तेषां अभावात् अविद्यमानत्वात् समितेः सभाया अशीतिसंख्याविशिष्टैर्मनुजैर्विहितं कृतं कौमनवेल्थनामकं राज्यं आसीदजायत । अत्र श्लोकपञ्चके मालभारिणीवृत्तम् "विषमेससजागुरू अनोजे सभरायश्वतु मालभारिणीयम् इति लक्षणात्" ॥

भा०—अनन्तर इंग्लिशदेशोत्पन्न नृपतिवंशसम्भव राजाओंके अभावसे सभाके अस्सी मनुष्योंका कियाहुआ कौमनवेल्थनामक राज्य प्रवृत्तहुआ ॥ १ ॥

इति भूपतिहीनमारलैण्ड-
मवलोक्याशु च तत्र सभ्यपूज्याः ।
मतिमन्तमनीकिनीपतिं तं
जनरक्षार्थमितस्तदाऽन्वयुञ्जन् ॥ २ ॥

टी०—इतीति । तदा तस्मिन्समये सभ्यपूज्याः सभासद इतीत्थं भूपतिहीनं नृपतिरहितं आरलैण्डनामदेशविशेषं अवलोक्य दृष्ट्वा तत्रा-

1. England. 2. Commonwealth. 3. Ireland.

रलैण्डे आशु शीघ्रं मतिमन्तं बुद्धियुतं अनीकिनीपतिं सेनापतिं तं प्रसिद्धं क्रोम्वेलं जनरक्षार्थं लोकपरित्राणार्थं इतो नन्दननगरात् अन्वयुञ्जन् प्रेरयामासुः ॥

भा०—उससमय सभ्यलोगोंने इसतरह नृपरहित आरलैण्डको देखकर वहां जल्दीही बुद्धिविशिष्ट सेनापति क्रोम्वेलनामकको लोकपरित्राणार्थ नन्दन नगरसे भेजा ॥ २ ॥

सच सैन्यपतिस्ततोड्रहेडां
नगरीं प्राप्य जहार लोकमर्थम् ।
अतिदम्भयुतो विवेकशून्यो
न ददर्शयत एव साधुमार्गम् ॥ ३ ॥

टी०—सइति । ततो ऽनन्तरं ससैन्यपतिः क्रोम्वेलनामा च ड्रुहेडांनामनगरीं प्राप्य लोकं अर्थं जहार " हृधातोर्द्विकर्मकत्वात् अकथितंचेति लोकस्यापिकर्म्मत्वम् " अतिदम्भयुतो बहुच्छलोपेतो विवेकशून्यो विचाररहितः पुरुषः साधुमार्गं सन्मार्गं न ददर्शयत एव अतिशयेन नावलोकयत्येव " रीगृधुपधस्यचेत्यभ्यासस्य रीगागमोयङ्यिङ्लुकि च " अत्रार्थान्तरन्यासालङ्कारः ॥

भा०—उस सेनापति क्रोम्वेलनामकनेभी ड्रुहेडानामकनगरीको प्राप्त होकर लोगोंसे धन हरलिया क्योंकि बहुतछलयुक्त विवेकशून्यपुरुष सन्मार्गको अच्छीतरह नहीं देखता है ॥ ३ ॥

अथ सैव तथैव वेक्सफोर्ड
विषयं छद्मभिरात्मसाच्चकार ।
बहुमत्सरदोषपूरितात्मा
सततं दुःखयति प्रजामनांसि ॥ ४ ॥

1. Drogheda. 2. Wexford.

टी०—अथेति । अथानन्तरं स एव क्रोम्वेलः "सोऽचि लोपेचेत्पादपूरणमिति स इत्यस्य सोर्लोपः" तथैव तादृशमेव वेक्सफोर्ड विषयं देशं छद्मभिरुपधिभिः आत्मसाच्चकार स्वायत्तमकरोत् "विभाषासातिकात्स्न्ये चिरविषये सातिर्वा स्यात्सात्म्ये" बहुमत्सरदोषेण पूरित आत्मा यस्यैवंविधोजनः प्रजामनांसि प्रकृतिचेतांसि सततं निरन्तरं दुःखयति पीडयतीत्यर्थान्तरन्यासेन समर्थ्यते ॥

भा०—अनन्तर उसी क्रोम्वेलनामक सेनापतिने वेक्सफोर्डनामकदेशको छलसे अपने आधीन करलिया क्योंकि अनेकमात्सर्यदोषयुक्त पुरुष प्रजाके चित्त को निरन्तर दुःखदेता है ॥ ४ ॥

पृतनापतिरात्तविक्रियोऽसौ
विषयस्याधिपतिं हि चार्लसाख्यम्[1] ।
कृतवन्तमशेषसाधुलोकं
समितौ स्कौटनिवासिनं[2] विजिग्ये ॥ ५ ॥

टी०—पृतनेति । हीति निश्चयेन आत्तविक्रियो गृहीतविकारो ऽसौ पृतनापतिः क्रोम्वेलो विषयस्य स्कौटदेशस्याधिपतिं स्वामिनं चार्लसाख्यं कृतवन्तं स्कौटनिवासिनं अशेषसाधुलोकं समग्रमान्यजनं समितौ संग्रामे विजिग्ये ऽजयत् ॥

भा०—यह निश्चयहै कि कपटयुक्त क्रोम्वेलने स्कौटदेशके अधिपतित्वमें चार्लसको नियतकरनेवाले स्कौटनिवासी समग्रसज्जनको संग्राममें जीतलिया ॥ ५ ॥

क्रोम्वेलोऽपि[3] प्राप्तप्रतिष्ठः पृतनेश-
आस्थान्या द्राक् सभ्यविशेषान् विनिवर्त्य ।
तत्स्थाने ऽन्यानात्ममनीषाहितचित्तान्
प्रायुङ्क्तेत्थं साहसिके श्रीः समुपैति ॥ ६ ॥

---

1. Charles ( Prince ). 2. Scotland. 3. Cromwell.

टी०—क्रोम्वेल इति । प्राप्तप्रतिष्ठो लब्धसंमानः पृतनेशः सेनापतिः क्रोम्वेलोऽपि द्राक् शीघ्रं आस्थान्याः सभातः सभ्यविशेषान् सभ्यपूज्यान् विनिवर्त्य दूरीकृत्य तत्स्थाने तदवकाशे आत्मनः स्वस्य या मनीषा औत्कर्ष्यबुद्धिस्तस्यामाहितं दत्तं चित्तं यैस्तान् अन्यान्सभ्यविशेषान् नियोजितवान् श्रीर्लक्ष्मीरित्थं अमुनाप्रकारेण स हसिके साहसकर्मकारिणि पुरुषे समुपैति प्राप्नोतीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते । अस्मिन्पद्ये मत्तमयूरंवृत्तं वेदैरन्ध्रैर्म्तौयसगामत्तमयूरमिति लक्षणात् ॥

भा०—लब्धसंमान सेनापति क्रोम्वेलने सभासे सभ्यपूज्योंको शीघ्र निष्काशनकर उनके स्थानपर आत्माहितचाहनेवाले अन्यसभ्योंको नियत कियां क्योंकि लक्ष्मी इसतरह साहसीपुरुषको प्राप्त होती है ॥ ६ ॥

**तत्र सभ्यमनुजैः सुरक्षिता**
**सैव सैन्यपतिरित्यमन्यत ।**
**आत्मसिद्धिमवगत्य सक्षणात्**
**पार्लिमेण्टसमितिं निराकरोत् ॥ ७ ॥**

टी०—तत्रेति । तत्र नन्दनेनगरे सभ्यमनुजैः सभासद्भिः स एव "सोऽचिलोपेचेत्पादपूरणमिति स इत्यस्य सोर्लोपः" सैन्यपतिः क्रोम्वेलः सुरक्षिता प्रभुरितीत्थं अमन्यत मेने "कर्म्मणिलङ्" स क्रोम्वेल आत्मसिद्धिं स्वमनोरथपूरणं अवगत्यालभ्य "वा ल्यपि अनुन सिकलोप इति गमोमस्य लोपः, हस्वस्येति तुक्" क्षणात् पार्लिमेण्टसमितिं सभां निराकरोद्दूरीचकार । अस्मिन्पद्ये रथोद्धता वृत्तं रान्नराविहरथोद्धतालगाविति लक्षणात् ॥

भा०—वहां नन्दननगरमें सभ्यलोगोंने वही क्रोम्वेल (प्रभु) इसतरहमाना अनन्तर उस क्रोम्वेलनें अपने मनोरथपूर्तिको सुनकर पार्लिमेण्टसभाको दूर करदिया ॥ ७ ॥

**सभां विना राज्यकृतिं समग्रां**
**क्रोम्वेलनामा विदधौ स्वबुद्ध्या ।**

---

1. Cromwell.

मेधावतामुद्यमतत्पराणां

न जायते कृत्यफलं परेण ॥ ८ ॥

टी०—सभामिति । क्रोम्वेलनामा सेनापतिः सभां विना समितिमन्तरा समग्रामशेषां राज्यकृतिं स्वबुद्ध्या विदधौ चकार उद्यमतत्पराणामुद्योगशीलानां मेधावतां बुद्धिविशिष्टानां पुरुषाणां परेणान्येन केनापि कृत्यफलं कार्य्यनिष्पत्तिर्न जायते न भवतीत्यर्थान्तरेण समर्थ्यते ॥

भा०—क्रोम्वेलनामकने बिना पार्लिमेण्टके सम्पूर्ण राज्यकार्य्य अपनी बुद्धिसे किया क्योंकि उद्योगशील बुद्धिविशिष्ट पुरुषों की कार्य्यनिष्पत्ति दूसरेसे नहीं होती है ॥ ८ ॥

प्यूरीटनान्धर्म्मरतान्तदाऽसौ

पूजार्थमाज्ञापयदीश्वरस्य ।

अभ्यर्चनीयस्य कृता सपर्य्या

मनोऽभिमृष्टं दिशतीह पुंसः ॥ ९ ॥

टी०—प्यूरीटनानिति । तदा तस्मिन्समयेऽसौक्रोम्वेलो धर्म्मरतान् स्वधर्म्मनिष्ठान् प्यूरीटनान् एतज्जातीयान् लोकान् ईश्वरस्य पूजार्थं आज्ञापयद् इह जगति अभ्यर्चनीयस्य पूज्यस्य कृता विहिता सपर्य्या पूजा पुंसः पुरुषस्य मनोऽभिमृष्टं मनोऽभिलषितं वस्तु दिशति ददातीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—उससमय क्रोम्वेलने धर्म्मनिष्ठ प्यूरीटनलोगोंको ईश्वरार्चनके लिये आज्ञादी क्योंकि पूजनीय की विहितसपर्य्या पुरुषके मनोवाञ्छित फलको देतीहै ॥ ९ ॥

पुनरपि सदोधीमानात्मानुकूलमतिष्ठिपद्

यदिह नृपतिं क्रोम्वेलं तं समैच्छदधीश्वरम् ।

---

1. Puritan. 2. Cromwell.

निजकुलबलायोग्यं दृष्ट्वासनो तदजीगणद्
वहति तुलनायोग्यं भारं न दीर्घतरं जनः ॥ १० ॥

टी०--पुनरिति । धीमन्सक्रोम्वेलः पुनरपि भूयोऽपि आत्मानुकूलं स्वपक्षपाति सदोऽतिष्ठिपत् स्थापयामास यत्सद इहदेशे नृपतिं भूपं तं क्रोम्वेलं अधीश्वरं सम्राजं समैच्छत् इयेष सक्रोम्वेलो निजस्य कुलं वंशं बलं पराक्रमस्तयोरयोग्यं असदृशं तत्साम्राज्यं दृष्ट्वा नाजीगणत् नामन्यत जनस्तुलनायोग्यं उद्वहनयोग्यं भारं धुरं वहति धारयति दीर्घतरं न वहतीत्यर्थान्तरेण समर्थ्यते । अत्र पद्ये हरिणीवृत्तम् "रसयुगहयैर्न्सौम्रौस्लौगोयदाहरिणी तदा इति लक्षणात्" ॥

भा०--बुद्धिविशिष्ट क्रोम्वेलने अपने अनुकूल सभाको स्थापन किया जो सभा कि इसदेशमें राजाक्रोम्वेलको सम्राट् बनाना चाहतीथी परन्तु क्रोम्वेलने अपने कुल बलके अयोग्य उस बातको देखकर स्वीकार न किया क्योंकि मनुष्य अपने योग्य भारको धारणकरताहै बृहद्भारको नहीं धारण करसक्ता ॥ १० ॥

नागेषुषट्चन्द्रमिते शके ततः
क्रोम्वेलनामा परलोकमभ्यगात् ।
तज्ज्येष्ठपुत्रोऽथरिचार्डकाह्वय-
स्तातासनेऽस्थात्करुणार्द्रमानसः ॥ ११ ॥

टी०--नागेति । ततोऽनन्तरं नागेषुषट्चन्द्रमिते अष्टपञ्चाशदधिकषोडशशतमिते क्रैष्टशके क्रोम्वेलनामा नृपतिः परलोकं लोकान्तरं अभ्यगात् प्राप अथानन्तरं करुणार्द्रमानसो दयार्द्रचेता रिचार्डकाह्वयो रिचार्डसंज्ञकस्तज्ज्येष्ठपुत्रः क्रोम्वेलस्य प्रथमतनयस्तातासने स्वपितुः सिंहासनेऽस्थात् ॥

भा०--अनन्तर १६५८ ईसवीमें क्रोम्वेलनामक नृपति परलोकको प्राप्तहुआ अनन्तर दयायुक्त रिचार्डनामक क्रोम्वेलका ज्येष्ठपुत्र अपने पिताके सिंहासनपर बैठा ॥ ११ ॥

1. Richard. Cromwell.

ततो ऽसौरिचार्डः पुनः पार्लिमेण्टं[1]
समास्थाप्य राज्यं व्यधान्नीतिमार्गात् ।
सदस्तद्विनार्थेन वन्ध्यात्मलाभं
न्यवर्तिष्ट भूपावमानात्तदैव ॥ १२ ॥

टी०—ततइति । ततोऽनन्तरं असौरिचार्डोराजा पुनर्भूयः पार्लिमेण्टं समास्थाप्य नीतिमार्गान्नयवर्त्मनो राज्यं व्यधात् तत्सद आस्थानं अर्थेन धनेन विना वन्ध्यो निष्फल आत्मलाभोयस्यैवंविधंसत् भूपस्यराज्ञो ऽपमानान्निरादरात् तदाएव न्यवर्तिष्ट निववृते । अस्मिन्पद्ये भुजङ्गप्रयातं छन्दः भुजङ्गप्रयातं भवेद्यैश्चतुर्भिरितिलक्षणात् ॥

भा०—अनन्तर यह रिचार्डराजा पुनः पार्लिमेण्टको स्थापनकर नीतिमार्ग से राज्यकरनेलगा वह पार्लिमेण्ट बगैर धनके निष्फल होकर राजाके अपमानसे उसीवक्त हटगई ॥ १२ ॥

पुनस्तदैवापरया समित्या
स्वपौरुषैस्तत्र कृतात्मलब्ध्या ।
त्वमेवभूपो भवितेति शश्व-
दाकार्य्यतेस्माशु हि चार्लसाख्यः[2] ॥ १३ ॥

टी०—पुनरिति । पुनर्भूयस्तदाएव स्वपौरुषैर्निजपराक्रमैः कृता आत्मलब्धिर्यया एवंविधयापरया ऽन्यया समित्या सभया " हि त्वमेव भूपो भविता भविष्यति" इतीत्थं शश्वन्निरन्तरं चार्लसाख्यः प्रथमचार्लसपुत्र स्तत्र नन्दने नगरे आशु शीघ्रं आकार्य्यतेस्म आहूयतेस्म ॥

भा०—पुनः उसीसमय अपनेही पौरुषसे अपनानिर्वाह करनेवाली दूसरीसभा (लौर्ड्सपार्लिमेण्ट )ने " निश्चयसे तुमही राजाबनोगे " इसतरह निरन्तर चार्लस-नामक प्रथमचार्लसके पुत्रको उस नन्दननगरमें बुलाया ॥ १३ ॥

1. Parliament. 2. Charles. ( Prince ).

अभ्रर्तुषड्भूप्रमिते शके ऽस्मिन्
सुबुद्धिमांश्चार्लसको द्वितीयः ।
अनेकभोगोल्लसितान्तरात्मा
रिचौर्डराज्यासनमध्यतिष्ठत् ॥ १४ ॥

टी०—अभ्रेति । अभ्रर्तुषड्भूपमिते षष्ट्यधिकषोडशशतमिते कैष्टशके अनेकभोगैः उल्लसितः प्रसन्नतां प्राप्तो ऽन्तरात्मा यस्यैवंविधः सुबुद्धिमान् द्वितीयो द्वितीयसंख्यान्वितश्चार्लसको रिचार्डस्य राज्यासनं राज्यपीठं अध्यतिष्ठदुपाविशत् " अधिशीङ्स्थासां कर्मेत्यधारस्य कर्मत्वम् " ॥

भा०—१६६० ईसवीमें विलासी बुद्धिविशिष्ट द्वितीयचार्लसनामक पुरुष रिचार्डनामक राजाके राज्यासनपर बैठा ॥ १४ ॥

क्रोम्वेलनाम्नोनृपतेः कलेवरं
रोषात्समुत्खन्य नियम्य रश्मिना ।
स्तम्भेबबन्धाधिपतिर्हि चार्लसो
वैरं क्वचिन्नैव सुखं प्रयच्छति ॥ १५ ॥

टी०—क्रोम्वेलेति । चार्लसो ऽधिपतिर्नृपो रोषादमर्षात् क्रोम्वेल्लनाम्नो नृपतेः राज्ञः कलेवरं शरीरं समुत्खन्य भूम्याउद्धृत्य रश्मिना दाम्ना नियम्य बद्ध्वा स्तम्भे मारणपाशावलम्बनकाष्ठे बबन्ध हीति निश्चयेन वैरं विद्वेषः क्वचित् एव सुखमानन्दं न प्रयच्छति न ददातीत्यर्थान्तरेण समर्थ्यते ॥

भा०—राजाचार्लसने क्रोधसे क्रोम्वेलका निखातशरीर उत्खात कर रज्जुसे बाँधकर स्तम्भमें लटकादिया यह निश्चयहै कि वैर कहींभी सुख नहीं देता ॥ १५ ॥

ये प्रथमचार्लिसेन
सार्धमरित्वं व्यधुर्नराः पूर्वम् ।

1. Richard Cromwell. 2. Thomas Cromwell. 3. Charles I.

तांश्चार्लसो द्वितीयः

क्रोधरयाच्छात्रवान्न्यवधीत् ॥ १६ ॥

टी०—ये प्रथमेति। येनराः पूर्वं पुरा प्रथमचार्लसेन सार्धं अरित्वं शत्रुभावं व्यधुश्चक्रुः द्वितीयश्चार्लसः क्रोधस्यरयोवेगोयस्मिन्नेवंविधात् शात्रवात् शत्रुभावात् तांश्छत्रून् न्यवधीत् हतवान्। अस्मिन्पद्ये आर्य्यावृत्तम् यस्याःपादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या इति लक्षणात् ॥

भा०—जिनलोगोंने पहिले प्रथमचार्लसके साथ शत्रुभाव कियाथा द्वितीय चार्लसने उनलोगोंको अरिभावसे मारदिया ॥ १६ ॥

महीभृता सकलपुरोधसस्तदा

यदृच्छयाप्युचितपदेषु लम्भिताः।

दिने दिने निखिलजनैः सुपूजिताः

शमप्रिया ननु ससुखं समासत ॥ १७ ॥

टी०—महीति। तदा तस्मिन्समये नन्विति निश्चयेन महीभृता राज्ञा यदृच्छया स्वेच्छया उचितपदेषु योग्यस्थानेषु लम्भिताः प्रापिताः शमप्रियाः शान्तियुक्ताः सकलपुरोधसः समग्रपुरोहिता अपि दिने दिने प्रतिदिनं निखिलजनैरशेषलोकैः सुपूजिताः संमानिताः सन्तः ससुखं सुखयुक्तं यथा भवति तथा समासत अवर्तन्त। अस्मिन्पद्येरुचिरावृत्तं-जभौसजौ गितिरुचिराचतुर्ग्रहैरितिलक्षणात् ॥

भा०—यह निश्चयहै कि उससमय राजासे अपनी इच्छानुसार योग्यस्थानोंमें प्राप्त शान्तियुक्त अतएव सबलोगोंसे प्रतिदिन सन्मानयुक्त नन्दननगरवासी सब पादरीलोग सुखपूर्वक रहनेलगे ॥ १७ ॥

( युग्मकम् )

प्यूरीटनाभूपतिसम्मतं स्तवं

स्वीकृत्यपञ्चाधिकलोकवर्जिताम्।

1. Charles II. 2. Puritan.

कुर्वन्तु पूजामिह राजसम्मता
नोचेत्पुरात्ते जिहतां हि साम्प्रतम् ॥ १८ ॥
विनिःसृतः क्रोशकपञ्चकात्पुराद्
बहिः परातिष्ठतु भूपशासनात् ।
इति क्षितीशः कुलधर्म्मतत्परो
निजाश्रवान् बोधयतिस्म ताञ्जनान् ॥ १९ ॥

टी०—प्यूरिति । हीति निश्चयेन प्यूरीटना एतज्जातिविशिष्टाः पुरोहिता भूपतिसम्मतं ईश्वरस्य प्रार्थनाविषयकं भूपाभिमतं स्तवं स्तोत्रं स्वीकृत्याङ्गीकृत्य इह नन्दननगरे पञ्चाधिकलोकैर्वर्जितां रहितां राजसम्मतां पूजां ईश्वरार्चनं कुर्वन्तु विदधतु नोचेत्ते प्यूरीटनाः साम्प्रतमिदानीं पुराद्-तस्मान्नगरात् जिहताम् निर्गच्छन्तु "ओहाङ् गतौ धातोर्लोटिरूपम्" विनिःसृतः पुराद्विनिर्गतः प्यूरीटनोजनः पुरान्नगरात् क्रोशकानां पञ्चकं तस्माद्बहिर्बहिस्तात् भूपशासनात् राजाज्ञातः परातिष्ठतु वर्ततामित्यर्थः कुलधर्म्मतत्परः क्षितीशोराजा ताञ्जनान् प्यूरीटनान् इतीत्थं निजाश्रवान् स्वसम्मतनियमान् बोधयतिस्म ज्ञापयामास ॥

भा० —प्यूरीटनलोग राजाका सम्मत ईश्वरप्रार्थनाविषयक पुस्तकको स्वीकारकर पांच आदमियोंसे अधिक जिसमें न हों ऐसी राजसम्मत ईश्वरकी प्रार्थना पूजादिको करें नहीं तो नगरसे निकलजायँ निकलाहुआ प्यूरीटनलोग राजाज्ञासे नगरसे पांचकोसके बाहररहे अपने कुलधर्म्ममें तत्पर राजाने उन प्यूरीटनलोगों को इसतरह अपने सम्मत नियमों को बोधनकराया ॥ १८ । १९ ॥

धराधरः साङ्गरमर्थजातं
वृथाऽव्ययोत्सन्नमलं व्यधत्त ।
कैवर्तसेनापगमात्तदाऽसौ
डंचाख्यलोकाक्रमितो बभूव ॥ २० ॥

1, Dutch.

टी०—धरेति। धराधरो राजा साङ्गरं रणसम्बन्धि अर्थजातं धननिवहं वृथाव्ययेनोत्सन्नं विनष्टमलमत्यर्थं व्यधत्ताकरोत् असौ राजा तदा तस्मिन्समये कैवर्तसेना धीवराणां वाहिनी तस्या अपगमात् व्यपोहनाच्च डचाख्यलोकैः आक्रमित आक्रमणयुक्तो बभूव ॥

भा०—राजाने सांग्रामिक सब धन व्यर्थव्ययसे नष्टकरदिया और वह राजा धीवरोंकी सेनाके दूरकरनेसे उससमय डचलोगोंसे आक्रमणयुक्त हुआ॥ २० ॥

ततो विजित्याशु च तानरातीन्
ब्रेडाभिधे स्थानविशेषकेऽसौ।
समं डचाख्यैः शरणागतैस्तैः
सन्धिं हि तद्भद्रकरं चकार ॥ २१ ॥

टी०—ततइति। ततोऽनन्तरं हीति निश्चयेन असौ राजाऽऽशु शीघ्रं तानरातीन् डचाख्यान् शत्रून् विजित्य ब्रेडाभिधे ब्रेडाख्ये स्थानविशेषके शरणागतैस्तैर्डचाख्यैः पुरुषैः समं सार्धं तद्भद्रकरं डचानां मङ्गलप्रदं सन्धिं मित्रत्वं चकार ॥

भा०—अनन्तर यह निश्चयहै कि इसराजाने शीघ्रही उनडचाख्य शत्रुओंको जीतकर ब्रेडानामकस्थानपर शरणको प्राप्त डचलोगोंके साथ उनको कल्याणदायक मेलकरदिया॥ २१ ॥

फ्रान्सेश्वरेण लुयिना सह चार्लसाख्यः
शत्रून्निवारयितुमेव चकार सन्धिम्।
कैथोलिकक्षतिकरं कुनयं व्यपोह्य
चाङ्गीचकार तदभीष्टमसौ हि धर्म्मम् ॥ २२ ॥

टी०—फ्रान्सेति। चार्लसाख्योराजा शत्रूनरीन् निवारयितुं व्यपोहितुं एव फ्रान्सेश्वरेण फ्रान्सदेशाधिपतिना लुयिना सह सन्धिंचकार विदधौ

1. Breda. 2. France. 3. Lewis. 4. Charles II. 5. Catholic.

इति निश्चयेन असौराजा कैथोलिकानां चतिकरं हानिकारकं कुनयं व्यपोह्यापहाय तद्भीष्टं कैथोलिकाभिसम्मतं धर्म्मं च अङ्गीचकार ॥

भा०—राजाचार्लसने शत्रुओंको हटानेके लिये फ्रान्सदेशाधिपति लुयीके साथ सन्धिकर दिया और कैथोलिकलोगोंका हानिकारक कुत्सितन्यायको दूरकर उनका सम्मत कैथोलिकधर्म्म स्वीकारकरलिया ॥ २२ ॥

विनिशम्य तदीयमाश्रवं
परिषत्खेदमनास्तदाऽभवत् ।
समितेरनुमायवैकृत-
मपजह्रे निजशासनं नृपः ॥ २३ ॥

टी०—विनिशम्येति । तदा तस्मिन्समये परिषत्सभा तदीयंराज्ञ इत्यर्थः आश्रवं नियमं विनिशम्योपश्रुत्य खेदोमनसियस्या एवंविधाऽभवद्जायत नृपोराजा समितेः सभाया वैकृतं विकारं वैमनस्यमितियावत् अनुमाय मत्वा निजशासनं स्वाज्ञां अपजह्रे अपाहरत् । अस्मिन्पद्ये सुन्दरीवृत्तम् ॥

भा०—उससमय सभा राजनियमको सुनकर बड़ेखेदयुक्त हुई राजाने सभाका वैमनस्य समझकर कैथोलिकलोगोंके अनुकूलविषयक आज्ञाको दूर करदिया ॥ २३ ॥

दिने दिने सभ्यजनाः सभामाः
कैथोलिकान् पीडयितुं प्रवृत्ताः ।
अबोभवुर्दैवहतान्मनुष्यान्
विपक्षयन्ति स्वजनावरिष्ठाः ॥ २४ ॥

टी०—दिनइति । दिनेदिने प्रतिदिनं सभामाः "भामक्रोधे धातोः पचाद्यच्" सक्रोधाः सभ्यजनाः सामाजिकाः कैथोलिकान्जनान् पीड-

1. Catholic.

यितुं दुःखयितुं प्रवृत्ता उद्युक्ता अवोभवुः "भूधातोर्यङ्लुकि लङि जुसिचेतिगुणेकृते रूपम्" अतिशयेनाजायन्त वरिष्ठाः श्रेष्ठाः स्वजनादैव-हतान् भाग्यरहितान् मनुष्यान् विपक्षयन्ति शत्रुतयाऽनुवर्तयन्ति "पक्ष परिग्रहे भ्वादेर्धातोर्णिचिरूपम्" अत्रार्थान्तरन्यासालङ्कारः ॥

भा०—प्रतिदिन क्रोधयुक्त सभ्यलोग कैथोलिकोंके पीडनार्थ अत्यन्त प्रवृत्त हुए क्योंकि अपने श्रेष्ठलोगभी भाग्यरहित मनुष्यको शत्रुभावसे अनुवर्तन करते हैं ॥ २४ ॥

ओटसाख्यमनुजो महीपतिं
छद्मना विशसनैकमानसान् ।
तानबुध्यत निरायतींस्तदा
येन लाघवमुपाययुश्च ते ॥ २५ ॥

टी०—ओटसेति । ओटस आख्यायस्य सचासौ मनुजश्छद्मना कपटेन महीपतिं भूपं विशसने मारणे एकं मानसं येषां तान् निरायतीन् भाग्य-रहितान् जनान् अबुध्यताजानात् येन हेतुना ते कैथोलिकजातिविशिष्टाः पुरुषाश्च लाघवं अपमानं ययुः प्रापुः । "अस्मिन्पद्ये रथोद्धतावृत्तम् रान्नराविहरथोद्धतालगाविति लक्षणात्" ॥

भा०—ओटसनामकपुरुषने छद्मसे राजाको मारनेकी इच्छावाले भाग्यरहित उन कैथोलिकलोगोंको जानलिया जिसकारण कि वेलोग अपमानको प्राप्तहुए ॥ २५ ॥

विश्वस्यैतद्वृत्तमादौ क्षितीन्द्रो-
ऽस्यच्चानेकान्पूरुषान्मोहबुद्धिः ।
पश्चान्मिथ्यावाक्यमित्येवमेतत्
सर्वैः पौरैर्निश्चितं ह्योटसस्य ॥ २६ ॥

टी०—विश्वस्येति । मोहबुद्धिः क्षितीन्द्र आदौ पूर्वमेतद्वृत्तमुदन्तं

1. 2. Oates.

विश्यस्यनिश्चित्यानेकान्पूरुषांश्च अस्यत् अहन् " षोऽन्तकर्म्मणि धातो-र्लङ्लाम् " पश्चादनन्तरं ओटसस्यैतद्वाक्यं मिथ्या एवास्ति इतीत्थं सर्वैः पौरैर्निश्चितमवगतमासीदिति शेषः । अस्मिन्पद्ये शालिनीवृत्तम् शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैरितिलक्षणात् ॥

भा०—अज्ञानबुद्धिराजाने पहिले इसवृत्तान्तको निश्चयकर कईएक पुरुषोंको मारदिया पीछे ओटसका वाक्य मिथ्य है इसतरह सब नगरके लोगोंने निश्चय-किया ॥ २६ ॥

अन्यां सभां स्थापयितुं प्रवृत्तौ
विरोधिनौ सीडनि[1]रैस्यला[2]ख्यौ ।
वधे महीन्द्रस्य कृतप्रयत्नौ
पदातयोऽघ्नन्नृपशासनेन ॥ २७ ॥

टी०—अन्यामिति। पदातयो राज्ञः पादातिका अन्यां अपरां सभां स-मितिं स्थापयितुं निवेशयितुं प्रवृत्तौ उद्यतौ तथा महीन्द्रस्य राज्ञो वधे विनाशे कृतप्रयत्नौ विहितोद्योगौ विरोधिनौ विद्वेषयुक्तौ सीडनिश्च रैस्यलश्च आख्ये ययोस्तावुभौ पुरुषौ नृपशासनेन राजाज्ञया ऽघ्नन् अवधिषुः ॥

भा०—राजाके पदचारी सैनिकोंने दूसरीसभाको स्थापन करनेको उद्यत और राजाको मारनेमें कृतोद्योग बडेविरोधी सीडनि और रैस्यलनामक पुरुषोंको राजाज्ञासे मारदिया ॥ २७ ॥

फ्रान्स[3]देशनृपतेर्हि मासिकीं
वृत्तिमार्जनि गृहीतवान्नृपः ।
स्वस्य कैथलिक[4]धर्म्ममुच्चरँ-
श्चार्लसो[5] जगदिदं ह्यरीरहत् ॥ २८ ॥

---

1. Sidney. 2. Russell. 3. France. 4. Catholic. 5. Charles II.

टी०—फ्रान्सेति । हीति निश्चयेन जनिमर्य्यादीकृत्याजनि यावज्जीवं फ्रान्सदेशनृपतेः फ्रान्सेश्वरस्य मासिकीं प्रतिमाससम्बन्धिनीं वृत्तिमाजीविकां गृहीतवान् स्वीकृतवान् अतएव स्वस्य कैथलिकधर्म्मं उच्चरन् ब्रुवाणश्चार्लसो नृप इदं जगद् अशीरहदत्याक्षीत् ॥

भा०—यह निश्चयहै कि यावज्जीव फ्रान्सेश्वरकी मासिकवृत्तिको ग्रहणकरनेवाले अतएव अपना कैथलिकधर्म्मको बोधनकरातेहुए राजा द्वितीयचार्लसने इस जगत्को छोड़दिया ॥ २८ ॥

वाणेभषड्भूमिमिते शके ततो
जेम्सो[1]द्वितीयः स हि चार्लसानुजः ।
रूपेण नीत्या विनयेन संयुतो-
ऽन्वध्यास्त राज्यासनमग्रजन्मनः ॥ २९ ॥

टी०—वाणेति । ततोऽनन्तरं वाणेभषड्भूमिमिते पञ्चाशीत्यधिकषोडशशतमिते क्रैष्टशके रूपेण सौन्दर्य्येण नीत्या नयेन विनयेन नम्रतया संयुतश्चार्लसानुजो द्वितीयोजेम्सो ऽग्रजन्मनो ज्येष्ठभ्रातुश्चार्लसस्य राज्यासनं राज्यपीठं अन्वध्यास्त अधितष्ठौ "अधिशीङ्स्थासां कर्म्मेत्याधारस्य कर्म्मत्वम्" ॥

भा०—अनन्तर १६८५ ईसवीमें सुन्दरता न्याय और नम्रतासेयुक्त चार्लसका कनिष्टभ्राता द्वितीय जेम्सनामक अपने ज्येष्ठभ्राताके राज्यासनपर बैठा ॥ २९ ॥

न जायेत जेम्सोऽधिकार्य्यत्र पीठे
नृपस्यात्मजो मौनमौ[2]उथ्महीपः ।
भवेत्सैव राज्ये ऽवनीशः पुरेति
मतिं ह्विग्[3]जना जीविते राज्ञि चक्रुः ॥ ३० ॥

टी०—नेति । जेम्सो ऽत्र पीठे राज्यासनेऽधिकारी अधिकारविशिष्टो

1. James II. 2. Monmouth. 3. whig.

नन्दने प्रवरसप्तपूरुषै-

रात्मरक्षणवशलग्नमानसैः ।

दोर्वलोविलियमो मदोत्कट-

स्तर्दितुं हि जुहुवे महीपतिम् ॥ ३४ ॥

टी०—नन्दनइति । नन्दनेनगरे आत्मनो रक्षणो गोपनम् "यजयाचयतविच्छप्रच्छरक्षोनङ् इतिनङ्प्रत्ययः" तस्यवशे इच्छायां लग्नं मानसं येषां तथाविधैः प्रवरा मान्या ये सप्तपूरुषास्तैः कर्तृभिः दोर्वलो भुजवलोपयुक्तः [ भुजबाहू प्रवेष्टोदोःस्यादित्यमरः ] मदोत्कटो विलियमः कश्चिदपरः पुरुषः महीपतिं राजानं तर्दितुं पीडयितुं जुहुवे आकार्यतिस्म । अस्मिन्पद्ये रथोद्धतावृत्तम् ॥

भा०—नन्दननगरमें अपनीरक्षाको चाहनेवाले मान्य सातपुरुषोंसे भुजवलयुक्त मदोद्धत विलियमनामकपुरुष राजाको पीडनकरानेके लिये बुलाया गया ॥ ३४ ॥

महाभटो विलियमनामको यदा

वरूथिनीशतपरिवेष्टितान्तरः ।

समाययौ द्रुतमिह नन्दने तदा

धरापतिर्विषमदशागतो ऽभवत् ॥ ३५ ॥

टी०—महेति । यदा यस्मिन्समये वरूथिनीशतैः परिवेष्टितं अन्तरं स्वस्थितिप्रदेशो यस्य [ अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि चेत्यमरः ] एवंविधो महाभटो विलियमनामकः द्रुतं शीघ्रमिह नन्दनेनगरे समाययौ प्राप तदा तस्मिन्समये धरापतिर्जेम्सनामको भूपो विषमदशायां गतः प्राप्तोऽभवत् । अस्मिन्पद्ये रुचिरावृत्तम् ॥

1. London. 2. William.

तं मौनमाउथ्क्षितिपं मदान्धं
कौक्षेयकेनाशु जघान पश्चात् ॥ ३२ ॥

टी०—जेम्स इति । जेम्सो महीभृद्राजा प्रबलारिसंघं बलविशिष्टशत्रुसमुदायं दुःखेन वारयितुमशक्यानि यानि शस्त्रास्त्राणि तेषां बलैः पराक्रमैर्व्यपोह्य इतस्ततोविक्षिप्य पश्चादनन्तरं आशु शीघ्रं मदान्धं मदनिमीलितं तं मौनमाउथ्क्षितिपं कौक्षेयकेन [ खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः । कौक्षेयको मण्डलाग्रः करवालः कृपाणवदित्यमरः ] खड्गेन जघान हतवान् ॥

भा०—जेम्सराजाने बडे शत्रुसैन्यको अपने तीक्ष्णशस्त्रास्त्रोंके बलसे मार भगाकर अनन्तर शीघ्रही मदोन्मत्त उस मौनमाउथ्भूप ( ड्यूक ) को तरवारसे मारदिया ॥ ३२ ॥

ततो जैफरीनामधेयं क्षितीन्द्रो
न्ययुङ्क्त क्रुधा वारुणे दिग्विभागे ।
निहत्याशु काँश्चिद्बहून्सेवकत्वे
स विक्रीय तत्राखिलान्संजगाहे ॥ ३३ ॥

टी०—ततइति । ततोऽनन्तरं क्षितीन्द्रोराजा क्रुधा कोपेन वारुणे वरुणसम्बन्धिनि दिग्विभागे पश्चिमस्यांदिशि जैफरीनामधेयं यस्यैवंविधं पुरुषं न्ययुङ्क्त प्रेषितवान् स जैफरी तत्रदिशि काँश्चिन्निहत्य बहूँल्लोकान् सेवकत्वे विषये विक्रीय अखिलाञ्जनान् संजगाहे अवलोडयामास । अत्रपद्ये भुजङ्गप्रयातं वृत्तम् ॥

भा०—अनन्तर राजानें कोपसे पश्चिमदिशामें जैफरीनामकपुरुषको भेजा उसने वहां शीघ्रही कईएकोंको मारकर बहुतेरोंको दासत्वमें बेचकर सबको अवलोडन करदिया ॥ ३३ ॥

---

1. Jeffreys.

दशशतमितेऽस्मिन् क्रैष्टशके मेर्याराजपुत्र्याः पतिर्भर्ता सविलियम इहा-
स्मिन्देशेऽधिपति र्भूपतिरासीत् ॥

भा०—प्रबलशत्रुसे भययुक्त राजाजेम्स फ्रान्सेश्वरके राज्यमें भागगया और यहां इस इंग्लिश देशमें १६८८ ईसवीमें मेरीकापति विलियम राजा होगया ॥ ३७ ॥

अथ भूपतिर्विलियमः स्वधिया
परिहृत्य राज्यमपि दुर्नयतः ।
नतु भूपपीठमिदमिच्छति ता-
न्यगदीत्सभेति वचनानि मुधा ॥ ३८ ॥

टी०—अथेति । अथानन्तरं विलियमो भूपतिर्दुर्नयतः कुत्सितनया-यात् स्वधिया निजबुद्ध्या राज्यमपि परिहृत्यापहाय अरमत्यर्थं इदं भूप-पीठं तु नेच्छति नाभिवाञ्छति सभा परिषदितीत्थं मुधा व्यर्थमेव तानि वचनानि अगदीदचकथत् ॥

भा०—अनन्तर राजा विलियम दुर्नयसे अपनीही इच्छासे राज्यको त्यागकर राज्यासनमें नहीं बैठता है इसतरह सभाने व्यर्थही इनवचनोंको कहा ॥ ३८ ॥

स महीपतिर्निखिलराज्यप्रभु-
र्यदि वा तदीयरमणी भविता ।
तदनन्तरं हि तनयोऽथतयो-
र्नृपतिर्भविष्यति सभेत्यवदत् ॥ ३९ ॥

टी०—सइति । स महीपतिर्विलियमो निखिलराज्यस्य प्रभुः स्वामी भविता भविष्यति यदिवाऽथवा तदीयरमणी तत्स्त्री मेरी निखिलराज्य-स्यप्रभुः स्वामिनी भविष्यति अथ तयोरनन्तरं परं तयोर्दम्पत्यो स्तनयोर्नृ-पतिर्भूपो भविष्यति हि सभा इतीत्थं अवददगादीत् । एतयोः पद्ययोः प्रमिताक्षरावृत्तम् ॥

1. William.

भा०—जिससमय बहुतसेनायुक्त महावीर विलियमनामकपुरुष शीघ्र इस नन्दननगरमें आया उसीसमय राजाजेम्स बडीविषमावस्थाको प्राप्तहुआ ॥३५॥

अथ च सकलराजपूरुषा-
स्तमवनिपं त्वपहाय नीरसम् ।
विलियममनुजग्मुरीप्सितं
हृतधृतिरास्त महीधरो यतः ॥ ३६ ॥

टी०—अथेति । अथानन्तरं च सकलाःसमग्रा राज्ञः पूरुषा अधिकारिणो नीरसं प्रीतिरहितं तं अवनिपं जेम्सं तु अपहाय परित्यज्य ईप्सितं स्पृहितं वाञ्छितमितियावत् विलियमं एतन्नामकं आकारितं पुरुषं अनुजग्मुरनुसस्रुः यतो यस्मात्कारणात् महीधरोराजाहृताधृतिर्यस्यैवंविधः सन् आस्त अवर्ततेत्यर्थः । अस्मिन्पद्येऽपरवक्त्रंवृत्तम् "अयुजिननरलागुरुः समेतदपरवक्त्रमिदंनजौ जराविति लक्षणात्" ॥

भा०—अनन्तर सब अधिकारीलोगोंने प्रीतिरहित जेम्सराजाको छोडकर अभिवाञ्छित विलियमको अनुसरणकिया जिसकारण कि राजा जेम्स धैर्यरहित होगया ॥ ३६ ॥

जेम्सो महीभृत्प्रबलारिभीतः
पलायतफ्रान्सपतेर्हि राष्ट्रे ।
गजेभषड्भूमिमिते शकेऽस्मिन्
मेरीपतिः सोऽधिपतिस्त्विहासीत् ॥ ३७ ॥

टी०—जेम्सइति । प्रबलारेर्विलियमाद्भीतो भयव्याकुलोमहीभृद्भूपो जेम्सः फ्रान्सपतेः फ्रान्सेश्वरस्य राष्ट्रे विषये पलायत दुद्राव "उपसर्गस्यायताविसुपसर्गस्य लत्वम्" गजेभषड्भूमिमिते अष्टाशीत्यधिकपो-

1. William. 2. James II. 3. France. 4. Mary, daughter of Charles I.

रेणैव तान् डिसेण्टर्सान् आदिदेश आज्ञापयामास किन्तु कैथोलिकान् एतज्जातिविशिष्टाँल्लोकान् नैव तथा तादृशं आदिदेश ॥

भा०—अनन्तर अभूतपूर्व उससभाने डिसेण्टर्सलोगोंको अपने अभीष्ट देवताकी पूजाकरनेके लिये आज्ञादी परन्तु कैथोलिकलोगोंके लिये उसतरहकी आज्ञा नहीं दी ॥ ४१ ॥

स्कौटे[1]ऽथ हौलैण्ड[2]समाह्वदेशे
लौर्डुण्डिनो[3]ऽवाप्य सहायभावम् ।
तत्रत्यवीरैः सह युध्यमानो
जेम्सो[4] जिगायाशु रिपोर्बलानि ॥ ४२ ॥

टी०—स्कौटइति । अथानन्तरं जेम्सः (यः पूर्वं फ्रान्सदेशे पलायितः) स्कौटे विषये हौलैण्डसमाह्वदेशे स्कौटान्तर्गतदेशविशेषे लौर्डुण्डिनो लौर्डडण्डिनामकात् पुरुषात् सहायभावं साहाय्यं अवाप्य लब्ध्वा तत्रत्यवीरैर्हौलैण्डीयभटैः सह युध्यमानो युद्धं कुर्वन्सन् रिपोःशत्रोर्बलानि जिगाय जितवान् ॥

भा०—जेम्सराजा जोकि पहिले फ्रान्सको भागगयाथा उसने स्कौटलैण्डमें तद्देशान्तर्गत हौलैण्डदेशमें लौर्डुण्डिसे सहायताको पाकर हौलैण्डीयवीरोंसे युद्ध करताहुआ शत्रुसैन्यको जीतलिया ॥ ४२ ॥

विलियमो[5] नृपतिर्ध्वजिनीयुतो
निखिलराज्यबलाद्यवलेपतः ।
प्रबलशत्रुमुखं प्रययावसौ
हतरयोऽरिभिरत्र पलायत ॥ ४३ ॥

टी०—विलियमइति । ध्वजिनीयुतो वाहिनीसमेतो विलियमो नृपतिर्भूपो निखिलं समग्रं यद्राज्यं बलं सैन्यं आदिपदात्कोषादीनां परिग्रहः

---

1. Scotland, 2. Holland. 3. Lord Dundee. 4. James II. 5. William.

भा०—विलियमराजा इससारे राज्यका स्वामी होवेगा अथवा उसकी स्त्री मेरी राज्यस्वामिनी इनदोनोंके अनन्तर इनकापुत्र राजा होवेगा सभाने इसतरह कहा ॥ ३९ ॥

मेर्य्याः सुतो यदि न तर्ह्यनुजा तदीया
ह्येनी भविष्यति नृपासमितेर्नियोगात् ।
सापार्लिमेण्टपरिषन्नियमैकबन्धु-
रित्याश्रवं क्षितिभृतां प्रथमं शशंस ॥ ४० ॥

टी०—मेर्य्याइति । हीति निश्चयेन यदि मेर्य्याः सुतो न स्यादिति शेषः तर्हि तदीयाऽनुजा मेर्य्याः कनिष्ठभगिनी एनी नामिका स्त्री समितेः सभाया नियोगात् आज्ञातो नृपा भविष्यति नियम एव एकोबन्धुर्यस्या एवंविधा सा प्रसिद्धा पार्लिमेण्टपरिषत्सभा क्षितिभृतां भूपानां प्रथमं पूर्वं इतीदं आश्रवं नियमं शशंस कथयामास ॥

भा०—यह निश्चयहै कि यदि मेरीकापुत्र न हो तो सभाकी आज्ञासे मेरीकी छोटीबहिन एनीनामिका स्त्री नरपालिका होवेगी नियमाश्रय उसप्रसिद्ध पार्लिमेण्टने इन राजाओंके पूर्वही इसतरहका नियमकहा ॥ ४० ॥

ततो डिसेण्टर्सनराः स्वधर्म्मा-
न्निजाधिदेवार्चनमत्र कुर्य्युः ।
इत्येव सासंसदनन्यपूर्वा
कैथोलिकान्नैव तथादिदेश ॥ ४१ ॥

टी०—ततइति । ततोऽनन्तरं अनन्यपूर्वा ऽभूतपूर्वा सा संसत्सभा "डिसेण्टर्साश्च ते नरा एतज्जातिविशिष्टा जना अत्र नन्दनेनगरे स्वधर्म्मात् निजोयोऽधिदेवो ऽभीष्टदेवता तदर्चनं तत्पूजनं कुर्य्युः" इत्यमुनाप्रका-

1. Mary. 2. Anne. 3. Parliament. 4. Dissenters. 5. Catholic.

टी०—राज्य इति । ततो ऽनन्तरं हीति निश्चयेन कौमनवेल्थकानां तथा द्वितीयस्य चार्लसस्य च राज्ये राज्यशासन इत्यर्थः आयरलैण्डदेशे ये ऐरिशा आसन्निति शेषः ते च ऐंग्लिशैः पुरुषैर्नितान्तं अत्यर्थं व्यथि-रे अवमेनिरे "व्यथ भयसंचलनयोरिति धातोः कर्म्मणि लिटि रूपम्" ॥

भा०—अनन्तर यह प्रसिद्ध है कि कौमनवेल्थोंके तथा द्वितीयचार्लसके राज्यशासनमें आयरलैण्डदेशमें जो ऐरिशलोगथे वे इससमय ऐंग्लिशपुरुषोंसे अत्यन्त दुःखयुक्त कियेगये ॥ ४५ ॥

जेम्सश्च तानायरवासिलोकान्
स्वातन्त्र्ययुक्तानकरोद्यथेच्छम् ।
ते चैरिशास्त्विग्लिशवासिनस्तान्
न्यवारयंस्तद्द्विषयादमर्षात् ॥ ४६ ॥

टी०—जेम्स इति । जेम्सश्च तान् आयरवासिनो लोकान् आयर-लैण्डीयान् जनान् यथेच्छं स्वेच्छयेत्यर्थः स्वातन्त्र्ययुक्तान् स्वेच्छाचा-रिणोऽकरोत् ते ऐरिशाश्च तान् वितर्दकान् इंग्लिशवासिन ऐंग्लिशाँ-स्तद्द्विषयात् स एव विषयो देशस्तस्मात् आयरलैण्डादित्यर्थः अमर्षात् क्रोधात् न्यवारयन् निरकाशयन् ॥

भा०—जेम्सने उन आयरलैण्डवासीलोगोंको अपनी इच्छासे स्वतन्त्र कर-दिया और उन ऐरिशलोगोंनेभी दुःखदेनेवाले उन ऐंग्लिशोंको क्रोधसे उस आ-यरलैण्डदेशसे निकालदिया ॥ ४६ ॥

प्राप्याधिपो विलियमो विषयेऽथ तस्मि-
ञ्जेम्सं महीपतिचरं रिपुसम्पराये ।
सार्धं तदैरिशजनैर्बहुदम्भयुक्तं
तं चात्मबाहुतरसा सहसा विजिग्ये ॥ ४७ ॥

1. James II. 2. Ireland. 3. Irish. 4. William.

तेषामवलेपतो गर्वात् प्रवला ये शत्रवस्तेषां मुखं समक्षं अभिमुखमिति-यावत् प्रययौ जगाम असौ भूपोऽरिभिः शत्रुभिर्हतरयो नष्टवेगःसन् अत्र नन्दने नगरे पलायत भग्नोबभूव। अस्मिन्पद्ये द्रुतविलम्बितंवृत्तम् द्रुत-विलम्बितमाहनभौ भराविति लक्षणात् ॥

भा०—सैन्ययुक्त राजाविलियमने समग्रराज्य और सैन्यप्रभृतिके गर्वसे प्रवल शत्रुके अभिमुख युद्धप्रयाणकिया वह शत्रुओंसे नष्टपराक्रम होकर नन्दननगर में भागआया ॥ ४३ ॥

स एव लौर्डुण्डिपुमान्[1] बलिष्ठः
कस्याप्यनाविष्कृतसंज्ञकस्य।
स्वयं प्रतिद्वन्द्विबलानि धुन्वन्
प्राणान्मुमोचानलगोलकेन ॥ ४४ ॥

टी०—स एवेति। बलिष्ठो बलोपेतः अतएव स्वयं उपेक्षितापरस-हायः प्रतिद्वन्द्विनां बलानि शत्रूणां सैन्यानि धुन्वन् कम्पयन् स एव लौर्डुण्डिपुमान् एतन्नामकः पुरुष अनाविष्कृतासंज्ञा यस्य तथाविधस्य कस्यापि पुरुषस्य अनलगोलकेन वह्निमयास्त्रेण प्राणानसून् मुमोच तत्याज ॥

भा०—बलयुक्त अतएव आपही शत्रुसैन्योंको मारताहुआ वही लौर्डुण्डिनामक पुरुष अज्ञातनामधेय किसी शत्रुकी गोलीसे मरगया ॥ ४४ ॥

राज्ये ततः कौमनवेल्थकानां[2]
तथा द्वितीयस्य हि चार्लसस्य[3]।
ये चैरिशौस्त्वायरलैण्डदेशे
ते चैंग्लिशैर्विव्यथिरे नितान्तम् ॥ ४५ ॥

---

1. Lord Dundee. 2. Commonwealth. 3. Charles II.
4. Irish. 5. Ireland.

जगदिदमपहाय तत्र मेरी[1]

निधनमयासनु शीतलामयेन ॥ ४६ ॥

टी०—विलियमेति । गृहस्यैकहेतुः कारणं ( न गृहं गृहिणीविनेति-नियमात् ) नरपते राज्ञो यत् प्रेम तद्धरस्यैकं नर्मपात्रं क्रीडाभाजनं विलियमस्य राज्ञो गृहिणी स्त्री मेरी इदं जगदपहाय परित्यज्य शीतलामयेन शीतलानामकरोगेण निधनं मरणं अयात् प्राप्नोत् ॥

भा०—गृहकी मुख्यहेतु राजाके प्रेमका एक क्रीडापात्र राजाविलियमकी स्त्री मेरी इसजगत्को छोड़कर शीतलारोगसे मरणको प्राप्तहुई ॥ ४९ ॥

फ्रान्सेश्वरेण[2] लुयिना[3] सह युध्यमानो

नामूर[4]नामनगरं नृपतिर्विजिग्ये ।

तेजस्विनां बलवतां सहसैव लक्ष्मीः

कामार्दितेव युवतिः सविधं प्रयाति ॥ ५० ॥

टी०—फ्रान्सेति । फ्रान्सेश्वरेण लुयिना सह युध्यमानो युद्धं कुर्वाणो नृपतिर्भूपो नामूरनाम नामूराभिधानं नगरं पुरं विजिग्ये जितवान् लक्ष्मीः कमला तेजस्विनां प्रतापशालिनां बलवतां बलिष्ठानां पुरुषाणां सविधं सन्निधिं कामार्दिता कामपरवशा युवतिरिव नवयौवनास्त्रीव सहसाएव ( लक्ष्मीपक्षे ) शीघ्रमेव ( युवतिपक्षे ) हास्यसहिता एव प्रयाति प्राप्नोति । अत्रोपमानुप्राणितोऽर्थान्तरन्यासालङ्कारः ॥

भा०—फ्रान्सदेशाधिपति लुयीके साथ युद्धकरताहुआ राजाविलियम नामूरनामकनगरको जीतगया क्योंकि प्रतापी और बलयुक्त पुरुषोंके समीप लक्ष्मी कामपीडित युवतिकी तरह शीघ्रही प्राप्तहोती है ॥ ५० ॥

विलियमं[5] क्षितिपं लुयि[6]भूपती

रिसविका[7]ख्यसुसन्धिपुरःसरः ।

---

1. Mary. 2. France. 3. Lewis. 4. Namur. 5. William. 6. Lewis. 7. Ryswick.

टी०—प्राप्येति । अथानन्तरं अधिपो महीपतिर्विलियमस्तस्मिन् विषये देशे प्राप्य गत्वा तदा तस्मिन्समये रिपुसमराये शत्रुसंग्रामे ऐरिशजनैः सार्धं समं दम्भयुक्तं छलोपेतं पूर्वं महीपतिरिति महीपतिचरः "भूतपूर्वे चरट् इति चरट् प्रत्ययः" एवंविधं तं जेम्सं च आत्मबाहुतरसा निजभुजबलेन सहसा शीघ्रं विजिग्ये जितवान् । अस्मिन्पद्ये वसन्ततिलका वृत्तम् ॥

भा०—अनन्तर राजाविलियमने आयरलैण्डदेशमें प्राप्तहोकर उससमय शत्रुसंग्राममें ऐरिशलोगोंके साथही छलयुक्त प्रथम राजाजेम्सको भी अपने बाहुपराक्रमसे शीघ्रही जीतलिया ॥ ४७ ॥

लासेन्सराज्ञामनवाप्य पूर्वं
वर्णान्क्षमो मुद्रयितुं न कोऽपि ।
अस्मिन्महीं पालयति क्षितीशे
न कोऽपि तस्मिन्नियमो बभूव ॥ ४८ ॥

टी०—लासेन्सरेति । पूर्वं पुरा कोऽपि पुरुषो लासेन्सरस्य तदुपाधिविशिष्टस्य पुरुषस्य आज्ञामनुज्ञामनवाप्यानुपलभ्य वर्णान् अक्षराणि मुद्रयितुं निर्मापयितुं क्षमः समर्थो न बभूवेति शेषः अस्मिन् क्षितीशे भूपतौ महीं पृथ्वीं पालयतिसति "यस्य च भावेन भावलक्षणमिति सप्तमी" तस्मिन्वर्णमुद्रणविषये कोऽपिनियमः संश्रवो न बभूव ॥

भा०—पहिले कोई पुरुषभी लासेन्सरकी आज्ञाविना किसी पुस्तकादिको नहीं छापसक्ताथा परन्तु इसराजाके राज्यशासनमें उस विषयमें कोई नियम न रहा ॥ ४८ ॥

विलियमग्राहिणीग्रहैकहेतु-
र्नरपतिप्रेमभरैकनर्मपात्रम् ।

1. Licenser. 2. William.

चत्वारिंशज्जैकैवैटिज्मनुष्या-
स्तं भूपालं हन्तुमेव प्रवृत्ताः।
चारैराज्ञो ज्ञातभावास्तदैव
पाशोत्त्रासात्कालधर्म्मं समीयुः ॥ ५३ ॥

टी०—चत्वारिंशदिति। भूपालं महीपं तं विलियमं हन्तुं विनाशयितुमेव प्रवृत्ता उद्यतास्तदा एव राज्ञोभूपस्य चारैर्गूढपुरुषैर्ज्ञातभावा विदिताभिप्रायाश्चत्वारिंशत्संख्यका जैकैवैटिज्मनुष्या एतदभिधानाजनाः पाशेन रज्जुनिबन्धनेन य उत्त्रास उद्वेगस्तस्मात् कालधर्म्मं मरणं समीयुः प्रापन् ॥

भा०—उसराजा विलियमको मारनेके लिये प्रवृत्त तथा उसीवक्त राजाके गूढपुरुषोंसे ज्ञातभावको प्राप्त चालीस जैकैवटिज् जातिनामकपुरुष फांसीसे मरणको प्राप्तहुए ॥ ५३ ॥

स्पेनेश्वरश्चार्लसको द्वितीयः
क्षयार्तिरुग्णः शिथिलाङ्गयष्टिः।
प्रालेयवर्षापचितच्छदं त-
द्धैमन्तिकं तामरसं यथासीत् ॥ ५४ ॥

टी०—स्पेनेश्वरइति। स्पेनेश्वरः स्पेनदेशाधिपो द्वितीयो द्वितीयसंख्यश्चार्लसकः क्षयार्तिरुग्णः क्षयरोगार्तः अतएव शिथिलाङ्गयष्टिः कृशशरीरः सन् प्रालेयवर्षेण तुषारपतनेन अपचिता विशीर्णतांप्राप्ताश्छदाः पत्राणि यस्यैवंविधं तत्प्रसिद्धं हैमन्तिकं हेमन्तस्येदं "कालाट्ठञ् इति ठञ् प्रत्ययः" तामरसं यथा कमलमिव [ पङ्केरुहं तामरसं सारसंसरसीरुहमित्यमरः ] आसीदजायत ॥

भा०—स्पेनदेशका राजा द्वितीयचार्लस क्षयरोगसे तुषारके गिरनेसे विशीर्णपत्रवाले हेमन्तर्तुके कमलकी तरह अतिकृशशरीर होगया ॥ ५४ ॥

1. Jacobites. 2. Spain. 3. Charles II.

अकृत तं निखिलैंग्लिशभूभृतं
गुणवतामसुलभ्यमिहास्ति किम् ॥ ५१ ॥

टी०—विलियममिति । लुयिभूपतिर्लुयिनामा फ्रान्सदेशाधिपो रिसविकाख्यो यः सन्धिः सन्धानं तत्पुरःसरस्तदग्रेसरः सन् तं विलियमं क्षितिपं राजानं निखिलस्य समग्रस्यैंग्लिशदेशस्य भूभृतं महीपं अकृत व्यधत्त तत्रैंग्लिशे तदा विलियम एव संम्राडभूदितिभावः इह जगति गुणवतां सद्गुणानां पुरुषाणां असुलभ्यं किमस्ति न किमपीत्यर्थान्तरन्यासेन समर्थ्यते ॥

भा०—रिसविकाख्य सन्धि करनेवाले लुयीनामक फ्रान्सेश्वरने उस विलियम राजाको सम्पूर्ण इंग्लिशदेशका राजास्वीकार किया क्योंकि गुणी पुरुषोंको इस जगत्में दुष्प्राप्य क्या वस्तु है ॥ ५१ ॥

ये सर्वकार्य्येषु निरीक्षकत्वे
नियोजिता भूपतिना डचाख्याः।
पदच्युताँस्तानकरोत्क्षितीशो
भाग्यक्षये विश्वजनो विपक्षः ॥ ५२ ॥

टी०—यइति । ये डचाख्या डचजातिविशिष्टाः पुरुषा भूपतिना राज्ञा सर्वकार्य्येषु समग्रकृतिषु निरीक्षकत्वे सदसद्विवेककार्य्यविषये नियोजिताः प्रेरिता अभूवन्निति शेषः क्षितीशो महीपस्तान् डचान् पदच्युतान् स्थानपरिभ्रष्टानकरोत् भाग्यक्षये भाग्यविनाशे विश्वजनः सर्वलोको विपक्षः शत्रुर्भवतीत्यर्थान्तरेण समर्थ्यते ॥

भा०—जिन डचलोगोंको राजाने सब कार्य्योंमें सदसद्विवेकार्थ निरीक्षक नियत कियाथा उन सबको उस ( राजा ) ने स्थानच्युतकर दिया क्योंकि भाग्यक्षय होनेपर सबलोग शत्रु होते हैं ॥ ५२ ॥

1. Dutch.

शुभाशुभं योग्यमयोग्यं च अत्रयन्ति जानन्तीत्यर्थान्तरेण समर्थ्यते । अस्मिन्पद्ये द्रुतविलम्बितंवृत्तम् ॥

भा०—राजाविलियमनेभी फ्रान्सेश्वरके उसवचनको सुनकर अपनाहितकारक न माना उससमय उसने लुयीराजाको इसबातसे निषेध करदिया क्योंकि विशिष्टबुद्धिवालेलोग भलाई बुराईको जानलेते हैं ॥ ५६ ॥

स्पेनाधिपो नीदरलैण्डकाख्यं[1]
वेष्टेण्डिजं[2] देशमपि प्रयत्नात् ।
स्वायत्तमाजावकरोत्ससैन्यः
सुविक्रमं याति जयस्य लक्ष्मीः ॥ ५७ ॥

टी०—स्पेनेति । ससैन्यः स्पेनाधिपश्चार्लसो नीदरलैण्डकाख्यं नीदरलैण्डनाम वेष्टेण्डिजंदेशमपि आजौ संग्रामे प्रयत्नात् विशेषबुद्धिकौशलात् स्वायत्तमकरोत् जयस्यलक्ष्मीः सुविक्रमं सुपौरुषं पुरुषं याति प्राप्नोतीत्यर्थान्तरन्यासेन समर्थ्यते ॥

भा०—सेनासहित स्पेनेश्वर चार्लसने नीदरलैण्ड वेष्टेण्डिजदेशोंको संग्राममें बड़ेप्रयत्नसे स्वायत्त करदिया क्योंकि जयलक्ष्मी पराक्रमी पुरुषको प्राप्त होती है ॥ ५७ ॥

ततो विलियमो ऽधिपः स्वमतमण्डनोपस्थितं
बभेरियनृपात्मजं[3] बहुभुवं प्रदायादरात् ।
अतोषयदनन्यधीः प्रवरपूरुषः कृत्यवित्
परोपकरणोद्यतो गणयतीह नोऽर्थव्ययम् ॥ ५८ ॥

टी०—ततइति । ततोऽनन्तरं विलियमोऽधिपोभूपतिः स्वमतमण्डने निजमतस्य पुष्टिकरणे उपस्थितं प्राप्तं बभेरियदेशस्य यो नृपस्तदात्मजं तत्तनूजं "अत्रकर्तुः इष्टतमत्वात् नृपात्मजस्य कर्मत्वम्" बहुभुवं अन-

1. Netherlands. 2. West Indies. 3. Bavaria.

लुयी फ्रान्सदेशाधिपो मोहबुद्धि-
स्तदीयाग्रजापाणिसम्पीडनेन ।
तदा स्पेनराज्याधिपीठं प्रदातुं
स्वपुत्राय लुब्धान्तरात्मा चकाङ्क्ष ॥ ५५ ॥

टी०—लुयीति । तदा तस्मिन्समये मोहबुद्धिरज्ञानधिषणः अत एव लुब्धान्तरात्मा लोभयुतः फ्रान्सदेशाधिपोलुयी तदीयाग्रजायाः स्पेनाधिपस्य ज्येष्ठभगिन्याः पाणिसम्पीडनेन विवाहेन हेतुना स्पेनराज्यस्याधिपीठं राज्यासनं स्वपुत्राय निजात्मजाय प्रदातुं समर्पयितुं आचकाङ्क्ष इयेष । अस्मिन्पद्ये भुजङ्गप्रयातंवृत्तम् भुजङ्गप्रयातं भवेद्यैश्चतुर्भिरिति लक्षणात् ॥

भा०—उससमय अज्ञानबुद्धि अतएव लोभविशिष्टान्तःकरण फ्रान्सेश्वर लुयीनामक राजने स्पेनेश्वरकी ज्येष्ठभगिनीके पाणिग्रहणसे स्पेनदेशके राज्यपीठ को अपनेपुत्रके लिये देनेकी इच्छाकी ॥ ५५ ॥

विलियमोऽप्यवगत्य तदीरितं
न तदजीगणदात्महितं वचः ।
स निषिषेध तदा लुयिभूपतिं
सुमतयो ह्यवयन्ति शुभाशुभम् ॥ ५६ ॥

टी०—विलियम इति । विलियमोऽपि तदीरितं फ्रान्सेश्वरोक्तम् वचोवचनं अवगत्य ज्ञात्वा आत्महितं स्वेष्टप्रदं तद्वचनं नाजीगणद् नामन्यत तदा तस्मिन्समये स विलियमो लुयिभूपतिं फ्रान्सेश्वरं निषिषेध तत्कार्य्यंप्रति वारितवान् " उपसर्गात्सुनोति सुवतीत्यनुवृत्तौ स्थादिष्वभ्यासेन चाभ्यासस्येति षत्वम् " हीति निश्चयेन सुमतयस्सुबुद्धयः

---

1. Lewis. 2. France. 3. William.

तद्विषयस्य तु राज्यं
फिलिप्कुमाराय चार्लसः प्रददौ ॥ ६० ॥

टी०—स्पेनेति । आर्चन्ग्रा आर्चड्यूकनामकश्चार्लसात्मजः स्पेनदेशाधिपतेः पुत्रः स्पेनस्य तद्देशस्य कमपि परिमितं भागं त्रिभागं जगृहे स्वीकृतवान् चार्लसः स्पेनाधिपस्तद्विषयस्य स्पेनदेशस्य राज्यं तु फिलिप्कुमाराय प्रददौ दत्तवान् अस्मिन्पद्ये गीतिवृत्तम् आर्य्यापूर्वार्धसमं द्वितीयमपि भवति यत्र चारुमते । छन्दोविदस्तदानीं गीतिंताममलभात्र भाषन्ते इतिलक्षणात् ॥

भा०—आर्चाधिपति ( आर्चड्यूकनामराजा ) स्पेनाधिपति चार्लसके कमसलपुत्रने स्पेनके कुछ हिस्सेको आपलिया और चार्लसने बकी सारेदेशका राज्य फिलिप्कुमारको देदिया ॥ ६० ॥

जेम्से[1] मृते वोल्डप्रिटेण्डराख्य-
स्तृतीयजेम्सो[2] लुयिना[3] बभाषे ।
यो भूमिपालेन यथाक्रियेत
तथेतरे सर्वजना गदन्ति ॥ ६१ ॥

टी०—जेम्सइति । लुयिना फ्रान्सेश्वरेण जेम्सेमृतेसति वोल्डप्रिटेण्डराख्यो वोल्डप्रिटेण्डरोनाम तृतीयजेम्सो बभाषे "कर्म्मणिलिट्" भूमिपालेन योयथाक्रियेत विधीयेत इतरे सर्वजनास्तथा तादृशमेव गदन्ति अत्र हेत्वलङ्कारानुप्राणितो ऽर्थान्तरन्यासालङ्कारः ॥

भा०—फ्रान्सेश्वर लुयीसे जेम्सके मरनेपर वोल्डप्रिटेण्डरनामकपुरुष तृतीय जेम्सकरके कहागया क्योंकि राजामें जो जिसतरह कियाजाताहै और लोगभी उसीतरह कहते हैं ॥ ६१ ॥

---

1. James. 2. Old Pretender. 3. Lewis.

लयभूभागं आदरात् प्रदाय दत्त्वा अतोपयत् प्रसन्नमकरोत् अनन्यधीरतुलितबुद्धिः कृत्यवित् कृतज्ञः अतएव परोपकरणे ऽन्योपकारविषये उद्यतोधद्धपरिकरः प्रवरपुरुषः इह जगति अर्थव्ययं धनापगमं न गणयति न विचारयतीत्यर्थान्तरेण समर्थ्यते । अस्मिन् पद्ये पृथ्वीछन्दः जसौ जसयला वसुग्रहयतिश्चपृथ्वीगुरुरिति लक्षणात् ॥

भा०—अनन्तर राजाविलियमने अपने पक्षपाती बवेरियादेशके राजाके पुत्रको बडेआदरसे बहुतभूमिभागदेकर सन्तुष्टकिया क्योंकि बड़ीबुद्धिविशिष्ट कार्य्यवेत्ता अतएव दूसरेकी भलाईमें प्रवृत्त श्रेष्ठपुरुष इससंसारमें धनव्ययको नहीं गिनता ॥ ५८ ॥

अथेटली[1] दक्षिणदिग्विभागे
स भूपतिः फ्रान्स[2]पतेर्हि नप्त्रे ।
फिलिप्[3]कुमाराय ददौ यथेच्छं
सतां कृपा कां न ददाति सिद्धिम् ॥ ५६ ॥

टी०—अथेति । अथानन्तरं सविलियमोभूपः फ्रान्सपतेः फ्रान्सेश्वरस्य नप्त्रे पौत्राय फिलिप्कुमाराय दक्षिणदिग्विभागे दक्षिणस्यांदिशि ईटलींतन्नामकदेशविशेषं यथेच्छं यथास्यात्तथा ददौ प्रायच्छत् हीतिनिश्चयेन सतां सज्जनानां कृपाऽनुकम्पा कां सिद्धिं न ददाति अपितु सर्वामेवेत्यर्थान्तरेण समर्थ्यते ॥

भा०—अनन्तर राजविलियमने फ्रान्सेश्वरके पौत्र फिलिप्कुमारके लिये दक्षिणदिशकी तरफ ईटलीनामकदेशविशेषको स्वेच्छासे देदिया क्योंकि सत्पुरुषोंकी कृपा किससिद्धिको नहीं देती है ॥ ५९ ॥

स्पेन[4]स्य कमपिभाग -
मार्च[5]नृपश्चार्ल्[6]सात्मजो जगृहे ।

---

1. Italy. 2. France. 3. Philip. 4. Spain.
5. Archduke. 6 Charles.

जेम्सकीपुत्री एनीनामिकास्त्री जोकि अपने कार्य्यमें चतुर और सबलोगोंकी माननीयहै रानीहोवे ॥ ६३ ॥

यो ऽभूत्पुरा प्राथमिको हि जेम्स-
स्तन्नप्तृका सोफियिका ऽनुकूला ।
एन्यां मृतायां परिषन्नियोगा-
द्राज्यासने तिष्ठतु गौरवाढ्या ॥ ६४ ॥

टी०—यइति । हीति निश्चयेन पुरा पूर्वं यः प्राथमिकः प्रथमसंख्यान्वितो जेम्सो ऽभूदजायत तन्नप्तृका तत्पौत्री गौरवाढ्या गुरुत्वविशिष्टा ऽनुकूला योग्या सोफियिका सोफियाभिधाना स्त्री एन्यां मृतायां सत्यां परिषन्नियोगात् सभाज्ञातो राज्यासने राज्यपीठे तिष्ठतु आस्ताम् ॥

भा०—यह निश्चयहै कि पहिले जो प्रथमजेम्सथा उसकी पौत्री माननीय और योग्य सोफियानामिका[1] एनीके मरनेपर सभाकी आज्ञासे राज्यासनपर बैठे ॥ ६४ ॥

इत्येव संसन्नयमार्गसंस्था
ह्यशोधयन्नीतिपथं क्रमेण ।
युग्माभ्रसप्तेन्दुमिते शके ऽस्मिन्
समागमन्मृत्युदशां क्षितीन्द्रः ॥ ६५ ॥

टी०—इतीति । नयमार्गसंस्था नीतिवर्त्मस्थिता संसत्सभा एव क्रमेण नीतिपथं "ऋक्पूरब्धूः" इति समासान्तो ऽप्रत्ययः" नयमार्गं इतीत्थं अशोधयत् शोधनमकरोत् युग्माभ्रसप्तेन्दुमिते द्व्यधिकसप्तदशशतमिते ऽस्मिन् क्रैस्तशके क्षितीन्द्रो विलियमोनृपो मृत्युदशां मरणावस्थां समागमत् प्राप ॥

भा०—नीतिमार्गस्थित सभाने क्रमसे नयमार्गको इसतरह संशोधनकिया अनन्तर राजा विलियम उसी १७०२ ईसवीमें मरणको प्राप्तहुआ ॥ ६५ ॥

---

1. Sophia.

सभ्यास्तदा विलियमाय धराधराय
फ्रान्सेश्वरेण लुयिना सह योद्धुमर्थम् ।
आत्मेच्छया ददुरनल्पसहायतां च
येनाधिपो विलियमो विजयी बभूव ॥ ६२ ॥

टी०—सभ्याइति । तदा तस्मिन्समये सभ्याः सामाजिकाः फ्रान्सेश्वरेण लुयिनासह योद्धुं संग्रामयितुं आत्मेच्छया धराधराय भूपतये विलियमाय अर्थं धनं अनल्पसहायतां बृहत्साहाय्यं च ददुः येन हेतुना विलियमो ऽधिपो विजयी जययुक्तो बभूव अजायत ॥

भा०—उससमय सभ्यलोगोंने फ्रान्सेश्वर लुयीकेसाथ लड़नेको राजा विलियमके लिये धन और बड़ी सहायतादी जिससे कि राजाविलियम विजयी हुआ ॥ ६२ ॥

( विशेषकम् )

सुतं विना यर्हि नृपो म्रियेत
द्वितीयजेम्सस्य तदा तनूजा ।
ऐनी भवेद्राज्यधुरन्धरा सा
स्वकर्म्मदक्षा जनताप्रियार्हा ॥ ६३ ॥

टी०—सुतमिति । यर्हि यदा नृपोविलियमः सुतंविना पुत्रमन्तरेण म्रियेत "सम्भावनायांलिङ्" तदा द्वितीयजेम्सस्य तनूजा पुत्री स्वकर्म्मदक्षा निजकार्य्यचतुरा अतएव जनतायाः प्रियार्हा अतिस्पृहणीया सा एनी एतन्नामिका स्त्री राज्यधुरन्धरा राज्यकार्य्योद्वहनयुक्ता भवेज्जायेत ॥

भा०—जब राजाविलियम वगैरपुत्रके गतप्राणहोजाय तो उसवक्त द्वितीय

1. William. 2. France. 3. James II. 4. Anne.

भा०--पहिले फ्रान्सेश्वरने अपने पौत्रके लिये स्पेनाधिपति चार्लसका सारा राज्य चाहा और उसने प्रिटेण्डरनामकपुरुषको तृतीयजेम्सके नामसे कहा ये दो बात अयोग्य हुई ॥ ६७ ॥

एनी नृपामर्षकरं तदीयं
वचो विचार्य्याशु विपक्षभावम् ।
अभूतपूर्वाऽलघुकोपवह्नि-
स्तेनैवसार्धं लुयिना ह्ययुद्ध ॥ ६८ ॥

टी०—एनीति । हीति निश्चयेन एनीनृपा विपक्षो विरुद्धो भावो यस्य तत् अमर्षकरं क्रोधोत्पादकं तदीयं फ्रान्सेश्वरस्येत्यर्थः वचो वचनं विचार्य्य निर्धार्य्य अभूतपूर्वश्चासौ अलघुर्महान् कोपएव वह्निर्यस्या एवंविधासती तेनैव लुयिना फ्रान्सेश्वरेण सार्धं अयुद्ध युद्धमकरोत् ॥

भा०—एनी रानीने विरुद्धाभिप्रायवाला अतएव क्रोधोत्पादक लुयीनामक फ्रान्सेश्वरके वचनको जल्दीही विचारकर उसीके साथ बड़ा युद्धकिया ॥ ६८ ॥

मारल्बैरादेशनृपः ससैन्यः
फ्रान्सेश्वरं स्पेनपतिं च लुब्धम् ।
पूर्वं विजित्याहवसम्प्रहारैः
पुनश्च तौ सन्धियुतौ व्यधत्त ॥ ६९ ॥

टी०—मारेति । ससैन्यः सचमूः मारल्बरादेशस्य नृपोऽधिपो लुब्धं-लोलुपं स्पेनपतिं स्पेनदेशाधिपं फिलिपनामकं फ्रान्सेश्वरं लुयिनं चोभयो-र्देशयोर्भूपती अपि आहवे संग्रामे ये सम्प्रहारास्तैः पूर्वं विजित्य पुनरनन्तरं तावुभौ सन्धियुतौ सम्मेलयुतौ व्यधत्ताकरोत् ॥

भा०—सेनासहित मारल्बरादेशाधिपतिने लुब्ध स्पेन और फ्रान्सके राजा फिलिप् और लुयीको पहिले संग्राममें जीतकर अनन्तर वे दोनों सन्धियुक्त करदिये ॥ ६९ ॥

---

1. Anne. 2. Lewis. 3. Marlborough. 4. France. 5. Spain.

तदेव सैनी जनतानुमत्या
ह्यशेषलोकाञ्चितसाधुभावा ।
अध्यास्त राज्यासनमात्मनीनं
यथा सरोजं नवराजहंसी ॥ ६६ ॥

टी०—तदेति । हीति निश्चयेन तदा तस्मिन्समये एव अशेषलोकैरञ्चितः पूजितः साधुभावो यस्या एवंविधा सा एनी जनतायाः मक्तया अनुमत्या सम्मत्या आत्मनेहितमात्मनीनं "आत्मन्विश्वजनभोगोत्तरपदात्खः, आत्माध्वानौखे मकृत्यास्तः" राज्यपीठं नवा नूतनावस्था राजहंसी हंसानांराजा राजहंसः "राजदन्तादिषुपरं एषु पूर्वमयोगार्हं परं स्यात्" स्त्रीचेद्राजहंसी [राजहंसस्तुकादम्बे कलहंसेनृपोत्तमे इति हैमपेदिन्यौ] कलहंसी सरोजं यथा कमलमिव अध्यास्त अधितष्ठौ ॥

भा०—उसीसमय लोगोंसे प्रशंसितस्वभाववाली वह एनी नामिका स्त्री लोकसम्मतिसे आत्मोत्कर्षविधायक राज्यासनपर राजहंसी कमलमें जैसी बैठी ॥ ६६ ॥

फ्रान्सेश्वरः पौत्रकृते समग्रं
राज्यं पुरास्पेनपतेरियेष ।
प्रिटेण्डरं जेम्सतृतीयनाम्ना
चख्यौ स इत्येतदयुक्तमासीत् ॥ ६७ ॥

टी०—फ्रान्सेति । पुरा पूर्वं फ्रान्सेश्वरः फ्रान्सदेशाधिपः पौत्रकृते नप्त्रर्थे स्पेनपतेः स्पेनेश्वरस्य समग्रं राज्यं इयेषाचकाङ्क्ष तथा स फ्रान्सपतिः प्रिटेण्डरं नामपुरुषं जेम्सतृतीयस्यनाम्ना आख्यया चख्यौ कथयामास "चक्षिङ् व्यक्तायांवाचि तस्यख्यात्रादेशः" इत्येतत् कार्यद्वयमयुक्तमसमञ्जसमासीत् ॥

1. Anne. 2. France. 3. Spain. 4. Pretender.
5. James III.

ह्विग्टोरिसंज्ञौ परिषद्विभागौ
बभूवतुः सभ्यजनानुमत्या ।
ह्विग्मानवास्तत्र नियोद्धुकामा
बभूवुरन्ये प्रशमप्रियाश्च ॥ ७२ ॥

टी०—ह्विगिति । तत्रैंग्लिशदेशे सभ्यजनानां अनुमत्या सम्मत्या ह्विग्च टोरिश्च संज्ञे ययोस्तौ परिषद्विभागौ संसदंशौ [ अंशो विभाजने प्रोक्त एकदेशेऽपिवस्तुन इति हेमचन्द्रः ] बभूवतुः ह्विग्मानवा ह्विग्संज्ञका-जना नियोद्धुंकामो येषां ते युद्धाभिलाषिणः " तुम्कामसनसोरपीतिनि-यमात् तुमोमकारस्य लोपः " बभूवुः अन्ये टोरिसंज्ञकाश्च सभ्याः प्रश-मप्रियाः शान्तिभाजो बभूवुः ॥

भा०—वहां इंग्लिशदेशमें सभ्यलोगोंकी सम्मतिसे पार्लिमेण्टके ह्विग् और टोरिनामक दोहिस्से होगये ह्विग्लोग युद्धाभिलाषीथे और टोरिलोग शान्तिस्थापन करनेवाले थे ॥ ७२ ॥

तदैव सैचीभेरलं सुकार्य्ये
ऽवमानयन् ह्विग्परिषज्जनौघः ।
तया समित्या नियमैकवन्त्या
न्यवारि सर्वप्रकृतिक्रियाभ्यः ॥ ७३ ॥

टी०—तदैवेति । तदैव तस्मिन्समयएव नियमैकवन्त्या नीतिप्रियया तया समित्या सभया सैचीभरलमेतन्नामकं पुरुषविशेषं सुकार्य्ये योग्य-क्रियायां अवमानयन् तिरस्कुर्वन् ह्विग्परिषज्जनौघो ह्विग्नामकसभ्यनि-वहः सर्वा या प्रकृतिक्रियाः प्रजाकार्य्याणि ताभ्यो न्यवारि निवार्य्य-तेस्म " कर्म्मणिलुङ् " ॥

1. Whig, Tory. 2. Sacheverelle.

येनैनिकां फ्रान्सनिवासिलोका-
राज्यप्रभुं तामपि मेनिरे ते ।
यदीटलीमार्चनृपाय सर्वां
रोमेश्वराय प्रददौ फिलिप्कः ॥ ७० ॥

टी०—येनेति । येन सन्धिनियमेन ते फ्रान्सनिवासिनोलोकास्तां एनिकामपि राज्यप्रभुं स्वराज्यस्वामिनीं मेनिरे ऽमंसत यत् यस्मात्कारणात् फिलिप्कोरोमेश्वराय आर्चनृपाय चार्लसपुत्राय सर्वां समग्रां ईटलीं एतन्नामिकां भूमिं प्रददौ प्रायच्छत् अत्र हेत्वलङ्कारः ॥

भा०—जिससन्धिनियमसे कि फ्रान्सके लोग उस एनीकोभी अपने राज्य की स्वामिनी माननेलगे और उसीकारण फिलिप्ने रोमदेशाधिपति चार्लसपुत्र आर्च नृप [ ड्यूक आफ आर्च ] के लिये सारीईटली देदी ॥ ७० ॥

अथैंग्लिशाः स्कौटनिवासिनश्च
परस्परं प्रेमयुता बभूवुः ।
येनैंग्लिशैः पण्यविधानदक्षा
वणिक्क्रियां कर्तुमिहोचिरे ते ॥ ७१ ॥

टी०—अथेति । अथानन्तरं ऐंग्लिशा इंग्लिशदेशीयजनाः स्कौटनिवासिनः स्कौटजनाश्च परस्परमन्योऽन्यं प्रेमयुताः प्रीतिभाजो बभूवुः येनहेतुना ऐंग्लिशैर्जनैः कर्तृभिः पण्यस्य वणिग्व्यापारस्य विधानं तत्र दक्षाश्चतुरास्ते स्कौटनिवासिनो जना इह इंग्लिशदेशे वणिक्क्रियां कर्तुं ऊचिरे कथ्यन्तेस्म "कर्मणिलिट्" अत्रापि हेत्वलङ्कारः ॥

भा०—अनन्तर ऐंग्लिशलोग और स्कौटनिवासीलोग परस्पर प्रीतियुक्त होगये जिससे कि ऐंग्लिशोंसे व्यापार करनेवाले स्कौटके लोगोंको इंग्लिशदेशमें व्यापार करनेके लिये आज्ञादीगई ॥ ७१ ॥

1. Italy. 2. Archduke Charles. 3. Rome. 4. Philip. 5. Scotland.

# सप्तमः सर्गः ॥



अथापि जौर्ज[1]ः प्रथमो महाकुलः
सुबुद्धिमान्सोफियिका[2]त्मजो युवा ।
युगेन्दुसप्तेन्दुमिते शके तदा
नृपासने ऽतिष्ठदवाप्तसम्मदः ॥ १ ॥

टी०—अथेति । अथानन्तरमपि महाकुलः सुकुलोत्पन्नो युवा यौवनयुक्तः सुबुद्धिमान् प्रज्ञावान् अवाप्तसम्मदः प्राप्तानन्दः सोफियिकायाः सोफियाख्याया "प्रत्ययस्थात्कादित्यकारस्येत्वम्" आत्मजस्तनयः प्रथमोजौर्ज एतन्नमकः पुरुषस्तदा तस्मिन्समये युगेन्दुसप्तेन्दुमिते चतुर्दशाधिकसप्तदशशतमिते क्रैष्टशके नृपासने राज्यपीठे ऽतिष्ठत् तस्थौ । अस्मिन्सर्गे वंशस्थंवृत्तम् जतौ तु वंशस्थमुदीरितंजराविति लक्षणात् ॥

भा०—अनन्तर महाकुलोत्पन्न बुद्धिमान् युवा और सम्प्राप्तहर्ष सोफियाका पुत्र प्रथमजौर्ज उससमय १७१४ इसवीमें नन्दनराज्यासनपर बैठा ॥ १ ॥

ततश्च टोर्य्यौ[3]ः समितेः कुमन्त्रिणः
सजौर्जभूपो निखिलान्निराकरोत् ।
अमर्षसम्पूरितचेतसः खला-
ध्रुवं प्रयान्तीह विसंष्ठुलां दशाम् ॥ २ ॥

टी०—ततइति । ततोऽनन्तरं सजौर्जभूपः टोर्य्या एतन्नामिकायाः समितेः सभायाः निखिलान् कुमन्त्रिणः कुत्सितसचिवान् निराकरोद्-दूरीचकार अमर्षेण रोषेण सम्पूरितानि चेतांसि येषां एवंविधाः खला इह-

1. George I. 2. Sophia. 3. Tory.

भा०—उसीसमय नीतिप्रिय उसपार्लिमेण्टसभाने सैचीभरलनामक किसीमान्यपुरुषको अच्छेकार्य्यमें निरादरकरतेहुए ह्विग्जनसमुदायको सारेराज्यकार्य्यसे दूरकरदिया ॥ ७३ ॥

अथ टोरि[1]समितिप्रधानसभ्याः
सुधियो हार[2]लिसेण्ट[3]जौन[4]काद्याः ।
फिलिपा[5] लुयिना[6] तथान्यभूपैः
सहते स्नेहमयीं व्यधुः सुनीतिम् ॥ ७४ ॥

टी०—अथेति । अथानन्तरं सुधियः सुबुद्धयो हारलिश्च सेण्टश्च जौनकश्चैते आद्या मुख्या येषां एवंविधाः टोरिसमितौ ये प्रधानसभ्या मुख्यसभासदस्ते फिलिपा फिलिप्नामकेन स्पेनदेशाधिपतिना लुयिना फ्रान्सेश्वरेण तथाऽन्यभूपैरपरमहीपतिभिःसह स्नेहमयीं प्रेमयुतां सुनीतिं सुनयं व्यधुरकार्षुः ॥

भा०—अनन्तर सुबुद्धि हारलिसेण्ट जौनकादिक जो टोरिनामक सभाविभागके मुख्यसभ्यथे उन्होंने फिलिप् लुयी तथा और राजाओंके साथ स्नेहयुक्त सुनीतिसे वर्तावकिया ॥ ७४ ॥

इति उर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये अङ्गभूतष्टुआर्टभूपवंशवर्णनन्नाम षष्ठःसर्गः ॥ ६ ॥

---

1. Tory. 2. Harley. 3, 4. St. John. 5. Philip. 6. Lewis.

श्वेन्दुमिते सप्तविंशत्यधिकसप्तदशशतमिते क्रैष्टशके समग्रा ये सामन्ता मण्डलेश्वरास्तेषां किरीटमुकुटैरञ्जितं प्रणत्या तेषां मुकुटमणिप्रभाभी-रागयुक्तं स्वतातस्य निजपितू राज्यासनं राज्यपीठं अध्यतिष्ठत् "अधि-शीङ्स्थासांकर्मेत्याधारस्य कर्मत्वम्"

भा०—अनन्तर विख्यातपराक्रम द्वितीयजौर्जनामक भूप १७२७ इसवीमें समस्त राजमुकुटोंसे रञ्जित अपने पिताके राज्यासनपर बैठा ॥ ४ ॥

अमात्यमुख्योऽपि सवालपोलको-
विरोधिभिः स्पेननिवासिभिः समम्।
नियोद्धुकामो ध्वजिनीसमावृत-
श्चकार जन्यं भयदायकं नृणाम् ॥ ५ ॥

टी०—अमात्येति। अमात्यमुख्यो मन्त्रिशिरोमणिः सप्रसिद्धोवाल-पोलको नामपुरुषो नियोद्धुंकामो यस्य "तुम्काममनसोरपीति मकार लोपः" युद्धाभिलाषी अतएव ध्वजिनीसमावृतो वाहिनीयुतःसन् विरोधिभिर्विद्वेषपरैः स्पेननिवासिभिः पुरुषैः समं सार्धं नृणां भयदायकं लोकसंत्रासकारणं जन्यं युद्धं [ युद्धमायोधनं जन्यमित्यमरः ] चकार विदधौ ॥

भा०—मन्त्रिशिरोमणि उस वालपोलकनामपुरुषने युद्धाभिलाषासे सेनायुक्त होकर विद्वेषपर स्पेननिवासीलोगोंके साथ जनताको भयदिखानेवाला संग्राम किया ॥ ५ ॥

अथैंग्लिशास्तत्र महारणे भृशं
विपक्षभावैः क्षततेजसोऽभवन्।
अभूतपूर्वं सचिवः पराभवं
विलोक्य साचिव्यपदं न्यरीरहत् ॥ ६ ॥

1. Walpole. 2. Spain.

जगति ध्रुवं निश्चयेन विसंयुक्तां विपरीतां दशामवस्थां प्रयान्ति गच्छन्तीत्यर्थान्तरेण समर्थ्यते ॥

भा०—अनन्तर उसराजाजौर्जने टोरिनामकसभाके कुमन्त्रियोंको निकाल दिया क्योंकि रोषपूरितचित्तवालेलोग इसलोकमें निश्चयकरके विपरीत दशाको प्राप्तहोते हैं ॥ २ ॥

अनेकदेशागतजीविकार्थिनां
वणिक्क्रिया वृद्धिमती तदाऽभवत् ।
पुरे हि राजन्वतिसम्पदास्पदे
न का कृतिः सिद्धिकरी प्रवर्तते ॥ ३ ॥

टी०—अनेकेति । तदा तस्मिन्समये अनेकदेशेभ्य आगता ये जीविकार्थिनः व्यावहारिकास्तेषां वणिक् क्रिया पण्यकृतिर्वृद्धिमती बाहुल्योपेता ऽभवदजायत हीति निश्चयेन सम्पदास्पदे समृद्धियुक्ते राजन्वति शोभनो राजा यत्र " राजन्वान् सौराज्ये इति मतुप्प्रत्ययः " एवंविधे पुरे नगरे का कृतिः क्रिया सिद्धिकरी शोभनोदर्कप्रदा न प्रवर्तते अपितु सर्वा एव प्रवर्तन्ते इति काकुगर्भितार्थान्तरन्यासेन समर्थ्यते ॥

भा०—उससमय अनेकदेशोंसे आयेहुए लोगोंकी व्यापारक्रिया ज्यादः बढ़गई क्योंकि सब सम्पत्तियुक्त अच्छेराजासे रक्षित नगरमें कौन क्रिया सफल नहीं होती ॥ ३ ॥

द्वितीयजौर्जः[1] प्रथितोरुविक्रमो
नगायनाश्वेन्दुमिते शके ततः ।
समग्रसामन्तकिरीटरञ्जितं
स्वतातसिंहासनमध्यतिष्ठत् ॥ ४ ॥

टी०—द्वितीयेति । ततोऽनन्तरं प्रथितः प्रख्यात उरुर्महान् विक्रमः पराक्रमो यस्यैवंविधो द्वितीयजौर्जो द्वितीयसंख्यको जौर्जनृपो नगायना-

1. George. II.

टी०—अथेति। अथानन्तरं स एव प्रिटेण्डरः "सोऽचिलोपेचेत्पादपूरणमिति सुलोपः" गर्वतः स्वपौरुषाहङ्कारात् इंग्लिशदेशं समेत्य प्राप्य सहायहीनः सन् यथागतं यथाप्राप्तं यथा तथा निरगाद् निर्ययौ परोपकारैः अन्यसाहाय्यैर्विहितात्मगौरवः कृतनिजमहिमा पुरुषोऽधिराजविग्रहे महीपतीन्द्रयुद्धे सिद्धिं विजयलक्ष्मीं नाप्नोति न लभते अत्रार्थान्तरन्यासालङ्कारः॥

भा०—अनन्तर वही प्रिटेण्डरनामकपुरुष विजयाहङ्कारसे इंग्लिशदेशको पहुंचकर सहायताके अभावसे जैसा आया वैसाही चलागया क्योंकि अन्योपकारसे गौरवकोप्राप्तपुरुष अधिराजके युद्धमें विजयसिद्धिको नहीं पासक्ता॥ ८॥

महीपतौ शासति सागराम्बरां
दिने दिने चैधिषतैंग्लिशास्तदा।
नयैकमार्गप्रवणे धरापतौ
कथं नु सौख्यान्युपयान्ति न प्रजाः॥ ९॥

टी०—महीति। तदा तस्मिन्समये महीपतौराज्ञि सागराम्बरां पृथ्वीं शासतिसति "यस्य च भावेनेतिसप्तमी" ऐंग्लिशाजना दिनेदिने च ऐधिषत वृद्धिरे नु इतिवितर्के नयैकमार्गप्रवणे नीतिमार्गावस्थिते धरापतौ राज्ञि सति प्रजाः प्रकृतयः कथं केनप्रकारेण सौख्यानि नोपयान्ति इतिकाकुगर्भितार्थान्तरेण समर्थ्यते॥

भा०—उससमय राजाजौर्जके पृथ्वीशासन करनेपर ऐंग्लिशलोग प्रतिदिन वृद्धिको प्राप्तहुए क्योंकि नीतिमार्गगामीराजाके होनेपर प्रजा किसतरह सौख्योंको प्राप्त नहीं होती॥ ९॥

क्षितीश्वरः फ्रान्सनिवासिपूरुषैः
समं रणं सप्तसमास्तदाकृत।

1. France.

टी०—अथेति। अथानन्तरं ऐंग्लिशाः पुरुषास्तत्र महारणे युद्धे भृशमत्यर्थं विपक्षभावैः शत्रुभिः करणैः क्षततेजसो नष्टपराक्रमा अभवन् इति यो वालपोलको ऽभूतपूर्वं अज्ञातपूर्वं पराभवं निरादरं विलोक्य दृष्ट्वा साचिव्यपदं अमात्यपदवीं व्यरीरहदत्याक्षीत् "रह त्यागे धातोश्चुरादौ लुङि रूपम्" ॥

भा०—अनन्तर ऐंग्लिशलोग उस बड़ेसंग्राममें शत्रुओंसे नष्टबल होगये उस वालपोलकमन्त्रीने जो पहिले कभी न हुआ था उस पराभवको देखकर अपनामन्त्रिपद छोड़दिया ॥ ६ ॥

प्रिटेण्डरः[1] स्कौट[2]निवासिभिः समं
नियुध्य तत्राल्पवरूथिनीभटैः ।
सहायतां प्राप्य नृपापकारिणां
जयैकपात्रं स्वमसंस्त चेतसा ॥ ७ ॥

टी०—प्रिटेण्डरइति। प्रिटेण्डर एतन्नामकः पुरुषः स्कौटनिवासिभिः स्कौटदेशीयैः पुरुषैः समं सार्धं अल्पवरूथिनीभटैः परिमितसैनिकैः नियुध्य संग्रामं विधाय तत्र स्कौटदेशे नृपापकारिणां राजविद्वेषिणां सहायतां प्राप्य लब्ध्वा चेतसा स्वमात्मानं जयस्यैकपात्रं एकभाजनं असंस्त मेने ॥

भा०—प्रिटण्डरनामक कोईपुरुष स्कौटनिवासियोंके साथ परिमितसेनासे युद्धकर स्कौटमें राजविद्वेषियोंकी सहायताको पाकर चित्तसे अपनेको जयका पात्र समझनेलगा ॥ ७ ॥

अथेंग्लिशं सैव समेत्य गर्वतः
सहायहीनो निरगाद्यथागतम् ।
परोपकारैर्विहितात्मगौरवो
न सिद्धिमाप्नोत्यधिराजविग्रहे ॥ ८ ॥

1. Pretender. 2. Scotland.

निगुध्य हि फ्रान्समहीभुजा समं
जिगाय तं सैन्यबलावलेपिनम् ॥ १२ ॥

टी०—ततइति । ततोऽनन्तरं स प्रसिद्धः पृतनाशतानां अग्रणीर्मुख्यो हौक एतन्नामकः पुरुषः कुड्बरनस्थानं अनुप्रविश्य प्राप्य फ्रान्समहीभुजा फ्रान्सेश्वरेण समं सार्धं नियुध्य आयोधनं विधाय सैन्यबलेनावलेपिनं गर्वयुक्तं तं फ्रान्सेश्वरं जिगाय जितवान् ॥

भा०—अनन्तर उसप्रसिद्धसेनापति हौकनामकपुरुषने कुड्बरन्नामक स्थानको प्रवेशकरके फ्रान्सेश्वरके साथ युद्धकर सैन्यबलसे गर्वयुक्त उसफ्रान्सेश्वरको पराजित करदिया ॥ १२ ॥

अथैंग्लिशानामिहभारतेऽभवन्
पुरेषु द्वित्राः कटकाश्च केषुचित् ।
तथैव पौण्डेचरिदेशभूपति-
रभूत्तदा फ्रान्सपतिर्दुरासदः ॥ १३ ॥

टी०—अथेति । अथानन्तरं ऐंग्लिशानां जनानां इह भारतवर्षे केषुचित्पुरेषु द्वित्राः "बहुव्रीहौ संख्येयेडजिति डच्, संख्यय व्ययासन्नादूरेति समासः" कटका आवापकाः [ आवापकः पारिहार्य्यः कटको वलयोऽस्त्रियामित्यमरः ] अभवन् तदा तस्मिन्समये तथैव तादृशमेव दुरासदा दुष्प्राप्यः फ्रान्सपतिः पौण्डेचरिदेशस्य भूपती राजाऽभूत् ॥

भा०—अनन्तर ऐंग्लिशलोगोंके इसभारतवर्षमें किसी किसी नगरमें दो तीन किलेथे उसीतरह उससमय बलिष्ठ फ्रान्सेश्वरभी पौण्डेचरिदेशका भूपतिथा ॥ १३ ॥

इहत्यभूपा विषयं समं तदा
ह्यशासुरात्मेप्सितसम्पदञ्चिताः ।
अनेकचिन्तायतनीकृतात्मका
न पारतन्त्र्येण सुखं प्रयान्ति हि ॥ १४ ॥

1. France. 2. Pondicherry.

अधीरमाहत्य च विङ्गसैन्यपं
मिनोर्कदेशं जगृहे सतत्क्षणात् ॥ १० ॥

टी०—क्षितीति । तदा क्षितीश्वरोराजा फ्रान्सनिवासिपुरुषैः फ्रान्सदेशीयैर्जनैः समं सार्धं सप्तसमाः सप्तवर्षाणि रणं युद्धं अकृत व्यधात् स भूपो ऽधीरं धैर्यरहितं विङ्गनामकं सैन्यपं स्वसेनापतिं आहत्य मारयित्वा च तत्क्षण तु मिनोर्कदेशं एतन्नामकं देशं जगृहे स्वायत्तीचकार ॥

भा०—राजा द्वितीयजौर्जने फ्रान्सदेशीयलोगोंके साथ सातवर्षकी लड़ाईकी उसने उससमय रणभीरुविङ्गनामक अपने सेनापतिको मारकर उसीवक्त मिनोर्क नामक शत्रुदेशको अपने आयत्त करदिया ॥ १० ॥

अथोल्फकः सैन्यपतिर्नृपाज्ञया
कर्नाडदेशं प्रययौ जिगीषया ।
कुईबिकंस्थानविशेषमात्मसा-
च्चकार सैव ध्वजिनीसमावृतः ॥ ११ ॥

टी०—अथेति । अथानन्तरं सैन्यपतिश्चमूस्वामी उल्फक एतन्नामकः पुरुषोनृपाज्ञया भूपानुशासनेन जिगीषया जेतुमिच्छया कनाडदेशं प्रययौ जगाम ध्वजिनीसमावृतो वाहिनीयुक्तः स एवोल्फकः कुईबिकं स्थान विशेषं आत्मसाच्चकार स्वायत्तमकरोत् ॥

भा०—अनन्तर सैन्यपति उल्फकने राजाज्ञासे जीतनेकी इच्छासे कनाडदेशको प्रयाणकिया सेनायुक्त उसी उल्फकने कुईबिकस्थानको स्वहस्तगत करदिया ॥ ११ ॥

ततश्च हौर्कः पृतनाशताग्रणीः
कुईवरन्स्थानमनुप्रविश्य सः ।

---

1. Byng. 2. Minorca. 3. Wolfe. 4. Canada. 5. Quebec. 6. Hawke. 7. Quiberon.

टी०—अथेति । अथानन्तरं क्लाइवकादयः क्लाइवप्रमुखा ऐंग्लिशा अपि यतो यस्मात्कारणात् अयोग्यप्रपञ्चादित्यर्थः बलात्स्वविक्रमाद् आरकटनामस्थलविशेषं विजिग्यिरे अजयन् हीति निश्चयेन सुतेजसां सुपराक्रमशीलानां भूमिभृतां राज्ञां विक्रमाद् हृतश्रियो नष्टलक्ष्मीका अरिव्रजाः शमं शान्तिभावं यान्ति प्राप्नुवन्तीत्यर्थान्तरन्यासेन समर्थ्यते ॥

भा०—अनन्तर क्लाइवकादि ऐंग्लिशलोगोंनेभी उस उनके अयोग्य प्रपञ्चसे बड़ेबलकेसाथ आरकटनामस्थानको जीतलिया यह निश्चयहै कि पराक्रमी राजाओंके विक्रमसे हृतश्रीवालेशत्रुलोग शान्तिभावको प्राप्तहोते हैं ॥ १६ ॥

सिराजुदौलायवनः पुरैंग्लिशान्
बलैकगेहार्दनदुःखितान् व्यधात् ।
दयाविहीनो मदमूर्च्छितो जनः
स्वयं करोत्यात्मविनाशकारणम् ॥ १७ ॥

टी०—सिरेति । पुरा पूर्वं सिराजुदौलानामयवन ऐंग्लिशान् बलैकगेहे यत् अर्दनं पीडनं तेन दुःखितान् दुःखयुक्तान् व्यधादकरोत् दयाविहीनोऽनुकम्पारहितो मदमूर्च्छितः प्रमादपरवशो जनः स्वयं आत्मनो विनाशस्तस्य कारणं बीजं करोतीत्यर्थान्तरेण समर्थ्यते ॥

भा०—पहिले सिराजुदौलानामकयवनराजने ऐंग्लिशलोगोंको बलैकगेह (बलैकहौस) में बड़ादुःसह दुःखदिया क्योंकि दयारहित प्रमादयुक्तमनुष्य आपही अपने विनाशकारणको करताहै ॥ १७ ॥

बलोद्धतः क्लाइवकोऽरिसूदनो
नगेषुसप्तेन्दुमिते शके ततः ।
पलासिकंस्थानमवाप्य विद्विषो-
ऽचरीकरीत्यपकारमुच्चकैः ॥ १८ ॥

1. Siraj-ud-daula. 2. Black Hole. 3. Clive. 4. Plassey.

टी०—इहेति । तदा तस्मिन्समये इहत्यभूपा अत्रत्या राजान आत्मन ईप्सिता या सम्पत् समृद्धिस्तयाऽञ्चिताः पूजिताः सन्तः समं सर्वं विषयं देशं अशासुः पालयामासुः हीति निश्चयेन अनेकचिन्तानां आयतनी कृतो गृहवदाचरित आत्मायैस्तथाविधा जनाः पारतन्त्र्येण परायत्ततया सुखं न प्रयान्तीत्यर्थान्तरेण वैधर्म्येण समर्थ्यते ॥

भा०—उससमय यहां भारतदेशीयराजा स्वाभिलषित सम्पत्तियोंसे युक्तहोकर सारेदेशको पालन करतेथे क्योंकि यह प्रसिद्धहै कि अनेकचिन्ताग्रस्तलोग परतन्त्रभावसे सुखको नहीं प्राप्तहोते ॥ १४ ॥

बलाधिपः फ्रान्सपतेर्मदोत्कट–
इहत्यभूपाण्डुप्लेऽनुमन्त्रयन् ।
तदैंग्लिशान्भारतदेशतो भृशं
निराकरिष्णुर्बहुमन्त्रमातनोत् ॥ १५ ॥

टी०—बलेति । तदा तस्मिन्समये मदोत्कटो मदोद्धतः फ्रान्सपतेः फ्रान्सेश्वरस्य बलाधिपः सेनापतिः इहत्यभूपान् अनुमन्त्रयन् स्वमनोरथसिद्ध्यर्थं प्रतारयन्सन् भारतदेशतः ऐंग्लिशाङ्गजनान् भृशमत्यर्थं निराकरिष्णुर्निष्काशनेच्छुर्डुप्ले एतन्नामकः पुरुषो बहुमन्त्रं अतिवाक्यजालं आतनोत् विस्तारितवान् ॥

भा०—उससमय मदोन्मत्त फ्रान्सेश्वरका सेनापति डुप्लेनामकपुरुष यहां भारतीय सब राजाओंको बहकाकर भारतदेशसे ऐंग्लिशोंको निकालना चाहताहुआ बहुतवाक्यजालको फैलानेलगा ॥ १५ ॥

अथैंग्लिशाः क्लाइवकादयो यतो
विजिग्यिरेऽप्यार्कटं स्थलं बलात् ।
सुतेजसां भूमिभृतां हि विक्रमा-
दरिव्रजा यान्ति शमं हतश्रियः ॥ १६ ॥

1. Duplex. 2. Clive. 3. Arcot.

टी०—नभेति । ननिश्चितं निश्चयेन ततोऽनन्तरं तृतीयसंख्यो जौर्जसंज्ञकोनृपः नभर्तुशैलेन्दुमिते षष्ट्यधिकसप्तदशशतमिते क्रैस्तशके अनर्घरत्नैः अमूल्यमणिभिः [मूल्येपूजाविधावर्घरित्यमरः] "अर्ह पूजायां धातोर्ण्यङ्कादित्वाद्घत्वम्" परिभूषितं अन्तरंमध्यो यस्यैवंविधं स्वपितुर्वरासनं राज्यासनं अधितष्ठौ उपाविशत् "अधिशीङ्स्थासांकर्म्मेत्याधारस्यकर्म्मत्वम्" ॥

भा०—अनन्तर तृतीयसंख्यक जौर्जनामक राजा १७६० ईसवीमें अमूल्य रत्नोंसे सुशोभित निजपितृसिंहासनपर बैठा ॥ २० ॥

सपेरिसे[1] स्थानविशेषके ऽधिपः
समं व्यधात्फ्रांसे[2]नृपेण सौहृदम् ।
अमेरिका[3]स्थाननिवासिभिः सह
महीपतेर्जन्यमभूत्तदा भृशम् ॥ २१ ॥

टी०—सइति । सोऽधिपोजौर्जः पेरिसे स्थानविशेषके फ्रान्सनृपेण समं सौहृदं मैत्रीं व्यधादकरोत् तदा तस्मिन्नेवसमये अमेरिकास्थाने निवसन्तीति तैर्जनैः सह महीपतेर्जौर्जस्य जन्यं युद्धं भृशमत्यर्थं अभूदजायत ॥

भा०—राजाजौर्जने पेरिसस्थानमें फ्रान्सराजके साथ मैत्रीकी और उसी समय अमेरिकादेशीयलोगोंके साथ उसका बड़ा संग्रामहुआ ॥ २१ ॥

अथो महीपो निजमुद्रिकाङ्कितं
विधाय ततस्टैम्प[4]विशेषमात्मनः ।
अमेरिकावासिजनेभ्य एव हि
प्रदातुमैच्छद्बहुमूल्यकाङ्क्षया ॥ २२ ॥

टी०—अथोइति । अथोऽनन्तरं महीपोराजा निजमुद्रिकाङ्कितं स्वमुद्रचिह्नितं आत्मनस्ततस्टैम्पविशेषं विधाय बहुमूल्यस्य या काङ्क्षा

1. Paris. 2. France. 3. America. 4. Stamp Act.

टी०—बलेति । ततोदुःखदानानन्तरं अरिसूदनः शत्रुविनाशको बलोद्धतः क्लाइवकोनाम पुरुषो नगेपुसप्तेन्दुमिते सप्तपञ्चाशदधिकसप्तदशशतमिते क्रैष्टशके पलासिकस्थानं अवाप्योपगम्य विद्विषः शत्रोः सिराजुदौलानामकस्येत्यर्थः उच्चकैरतिशयेन प्रत्यपकारं विरुद्धाचरणं अचरीकरीत् अतिशयेनाकरोत् "कृधातोर्यङ्लुकि लङि रुग्रिकौच लुकीतिरीगागमेरूपम्" ॥

भा०—अनन्तर शत्रुओंकानाशक बलवान् क्लाइवकनामकपुरुषने १७५७ ईसवीमें पलासिकस्थानको प्राप्तहोकर सिरजुदौलानामकशत्रुका प्रत्यपकार (बदला) अतिशय करके किया ॥ १८ ॥

तदा प्रभृत्यैंग्लिशपूरुषाः क्रमा-
द्दिने दिने भारतवर्षमागताः ।
नयेन शौर्य्येण च शिक्षया नृणां
मनांसि जह्रुश्चपला इवस्त्रियः ॥ १९ ॥

टी०—तदेति । तदाप्रभृति तद्दिनादारभ्य ऐंग्लिशपूरुषाः क्रमात् क्रमशो दिनेदिने प्रतिदिनं भारतवर्षं आगताः प्राप्ताःसन्तः नयेन नीत्या शौर्य्येण शूरतया शिक्षया पाठनादिना च चपलाः स्त्रियइव नृणां मनुष्याणां मनांसि जह्रुः व्यमोहयन् । मने हरणे चतुरस्त्रीणामतीवकौशलमतस्तत्साधर्म्येणोपमालङ्कारः ॥

भा०—उसदिनसे लेकर क्रमसे प्रतिदिन भारतवर्षको प्राप्त ऐंग्लिशलोगोंने न्याय शूरता और शिक्षादिसे चपलस्त्रियोंकीनाई मनुष्योंके चित्तोंको हरलिया ॥ १९ ॥

नभर्तुशैलेन्दुमिते शके तत-
स्तृतीयसंख्यो ननु जौर्जसंज्ञकः[1] ।
अनर्घरत्नैः परिभूषितान्तरं
नृपोऽधितष्ठौ स्वपितुर्वरासनम् ॥ २० ॥

1. George III.

सिद्धिः" अधिकं करं राजग्राह्यभागं आशु शीघ्रं नियोज्यारोप्य पोतव-णिजश्चतेजनास्तान्सांयात्रिकान् अतर्दयदपीडयत् ॥

भा०—उससमय राजाजौर्जने तटस्थ अमेरिकास्थलको जानेवाले चायसे भरेहुए नौसमुदायपर इच्छासे अधिक करको जल्दीही लगाय कैवर्तजनोंको बड़ा दुःखितकिया ॥ २४ ॥

विरूपकार्य्यात्प्रतिषेधयन्नृपं
स कैथमो[1]ऽमात्यवरो महीभुजा ।
निवार्य्यतेस्माशु पदात्ततोऽपरं
स नौर्थकं[2] तत्पदवीं निनाय च ॥ २५ ॥

टी०—विरूपेति । महीभुजा राज्ञा, विरूपकार्य्याद्विरुद्धकर्मणो नृपं राजानं प्रतिषेधयन् वारयन् अमात्यवरः सचिवश्रेष्ठः समसिद्धः कैथम एतन्नामकः पुरुषः पदात् साचिव्यपदात् आशु शीघ्रं निवार्य्यतेस्म ततोऽनन्तरं सराजा नौर्थकमेतन्नामकं पुरुषं च तत्पदवीं कैथमस्थानं निनाय प्रापयामास "नीधातोर्द्विकर्म्मकत्वात् पदवीशब्दस्यापिकर्म्मत्वम्"

भा०—राजाने, विरुद्धकामसे अपनेको प्रतिषेध करनेवाले अमात्यवर कैथमनामकपुरुषको साचिव्यपदसे जल्दीही दूरकरदिया अनन्तर नौर्थकनामकपुरुषको उसने उसकैथमके स्थानपर नियतकिया ॥ २५ ॥

अमेरिका[3]देशनिवासिनस्तदा
स्वतन्त्रभावस्पृहया जिगीषवः ।
समं व्यधुर्जौर्ज[4]महीभुजाहवं
बलोत्कटः किं न करोति साहसम् ॥ २६ ॥

टी०—अमेरिकेति । तदा तस्मिन्समये स्वतन्त्रभावस्य या स्पृहा तया जिगीषवो जेतुमिच्छवो ऽमेरिकादेशनिवासिनो जना लोका जौर्जमहीभुजा

1. Chatham. 2. Lord North. 3. America 4. George.

इच्छा तया करणभूतया अमेरिकावासिनो ये जनास्तेभ्यस्तदर्थमित्यर्थः मद्दातुं स्वीकारयितुमितिभावः ऐच्छत् ॥

भा०—अनन्तर राजाजौर्जने स्वमुद्रासेअङ्कित अपने प्रसिद्धस्टैम्पपत्रको बहुमूल्यकी इच्छासे अमेरिकादेशीयलोगोंको देनेके लिये इच्छाकी ॥ २२ ॥

अमेरिकादेशनिवासिनोजना-
नृपाश्रवन्तं न तदा हि मेनिरे ।
ततो महीभृत्स निशम्य तद्वचो-
न्यवारयत्स्टैम्पकथां हतोद्यमः ॥ २३ ॥

टी०—अमेरिकेति । हीति निश्चयेन तदा तस्मिन्समये अमेरिकादेशे निवसन्तीतिजनास्तं नृपाश्रवं भूपनियमं न मेनिरे नामंसत ततोऽनन्तरं समहीभृद्राजा तद्वचस्तेषांवचनं निशम्य श्रुत्वा हतोद्यमो नष्टोद्योगः सन् स्टैम्पकथां न्यवारयद्दूरीचकार ॥

भा०—यह निश्चयहै कि उससमय अमेरिकादेशीयलोगोंने उसराजाज्ञाको न माना अनन्तर राजातृतीयजौर्जने उनके अस्वीकार वचनको सुनकर हतोद्यम होकर स्टैम्पकथाको दूरकरदिया ॥ २३ ॥

तरीव्रजे चायसुसम्भृते नृपो
ऽनुगन्तरि प्रान्तममेरिकास्थलम् ।
करं नियोज्याशु मनीषयाधिक-
मतर्दयत्पोतवणिग्जनाँस्तदा ॥ २४ ॥

टी०—तरीति । तदा तस्मिन्समये नृपोराजा प्रान्तं तटस्थं अमेरिकायाः स्थलं अनुगन्तरि यातरि एवंविधे चायसुसम्भृते चायपरिपूर्णे तरीव्रजे नौसमुदाये मनीषया इच्छया "शकन्ध्वादित्वात् मनीषाशब्दस्य-

1. Stamp Act. 2. Tea.

क्रमाज्जितपराक्रमात् न्युयोर्कनामस्थलं अधिराड्जौर्जभूपाद् जगृहुः अगृह्णन् सुसंहताः सम्मिलिताः पक्षयुताः स्वपक्षपातिनो मानवा मनुष्या बलाद् विपक्षभूमिकां शत्रुस्थलं निगृह्णन्ति स्वायत्तीकुर्वन्तीत्यर्थान्तरेण समर्थ्यते ॥

भा०—उससमय अमेरिकाके लोगोंने अपने पराक्रमसे न्युयोर्कस्थलको राजा जौर्जसे लेलिया क्योंकि सम्मिलित पक्षयुत मनुष्य अपने बलसे शत्रुकी भूमिको ग्रहण करलेते हैं ॥ २८ ॥

अथापि ते फ्रान्सनिवासिनां नृणां
सहायतां स्पेननिवासिनां तथा ।
अवाप्य तेनैव महीभुजा सम-
मयुत्सत प्रत्यपकारदीक्षिताः ॥ २९ ॥

टी०—अथेति । अथानन्तरं प्रत्यपकारे दीक्षिताः कृतसंकल्पास्तेऽमेरिकानिवासिनो जनाः फ्रान्सनिवासिनां नृणां मनुष्याणां सहायतां अवाप्य लब्ध्वा तेनैव महीभुजा राज्ञा समं साधं अयुत्सत युयुधिरे ॥

भा०—अनन्तर प्रत्यपकारमें तत्पर अमेरिकादेशीयलोगोंने फ्रान्स और स्पेनके लोगोंकी सहायताको पाकर उसीराजाजौर्जके साथ युद्धकिया ॥ २९ ॥

महीभसप्तेन्दुमिते शके तदा
महाहवे योर्कटनाह्वयस्थले ।
नृपध्वजिन्याप्तपराभवारिभि-
र्हतोद्यमा ताञ्छरणं समाययौ ॥ ३० ॥

टी०—महीति । तदा तस्मिन्समये महीभसप्तेन्दुमिते एकाशीत्यधिकसप्तदशशतमिते क्रैष्टशके योर्कटनाह्वयस्थले योर्कटननामके रणस्थले महाहवे संग्रामे अरिभिः शत्रुभिः आप्तपराभवा लब्धपराभवा नृपध्वजिनी

1. France. 2. Spain. 3. York-town.

जौर्जनृपेण समं सार्धं आहवं संग्रामं व्यधुः अकार्षुः बलोत्कटः पुरुषः किं साहसं न करोति अपितु सर्वमेव करोतीत्यर्थान्तरेण समर्थ्यते ॥

भा०—उससमय स्वतन्त्रताकी इच्छासे जीतनेकी इच्छावाले अमेरिकादेशीयलोगोंने राजाजौर्जके साथ संग्रामकिया क्योंकि बलयुक्तमनुष्य क्या साहस नहीं करता ॥ २६ ॥

वयं स्वतन्त्राः क मनोविहारिणः
क पारतन्त्र्यं बहुखेदकारणम् ।
अतो वयं नो त्वदधीनजीविन-
इति क्षितीशाय च ते व्यजिज्ञपन् ॥ २७ ॥

टी०—वयमिति । स्वतन्त्राः स्वाधीनाः अतएव मनोविहारिणः स्वेच्छाचारिणो वयं क तथा बहुखेदकारणं बहुदुःखनिदानं पारतन्त्र्यं पराधीनत्वं क अतः कारणात् वयं त्वदधीने जीवन्तीति तथाविधा नो भवामः इति ते अमेरिकादेशिनश्च क्षितीशाय भूमिभृते व्यजिज्ञपन् विज्ञापयामासुः । कचिद्यदतिवैधर्म्यान्नश्लेषो घटनामियादित्यादिलक्षणादत्र विषमालङ्कारः ॥

भा०—स्वाधीन अतएव यथेच्छकामकरनेवाले कहां तो हमलोग और कहां बड़ा दुःखकारण परतन्त्रभाव इसलिये हम तेरे आधीन जीवनवाले नहीं इसतरह अमेरिकावालोंने राजाजौर्जके लिये विज्ञापनकिया ॥ २७ ॥

अमेरिकावासिजनाः स्वविक्रमा-
त्स्थलं न्युंयोर्क[1] जगृहुस्तदाधिपात् ।
सुसंहताः पक्षयुताश्च मानवा-
बलान्निगृह्णन्ति विपक्षभूमिकाम् ॥ २८ ॥

टी०—अमेरिकेति । तदा तस्मिन्समये अमेरिकावासिजनाः स्ववि-

1. Newyork.

भूतेर्वायन्महत्त्वमनुत्तमम् । उदात्तंनाम तं प्राहुरलङ्कारं मनीषिणइति उदात्तालङ्कारोऽपि सम्भवति ॥

भा०—अनन्तर राजाजौर्जने मेलसे प्रसन्नहोकर युनाइटेडनामकदेशको बड़ीप्रतिष्ठायुक्त स्वतन्त्रतादेदी क्योंकि बड़ेपुरुषोंका अतिशयकरके उदारचित्त होताहै ॥ ३२ ॥

महीभुजः सैन्यपतिः ससैनिको
महाँश्चलौर्ड्रौड्न्यभिधानसंयुतः[1] ।
सुसंयतिफ्रान्सनिवासिमानवाँ-[2]
स्तथैवतान्स्पेनजनाञ्जिगाय सः[3] ॥ ३३ ॥

टी०—महीति । ससैनिको ध्वजिनीसहितो महीभुजो राज्ञो महान् सैन्यपतिः स प्रसिद्धः लौर्ड्रौड्नि अभिधानं तेन संयुतः कश्चित्पुरुषः सुसंयति संग्रामे फ्रान्सनिवासिमानवान् तथा एव तान् प्रसिद्धान् स्पेनजनाञ्जिगाय जितवान् ॥

भा०—सेनासहित राजाजौर्जका बड़ासेनापति प्रसिद्ध लौर्ड्रौड्निनामक पुरुषने संग्राममें फ्रान्सकेलोगों तथा उन स्पेननिवासियोंको जीतलिया ॥ ३३ ॥

अथापि फौक्साय[4] च सेलबर्नकं[5]
मुधा विकुप्यन्तममात्यकं पदात् ।
व्यपोह्य भूयो विलियम्पिटाह्वय-[6]
मतिष्ठिपत्तत्पदवीं क्षितीश्वरः ॥ ३४ ॥

टी०—अथेति । अथानन्तरमपि क्षितीश्वरो राजा फौक्साय जेम्सफौक्साय मुधा व्यर्थं विकुप्यन्तं भर्त्सयन्तमित्यर्थः सेलबर्नकंनाम अमा-

1. Lord Rodney. 2. France. 3. Spain. 4. Fox. 5. Shelburne. 6. William Pitt.

भूपसेना हतोद्यमा नष्टोद्योगासती तान् अरीन् शरणं रक्षितृभावं समायया प्राप ॥

भा०—उससमय १७८१ ईसवीमें यॉर्कटननामकक्षेत्रमें संग्राममें शत्रुओंसे प्राप्तनिरादर राजसेना हतोद्यम होकर उन अरियोंके शरण होगई ॥ ३० ॥

स पेरिसस्थानमवाप्य भूमिपो-
ऽनलेभसप्तेन्दुमिते शके पुनः ।
अमेरिकादेशनिवासिभिः सह
चकार सन्धिं प्रशमैककारणम् ॥ ३१ ॥

टी०—स इति । स भूमिपोराजा पेरिसस्थानं अवाप्योपगम्य अनलेभसप्तेन्दुमिते त्र्यशीत्यधिकसप्तदशशतमिते क्रैष्टशके पुनर्भूयः अमेरिकादेशनिवासिभिः सह प्रशमैककारणं शान्तिविधायकं सन्धिं मित्रभावं चकार कृतवान् ॥

भा०—राजाजॉर्जने पेरिसमेंजाकर १७८३ ईसवीमें पुनः अमेरिकादेशीय लोगोंके साथ शान्तिकारण मिलापको करलिया ॥ ३१ ॥

ततः क्षितीन्द्रोमुदितः सुसन्धिना
युनाइटेडाख्यसुमण्डलाय सः ।
ददौ स्वतन्त्रत्वममन्दगौरव-
मुदारचेता महतां हि निर्भरम् ॥ ३२ ॥

टी०—ततइति । ततोऽनन्तरं सुसन्धिना सम्मेलनेनमुदितः प्रसन्नतां प्राप्तः सक्षितीन्द्रोराजा युनाइटेडा आख्या यस्यैवंविधाय सुमण्डलाय सुविषयाय अमन्दगौरवं बहुमानयुक्तं स्वतन्त्रत्वं ददौ प्रायच्छत् हीतिनिश्चयेन महतां श्रेष्ठानां उदारचेतः सरलमानसं [ दक्षिणे सरलोदारावित्यमरः ] निर्भरमतिमात्रं भवतीत्यर्थान्तरेण समर्थ्यते । आशयस्य वि-

1. Paris. 2. America. 3. United States.

स्यं दासभावस्तस्य यो व्यवहारस्तस्यकारणं अतिदुःखं [ कारणातु या-
तनातीव्रवेदनाइत्यमरः ] व्यपोहितुं दूरीकर्तुं उद्यता उद्योगयुक्ता बभूवुः ॥

भा० —उससमय उस इंग्लिशदेशमें वील्वरकेसाथ पिटमन्त्री तथा और मनुष्यभी सम्पूर्णदासत्व व्यवहार दुःखको दूरकरनेके लिये उद्यतहुए ॥ ३६ ॥

ततश्च तैर्दीनजनोपकारिभि-
र्नगाभ्रनागेन्दुमिते शके तदा ।
सभासदां सम्मतनीतिवर्त्मना
विदासतां दासजनाः प्रपेदिरे ॥ ३७ ॥

टी०—तत इति । ततोऽनन्तरं दीनजनानां उपकारिभिस्तैः पिटादि-
भिः नगाभ्रनागेन्दुमिते सप्ताधिकाष्टादशशतमिते क्रैष्टशके दासजनाः स-
भासदां सभ्यानां सम्मतं यन्नीतिवर्त्म नयमार्गस्तेन विदासतां दासभा-
वराहित्यं प्रपेदिरे प्राप्नुवन् ॥

भा०—अनन्तर दुर्बललोगोंके उपकार करनेवाले पिटादिक सत्पुरुषोंसे १८०७ ईसवीमें दासलोग सभ्यलोगोंके सम्मत नयमार्गसे दासभावरहित होगये ॥ ३७ ॥

धराधरेऽस्मिन्कृषिकार्य्यमन्वहं
विशेषतां प्राप समन्ततोऽक्रमम् ।
तदैव हार्ग्रिवसो विचक्षणः
सुसूत्रनिर्माणविधिं व्यकाशयत् ॥ ३८ ॥

टी०—धरेति । अस्मिन्धराधरे राज्ञिसति "यस्य च भावेनेति सप्तमी"
अन्वहं अहनि अहनि कृषिकार्य्यं क्षेत्रकर्म अक्रमं क्रमरहितं यथास्या-
त्तथा समन्ततः सर्वतो विशेषतां आधिक्यं प्राप तदैव विचक्षणो विद्वान्
हार्ग्रिवसो नाम पुरुषः शोभनो यः सूत्रनिर्माणविधिस्तं व्यकाशयत्
प्रकटीचकार ॥

---

1. Hargreaves.

त्यक्तं मन्त्रिणं पदात्स्थानात् व्यपोह्य दूरीकृत्य भूयःपुनः तत्पदवीं तत्स्थानं विलियम्पिटाह्वयं विलियम्पिटनामकं पुरुषं अतिष्ठिपत् स्थापयाञ्चकार ॥

भा०—अनन्तर राजातृतीयजौर्जने चार्लसजेम्सफौक्सके लिये व्यर्थकुपित सेलवर्ननामक अमात्यको स्थानसे दूरकर पुनः उसके स्थानपर विलियम्पिटनामक पुरुषको रखदिया ॥ ३४ ॥

पिटोऽपि तैः फ्रान्[2]सनिवासिभिः समं
व्यधत्त मैत्रीमनपायिनीं तदा ।
सुबुद्धिनाऽमात्यवरेण मानवाः
प्रयान्ति सौख्यान्यकुतोभयान्यपि ॥ ३५ ॥

टी०—पिटइति । तदा तस्मिन्समये पिटोऽपि तैः फ्रान्सनिवासिभिः समं सार्धं अनपायिनीं चिरस्थायिनीमित्यर्थः । ईपदर्थेनञः प्रयोगः । मैत्रीं मित्रतां व्यधत्ताकरोत् मानवालोकाः सुबुद्धिना सुधिया अमात्यवरेण मन्त्रिश्रेष्ठेन न विद्यते कुतः कस्मादपि भयं येषु तथाविधान्यपि सौख्यानि प्रयान्ति प्राप्नुवन्तीत्यर्थान्तरेण समर्थ्यते ॥

भा०—उससमय पिटनामकमन्त्रीने उन फ्रान्सवासीलोगोंके साथ स्वचित्तसे चिरस्थायिनी मैत्रीको किया क्योंकि लोग बुद्धिमान् मन्त्रीसे भयरहित सौख्योंको प्राप्तहोते हैं ॥ ३५ ॥

पिटाह्वयो वील[3]वरेण संयुत-
स्तथैव चान्ये मनुजास्तदा भृशम् ।
अशेषदास्यव्यवहारकारणा
व्यपोहितुं तत्र बभूवुरुद्यताः ॥ ३६ ॥

टी०—पिटेति । तदा तस्मिन्समये तत्रैंग्लिशदेशे वीलवरेण संयुतः पिटाह्वयः पिटनामको मन्त्री तथैव अन्ये मनुजाश्च भृशमत्यर्थं अशेषं यदा-

1. William. Pitt. 2. France. 3. Wilberforce.

निश्चयेन साध्यं साधनीयं वस्तु सुधियां बुद्धिमतां अगोचरं अकरणीयं किमस्ति अपितु किमपि नास्तीत्यर्थान्तरेण समर्थ्यते ॥

भा०—अनन्तर विहितोद्योग क्रोम्पटननामकपुरुषने नूतन और एकही वक्त हजारसूत्रनिर्माणकरनेवाली कलाको प्रकाशितकिया क्योंकि बुद्धिविशिष्ट पुरुषोंको कोई भी काम असाध्य नहीं होसकता ॥ ४० ॥

अथापि वाट[1]प्रमुखाविचक्षणा-
स्तदाग्निधूमादिकलामवेदयन् ।
ययैंग्लिशाः शिल्पिकृतीर्यदृच्छया
व्यधत्सतोच्चैरपरैः सुदुर्लभाः ॥ ४१ ॥

टी०—अथेति । अथानन्तरमपि तदा तस्मिन्समये विचक्षणा विद्वांसो वाटप्रमुखा वाटप्रभृतयः पुरुषाः अग्निधूमादीनां या कला तां आदिपदाज्जलेन्धनपरिग्रहः अवेदयन् अबोधयन् ऐंग्लिशाजना यया कलया अपरैरन्यैर्जनैः सुदुर्लभा दुष्प्राप्याः शिल्पिकृतीर्यदृच्छया स्वेच्छया उच्चैरतिशयेन व्यधत्सताकृषत ॥

भा०—अनन्तर उससमय बुद्धिविशिष्ट वाटआदि पुरुषोंने अग्निधूमादिकी कलाको प्रकटकिया जिससे कि ऐंग्लिशलोगोंने अन्यलोगोंसे दुर्लभ शिल्पक्रियाओं को किया ॥ ४१ ॥

नृपो लुयी[2] फ्रान्सनिवासिमानवान्
दयाविहीनैः कुनयैः खलीकृतान् ।
करातिभारैश्च धनापहारणै-
र्विषादितान्तःकरणाँस्तदाऽकरोत् ॥ ४२ ॥

टी०—नृपइति । तदा तस्मिन्समये लुयीनृपः फ्रान्सेश्वरः फ्रान्सनिवासिमानवान् फ्रान्सजनान् दयाविहीनैर्दयारहितैः कुनयैः कुत्सित-

1. Watt. 2. Lewis.

भा०—इसराजाके राज्यशासनमें कृषिकर्म्म अच्छीतरहसे वृद्धिको प्राप्तहुआ और उसीसमय विद्वान् हारग्रिवसनामकपुरुषने सूत्रनिर्माणकलाको प्रकाशितकिया ॥ ३८ ॥

अथार्करीइट्मनुजोऽपि कृत्यवित्
समुन्नतिं सूत्रकृतिं ह्यनेनयीत् ।
अनेककार्य्याहितबुद्धिकौशला
नयन्ति सिद्धिं निखिलार्थिकां क्रियाम् ॥ ३९ ॥

टी०—अथेति । अथानन्तरं कृत्यवित् कार्य्यवेत्ता आर्करीइट्नामको मनुजोऽपि सूत्रकृतिं सूत्रनिर्माणकलां समुन्नतिं वृद्धिं अनेनयीत् अतिशयेन प्रापयत् हीति निश्चयेन अनेककार्य्येषु आहिता नियोजिता या बुद्धिर्धिषणा तस्याः कौशलं प्रावीण्यं येषां तथाविधा जना निखिला अर्था यया तां क्रियां कृतिं सिद्धिं सार्थकतां नयन्ति प्रापयन्तीत्यर्थान्तरेण समर्थ्यते ॥

भा०—अनन्तर कार्य्यकुशल आर्करीइट्पुरुषने सूत्रकलाको वृद्धिगतकिया क्योंकि अनेककामजाननेवालेपुरुष बहुत प्रयोजनसाधनेवाली क्रियाको सार्थक कर देते हैं ॥ ३९ ॥

अतः परं क्रोम्पटनः कृतोद्यमः
कलां च सौत्रीमभिजातसम्भवाम् ।
व्यकाशयत्सूत्रसहस्रकारिणीं
किमस्ति साध्यं सुधियां ह्यगोचरम् ॥ ४० ॥

टी०—अतइति । अतः परं अनन्तरं कृतोद्यमो विहितोद्योगः क्रोम्पटनोनाम पुरुषः अभिजातो नूतनः सम्भवोयस्यास्तथाविधां सूत्रसहस्राणि करोतीति तां सौत्रीं सूत्रसम्बन्धिनींकलां व्यकाशयत् प्रकटीचकार हीति-

1. Arcwright. 2. Crompton.

भा०— उससमय उन फ्रान्सवासीलोगोंने स्पेनवालोंकी सहायताको पाकर पिटनामकनन्दनेशके मन्त्रीसे संग्रामसे प्रतिषेधयुक्त कियेजाते ऐंग्लिशलोगोंको स्थलसंग्राममें जीतलिया ॥ ४४ ॥

ततश्च ते फ्रान्सनिवासिपूरुषा
जलाहवे ऽनीकपलौर्डहौविना ।
कृतारिसंघातविनाशहेतुना
तदा व्यशीर्य्यन्त निवारितोद्यमाः ॥ ४५ ॥

टी०—ततइति । ततोऽनन्तरं तदा तस्मिन्समये कृतोविहितोऽरीणां संघातस्य समुदायस्य योविनाशस्तस्यहेतुना कारणभूतेन अनीकपश्चासौ लौर्डहौवी तेन वर्त्रा निवारितोद्यमाः प्रतिरोधितोद्योगास्तेपूर्वोक्ताः फ्रान्सनिवासिनः पूरुषा जलाहवे जलमध्यसंग्रामे व्यशीर्य्यन्तानश्यन्त "कर्म्मणि लङ्" ॥

भा०— अनन्तर उससमय जलसंग्राममें नष्टोद्योग वे फ्रान्सनिवासीलोग अरिसमुदायको नाशकरनेवाले सेनापति लौर्डहौवीसे पराजित होगये ॥ ४५ ॥

अथापि जर्भिसूध्वजिनीपतिर्महान्
प्रतापशाली भिनसण्टकस्थले ।
जिगाय तान्स्पेर्ननिवासिनो रिपून्
किमस्ति तेजस्विनृणां हि दुष्करम् ॥ ४६ ॥

टी०—अथेति । अथानन्तरं प्रतापशाली अतितेजस्वी महान् ध्वजिनीपतिः सेनापतिर्जर्भिस् एतन्नामकः पुरुषः भिनसण्टकस्थले भिनसण्टकाख्यस्थानविशेषे स्पेननिवासिनस्तान् रिपून् शत्रूञ्जिगाय जितवान् हीति निश्चयेन तेजस्विनृणां तेजोविशिष्टानां पुरुषाणां दुष्करं दुःसाध्यं किमस्ति अपितु किमपि नास्तीत्यर्थान्तरेण समर्थ्यते ॥

1. Lord Howe. 2. Admiral Jervis. 3. St. Vincent. 4. Spain.

नीतिभिः खलीकृतान् दुःखीकृतान् करातिभारैर्बलिभारैर्धनापहारणै-र्द्रव्यग्रहणैश्च विषादितान्तःकरणान् सखेदान्तःकरणान् अकरोत् व्यदधात् ॥

भा०—उससमय राजालुर्यने फ्रान्सनिवासियोंको दयारहित नीतियोंसे अधिक कर लगानेसे और हठपूर्वक धनलेनेसे बड़ादुःखित करदिया ॥ ४२ ॥

ततश्च ते फ्रान्सनिवासिनोऽनया-
द्विपक्षभावेन निहत्य भूमिपम् ।
प्रबोधयद्भ्यः सुनयात्तदैव तान्
मुधैंग्लिशेभ्यः सहसैव चुक्रुधुः ॥ ४३ ॥

टी०—ततइति । ततोऽनन्तरं ते फ्रान्सजना अनयात् अनीतेर्विपक्ष-भावेन शत्रुतया भूमिपं लुयिनं निहत्य तदा तस्मिन्समये सुनयात्तान् फ्रा-न्सजनान् प्रबोधयद्भ्य ऐंग्लिशेभ्यः सहसाएव शीघ्रमेव मुधा व्यर्थं चुक्रुधुः कुपिता बभूवुः "क्रुधद्रुहेर्ष्येति सम्प्रदानत्वम्" ॥

भा०—अनन्तर फ्रान्सनिवासीलोगोंने अपनेराजाकी अनीतिसे शत्रुताकेका-रण राजाको मारकर उसीसमय उन्होंने अपनेको सुनीतिसे समझातेहुए ऐंग्लिश-लोगोंकेलिये क्रोधकिया ॥ ४३ ॥

तदैव ते फ्रान्सजनाः सहायता-
मवाप्य हि स्पेननिवासिनां नृणाम् ।
निवार्यमाणांश्च पिटेनमन्त्रिणा
स्थलाहवे तान्प्रसभं विजिग्यिरे ॥ ४४ ॥

टी०—तदेति । तदैव ते फ्रान्सजनाः फ्रान्सवासिनोलोकाः स्पेन-निवासिनां नृणां सहायतां साहाय्यं अवाप्य लब्ध्वा मन्त्रिणाऽमात्येन पिटेन निवार्यमाणान् संग्रामादिति शेषः तानैंग्लिशान् स्थलाहवे स्थल-संग्रामे प्रसभं बलात्कारेण विजिग्यिरे व्यजेषत ॥

1. France. 2. Spain. 3. Pitt.

वितरणेन सान्त्वनेनानुनयेन च यथाकथञ्चित् येनकेनापिप्रकारेण शमयाम्बभूव शान्तियुक्तान्यकरोत् ॥

भा०—यह प्रसिद्धहै कि उससमय बड़ादयालु राजा तृतीयजौर्जने पुनः आरलैण्डीयलेगोंके रोषयुक्त चित्तोंको नीतिसे दानसे और सान्त्वनसे बड़ेबुद्धिकौशल के साथ शान्तकिये ॥ ४८ ॥

पुनश्च ते फ्रान्[1]सनिवासिवैरिणो
विवृद्धकोपानलवर्चिषो भृशम् ।
समं तदा नन्दनभूभुजारयात्
प्रतस्थिरे योद्धुमतिप्रमाथिना ॥ ४९ ॥

टी०—पुनरिति । तदा तस्मिन्समये पुनर्भूयः विवृद्धो वृद्धिप्राप्तो यः कोपानलः क्रोधवह्निस्तस्यवर्चिर्ज्वालायेषां एवंविधास्ते फ्रान्सनिवासिनो वैरिणः शत्रवो रयाद्रभसात् अतिप्रमाथिना अतिविमर्दकेन नन्दनभूभुजा नन्दनाधिपतिना समं सार्धं योद्धुं प्रतस्थिरे प्रस्थानयुक्ताबभूवुः "समवप्रविभ्यःस्थइत्यात्मनेपदं स्यात्" ॥

भा०—उससमय फिर बड़ेक्रोधाग्निवाले उन फ्रान्सनिवासीलोगोंने अरिमर्दनकरनेवाले उस नन्दनाधिपतिके साथ बड़ेवेगसे संग्रामकरनेके लिये प्रस्थान किया ॥ ४९ ॥

ततोऽवर[3]क्रोम्बिरमन्ददोर्बलः
पताकिनीशः प्रतितर्जितोऽरिभिः ।
प्रतीपगानैलिकजेण्ड्रियास्थले
व्यजेष्ट हि फ्रान्[5]सनिवासिनो रिपून् ॥ ५० ॥

टी०—ततइति । हीति निश्चयेन ततोऽनन्तरं अमन्ददोर्बलो बाहुबलोपशोभितोऽरिभिः शत्रुभिः प्रतितर्जितोऽनुक्रोधितः पताकिनीशः सेना-

1. France. 2. London. 3. Abercrombie. 4. Alaxandria. 5. France.

भा०—अनन्तर प्रतापी बड़ासेनापति जर्भिस्नामकपुरुपने भिनसण्टकस्थलमें उन स्पेनदेशीयरिपुओंको जीत लिया यह बात प्रसिद्धहै कि तेजस्वीपुरुपोंको क्या दुःसाध्यहै ॥ ४६ ॥

गजाङ्कसप्तेन्दुमिते शके ऽखिला-
स्तदारलैंण्डीयजनाश्च नान्दनैः ।
कठोरनीत्या जनितक्रुधो ऽन्वहं
नियोद्धुकामाः सह तैरबोभवुः ॥ ४७ ॥

टी०—गजेति । तदा तस्मिन्समये गजाङ्कसप्तेन्दुमिते अष्टानवत्यधिकाष्टादशशतमिते क्रैष्टशके नान्दनैर्नन्दनवासिभिर्जनैरन्वहं प्रतिदिनं कठोरनीत्या क्रूरन्यायेन जनितक्रुधः समुत्पादितकोपा अखिलाः समग्राः आरलैंण्डीयजना आरलैंण्डनिवासिनः पुरुषास्तैरैंग्लिशैः सह नियोद्धुकामा युद्धाभिलाषिणो ऽबोभवुः अतिशयेनाभवन् ॥

भा०—उससमय १७९८ ईसवीमें समग्र आरलैण्डकेलोग प्रतिदिन ऐंग्लिशों के कठोरन्यायसे क्रोधयुक्तहोकर उन ऐंग्लिशलोगोंके साथ युद्धकरनेको उद्यत हुए ॥ ४७ ॥

यथाकथञ्चिद्धरणीधरः पुनः
सरोषचेतांसि तदारवासिनाम् ।
नयेन दानेन हि सान्त्वनेन च
दयार्द्रभावः शमयाम्बभूव सः ॥ ४८ ॥

टी०—यथेति । हीति निश्चयेन तदा तस्मिन्समये दयार्द्रभावः कृपार्द्रमनाः सधरणीधरस्तृतीयसंख्यको जॉर्जः पुनर्भूय आरवासिनां आरलैंण्डीयानां सरोषचेतांसि अमर्षान्वितमनांसि नयेन नीत्या दानेन

1. The Irish. 2. The Irish.

प्राप्य च विषादितैः सखेदैः फ्रान्सनिवासिभिः समं सार्धं अतिप्रसान्त्वने-र्बहुनयैः सन्धानं मैत्रीं व्यधत्ताकरोत् ॥

भा०--अनन्तर बृहदाज्ञाविधायक दयायुक्त तृतीयजौर्जने एमिन्सनामस्थलको प्राप्तहोकर बड़ेखिन्न फ्रान्सवासीलोगोंके साथ बहुत सान्त्वनादिसे मैत्रीको करदिया ॥ ५२ ॥

त्वदर्थमन्यं विषयं च माल्टकं[1]
प्रदद्म इत्याश्रवमर्थसिद्धये ।
धरापतिः फ्रान्समहीभुजा समं
चकार सन्धावुपशान्तिकारणम् ॥ ५३ ॥

टी०—त्वदर्थमिति। धरापतिर्नन्दनेश्वरः अर्थसिद्धये स्वप्रयोजनसिद्ध्यर्थं फ्रान्समहीभुजा फ्रान्सेश्वरेण समं सार्धं सन्धौ मैत्र्यां उपशान्तिकारणं शान्तिहेतुं त्वदर्थं त्वत्कृते अन्यमपरं माल्टकंनाम विषयं देशं प्रदद्मः प्रयच्छाम इति आश्रवं नियमं चकार कृतवान् ॥

भा०--राजाजौर्जने अपनेप्रयोजनसिद्ध्यर्थ फ्रान्सेश्वरकेसाथ मैत्रीमें शान्तिकारण " तुमको दूसरे एक माल्टानामकदेशविशेषको देवेंगे " इसतरहके नियमको किया ॥ ५३ ॥

निपोलियन्[2]फ्रान्समहीपतिस्तदा-
ऽसमीक्ष्यकारीटैलि[3]भागमञ्जसा ।
उपाददे नन्दन[4]भूपतेः स्वयं
विवादबीजं प्रथमं बभूव तत् ॥ ५४ ॥

टी०—निपोलियन्निति । तदा तस्मिन्समये असमीक्ष्यकारी अविचारितकार्यविधायको निपोलियन् एतन्नामको नूतनः फ्रान्समहीपतिः अञ्जसा शीघ्रं स्वयं नन्दनभूपतेर्नन्दनेश्वरस्य ईटालिभागं ईटालिदेशस्यैक-

1. Malta. 2. Napolean Bonaparte. 3. Italy. 4. London.

पतिरवरक्रोम्बिरेतन्नामकः पुरुषः प्रतीपगान् विरुद्धाचरणान् फ्रान्सनिवासिनो रिपून् ऐलिकजेण्ड्रियास्थले व्यजेष्ट जितवान् ॥

भा०—यह बात प्रसिद्ध है कि अनन्तर बाहुबलशाली अरियोंसे तर्जित सेनापति अवरक्रोम्बिनामकपुरुषने विरुद्धाचारी फ्रान्सनिवासी शत्रुओंको ऐलिकजेण्ड्रियास्थलमें जीतलिया ॥ ५० ॥

हतश्रियः फ्रान्सजनाश्च योरुपं-
मुपाद्रवञ्जीवितसंशयास्तदा ।
बलोत्कटैः शत्रुभिरात्तसुश्रियां
प्रतीपगानां शरणं पलायनम् ॥ ५१ ॥

टी०—हतेति । तदा तस्मिन्समये हतश्रियो नष्टलक्ष्मीकाः अतएव जीविते संशयो येषां तथाविधाः फ्रान्सजनाः फ्रान्सवासिनो रिपवो योरुपं नामदेशं उपाद्रवन् पलायाञ्चक्रिरे बलोत्कटैर्बलोन्मत्तैः शत्रुभिः आत्तसुश्रियां गृहीतविजयशोभानां प्रतीपगानां विरोधिनां पलायनं युद्धस्थानाद्दूरीभवनं शरणं रक्षितृभवतीत्यर्थान्तरेण समर्थ्यते ॥

भा०—उससमय नष्टशोभावाले अतएव जीवनमेंभी शङ्कायुक्त वे फ्रान्सवासी लोग योरुदेशको पलायनयुक्त होगये क्योंकि बलोन्मत्त शत्रुओंसे हारेहुए विरोधियोंका पलायनही एक रक्षोपाय है ॥ ५१ ॥

अथानुकम्पार्द्रमना महीपति-
र्विपादितैः फ्रान्सनिवासिभिः समम् ।
समेत्य चैमिन्ससमन्दशासनो
व्यधत्त सन्धानमतिप्रसान्त्वनैः ॥ ५२ ॥

टी०—अथेति । अथानन्तरं अमन्दशासनः प्रबलाज्ञः तथा अनुकम्पया आर्द्रं सरसं मनोयस्यैवंविधो महीपतिः एमिन्संनामस्थलं समेत्य

1. Europe. 2. Amiens.

भा०—अनन्तर उस फ्रान्सेश्वरने प्रमाद कोप और हठसे अपने देशमें दश सहस्र पथिक ऐंग्लिशोंको पकड़कर बन्धनालयमें रखदिया ॥ ५६ ॥

निपोलियंस्स्पेननिवासिनां नृणां
सहायतां प्राप्य परापकारिणीम् ।
अनेकनौसङ्घसमावृतोऽधिप-
स्तदैंग्लिशानाक्रमितुं प्रचक्रमे ॥ ५७ ॥

टी०—निपोलियन्निति । तदा तस्मिन्समये निपोलियन्नधिपः फ्रान्सेश्वरः स्पेननिवासिनां स्पेनदेशीयानां नृणां परापकारिणीं शत्रुहानिप्रदां सहायतां साहाय्यं प्राप्य लब्ध्वा अनेका या नावस्तासां संघेन समावृतो युक्तः सन् ऐंग्लिशान् आक्रमितुं जेतुमित्यर्थः प्रचक्रमे प्रस्थितो बभूव ॥

भा०—उससमय राजानिपोलियन्ने स्पेननिवासियोंकी शत्रुतादिनी सहायताको पाकर अनेकनौसमुदायसे युक्तहोकर ऐंग्लिशलोगोंको आक्रमण करनेके लिये तैयार हुआ ॥ ५७ ॥

पुरा पिटाख्यः सचिवो निजं पदं
महीखनागेन्दुमिते शके जहौ ।
युगाभ्रनागेन्दुमिते शके पुनः
स एव पश्चात्सचिवोऽभवत्सुधीः ॥ ५८ ॥

टी०—पुरेति । पुरा पूर्वं पिटाख्यः पिटनामकः सचिवो मन्त्री महीखनागेन्दुमिते एकाधिकाष्टादशशततमे क्रैष्टशके निजंपदं साचिव्यपदं जहौ तत्याज पुनर्भूयो युगाभ्रनागेन्दुमिते चतुरधिकाष्टादशशतमिते शके सुधीर्बुद्धिमान् स एव पिटः पश्चात्सचिवो मन्त्री अभवदजायत ॥

भा०—पहिले १८०१ ईसवीमें पिटनामकमन्त्रीने अपने साचिव्यपदको

1. Napolean Bonaparte. 2. Spain. 3. Pitt.

देशं उपाददे गृहीतवान् तत्साहसं प्रथमंमुख्यं विवादबीजं विशेषकलहकारणं बभूव ॥

भा०—उससमय अविचारितकार्य्य करनेवाले निपोलियन्नामक फ्रान्सेश्वरने आपही जल्दीसे इंग्लिशदेशाधिपतिका ईटलिदेशका एक हिस्सा ग्रहणकरलिया वही साहस कलहका पहिलाकारण हुआ ॥ ५४ ॥

अथैंग्लिशाः फ्रान्समहीपतेर्नयं
विलोक्य माल्टाह्वयदेशमात्मनः ।
असूययास्मै न ददुर्यदैव ते
तदैव योद्धुं चकमे स तैः समम् ॥ ५५ ॥

टी०—अथेति । अथानन्तरं ऐंग्लिशाजनाः फ्रान्समहीपतेर्नयं नीतिं विलोक्य दृष्ट्वा आत्मनः स्वस्य माल्टाह्वयदेशं अस्मै फ्रान्सेश्वराय असूयया ईर्ष्यया यदा न ददुर्न प्रायच्छन् स फ्रान्सपतिस्तदाएव तैरैंग्लिशैः समं सार्धं योद्धुं संग्रामयितुं चकमे उद्युक्तोबभूव ॥

भा०—अनन्तर ऐंग्लिशलोगोंने फ्रान्सेश्वरका न्यायदेखकर अपने माल्टानामकदेशको ईर्षासे जिसवक्त इस फ्रान्सेश्वरके लिये न दिया उसीवक्त वह फ्रान्सेश्वर ऐंग्लिशोंके साथ युद्धकरनेको उद्यतहुआ ॥ ५५ ॥

ततोऽप्यसौ फ्रान्सधरापतिः क्रुधा
तदैंग्लिशान्पान्थजनान्स्वमण्डले ।
बलात्सहस्राणि दश प्रमादतो
निगृह्य तान्बन्दिगृहं न्यवेशयत् ॥ ५६ ॥

टी०—ततइति । ततोऽनन्तरमपि असौ फ्रान्सधरापतिस्तदा तस्मिन्नवसरे प्रमादतोऽनवधानतया क्रुधा कोपेन बलाद् हठात् स्वमण्डले निजविषये दशसहस्राणि पान्थजनान् पथिकान् ऐंग्लिशान् पुरुषान् निगृह्यावलम्ब्य तान् सर्वान् बन्दिगृहं कारागारं न्यवेशयद् व्यरेचयत् ॥

1. Malta.

नामक मन्त्रीके मरजानेपर राजा जौर्जकी आज्ञासे साचिव्यपदवीको प्राप्तहुए ॥ ६० ॥

निपोलियन्नन्दनराजसैनिकैः
समं विधातुं पुनराजिमोजसा ।
स्वयंडचेभ्यस्तरणीसमूहकैः
सहायतां सिद्धिकरीमयाचत ॥ ६१ ॥

टी०—निपोलियन्निति । पुनर्भूयो निपोलियन्फ्रान्सेश्वरो नन्दनराजस्य सैनिकैः समं सार्धं ओजसा बलेन आजिं संग्रामं विधातुं कर्तुं स्वयंडचेभ्यो डचजातिसंज्ञेभ्यो जनेभ्यस्तरणीसमूहकैर्नौनिवहैः सिद्धिकरीं अर्थविधायिनीं सहायतां साहाय्यं अयाचत प्रार्थयत ॥

भा०—निपोलियन्ने पुनः नन्दनेशके सैनिकोंके साथ बड़े बलसे संग्रामकरनेके लिये आपही डचलोगोंसे जहाजोंके समूहोंकी सहायताको मांगा ॥ ६१ ॥

तदैंग्लिशैः कोपिनहेगनंस्थलं
हृतं समालोक्य च नौविभञ्जनम् ।
निपोलियन्फ्रान्समहीपतिः पुन-
र्निराशतामाप जये हतोद्यमः ॥ ६२ ॥

टी०—तदेति । तदा तस्मिन्समये फ्रान्समहीपतिर्निपोलियन् ऐंग्लिशैर्जनैः कोपिनहेगनं नामस्थलं हृतं अपाकृतं नौविभञ्जनं तरीविखण्डनं च समालोक्य दृष्ट्वा पुनर्भूयो जये विजये हतोद्यमो नष्टोद्योगः सन् निराशतामाशाराहित्यं आप प्रापत् ॥

भा०—उससमय फ्रान्सेश्वर निपोलियन्ने ऐंग्लिशलोगोंसे कोपिनहेगनस्थलको हराहुआ तथा अपने सब जहाजोंको टूटेहुए देख पुनः विजयमें हतोद्यमहोकर निराशभावको प्राप्त होगया ॥ ६२ ॥

गजाभ्रनागेन्दुमिते शके पुन-
र्निपोलियन्फ्रान्सपतिर्हि लिस्बनम् ।

1. Dutch. 2. Copenhagen. 3. Napolean. 4. Lisbon.

त्यागकरदिया था पुनः १८०४ ईसवीमें पीछे वही बुद्धिमान् पिट मन्त्री होगया ॥ ५८ ॥

निपोलियन्भूमिभुजस्तरीव्रजं
स नन्दनेशस्य पताकिनीपतिः ।
बभञ्ज सैन्येन हि नेल्सनाह्वयः
सुतत्त्वबोधो मृगतृष्णिकामिव ॥ ५६ ॥

टी०—निपोलियन्निति । हीति निश्चयेन नन्दनेशस्य पताकिनीपतिः सेनापतिः स प्रसिद्धो नेल्सनाह्वयो नेल्सनाख्यो निपोलियन्भूमिभुज- एतन्नामकस्य राज्ञस्तरीव्रजं नौसमुदायं सुतत्त्वबोधस्तत्त्वज्ञानं मृगतृष्णि- कां मृगाणां तृष्णा अस्ति अस्याम् "अर्श आदित्वान्मत्वर्थीयाच्" सा इवइति मृगतृष्णिका मोहेच्छा, तामिव "इवेमतिकृतौकन्" ममत्व मिवेत्यर्थः सैन्येन बभञ्ज नाशयाञ्चकार । अत्रोपमालङ्कारः ॥

भा०—नन्दनेशके सेनापति नेल्सननामकपुरुषने निपोलियन्नामक फ्रान्सेश्वर के नौसमुदायको तत्त्वबोध मृगतृष्णाको जैसा सैनिकोंसे तुड़ादिया ॥ ५९ ॥

अमात्यवर्य्येऽपि पिटे परासुतां
गतेऽथ केचिन्मनुजा विचक्षणाः ।
सुमन्त्रितां प्रापुरधीश्वराज्ञया
कृतारिविध्वंसनिदाननिश्चयाः ॥ ६० ॥

टी०—अमात्येति । अथानन्तरं कृतोऽरीणां विध्वंसनिदानस्य विनाशादिकारणस्य निश्चयो यैः एवंविधा विचक्षणा विद्वांसः केचिन्मनुजा- अमात्यवर्य्ये मन्त्रिश्रेष्ठे पिटे ऽपि परासुतां परेतभावं गते सति "यस्य च भावेनेति सप्तमी" अधीश्वराज्ञया सुमन्त्रितां प्रापुर्जग्मुः ॥

भा०—अनन्तर शत्रुओं के जीतनेमें कृतनिश्चय ऐसे कोई विद्वान्लोग पिट

1. Nelson.

नियुध्य मौरो[1]ऽपि हतोद्यमस्तदा
यथागतं फ्रान्सदिशं विनिर्ययौ ॥ ६५ ॥

टी०—अतइति । अतः परं अनन्तरं वेल्सलिना एतदाख्येन केनापि वीरेण फ्रान्समहीपतेः फ्रान्सेश्वरस्य चमूः सेना भिमीरके स्थानविशेषे व्यजीयत परास्यत तदा तस्मिन्समये मौरोऽपि एतदाख्योमनुजोऽपि नियुध्य शत्रुभिरिति शेषः हतोद्यमो नष्टोत्साहःसन् यथागतं यथाप्राप्तं यथास्यात्तथा फ्रान्सदिशं फ्रान्संप्रतीत्यर्थः विनिर्ययौ पलायाञ्चक्रे ॥

भा०—अनन्तर वेल्सलीनामकवीर सेनापतिसे फ्रान्सेश्वरकी सेना भिमीरकस्थानमें जीतीगई उसीसमय फ्रान्सेश्वरका मौरनामक सेनापति ऐंग्लिशोंसे युद्धकर हतोत्साह होकर जैसाआया उसीतरह फ्रान्सको पलायन होगया ॥ ६५ ॥

अथापि ते फ्रान्सनिवासिनोऽरिभिः
समेत्य कोरुन्न[2]भुवां हतश्रियः ।
बभूवुरन्योऽपि स[3]मौरसंज्ञको
व्यहन्यत स्पैनजनैरणाध्वरे ॥ ६६ ॥

टी०—अथेति । अथानन्तरमपि फ्रान्सनिवासिनस्तेलोकाः कोरुन्नभुवां कोरुन्ननामकेस्थले "ङेराम्नद्याम्नीभ्य इतिङेराम्" समेत्य प्राप्य अरिभिः शत्रुभिः हतश्रियो नष्टलक्ष्मीका बभूवुः । अन्योऽपि मौरसंज्ञकः पुरुषः स्पेनेभवाः स्पैनास्तेचजनाः "तत्रभवः इत्यण्" तैर्जनै रणाध्वरे रणयज्ञे व्यहन्यताहन्यत ॥

भा०—अनन्तर फ्रान्सनिवासीलोग कोरुन्ननामकस्थलमें जाकर शत्रुओंसे परास्तहोगये और मौरनामक दूसरा सेनापतिभी स्पेनकेलोगोंसे संग्राममें मारागया ॥ ६६ ॥

---

1. Sir J. Moore. 2. Corunna. 3. Moore.

प्रगृह्य च स्पेननृपासनं तथा

ददौ तदात्मानुजजोजेफाय तत् ॥ ६३ ॥

टी०—गजेति । हीति निश्चयेन फ्रान्सपतिर्निपोलियन् पुनर्भूयो गजाभ्रनागेन्दुमिते अष्टाधिकाष्टादशशतमिते क्रैष्टशके लिस्बनंनामस्थानविशेषं तथा तादृशमेव स्पेननृपस्य चार्लसस्यासनं राज्यासनं च "चकारः समुच्चयार्थकः" प्रगृह्य स्वायत्तीकृत्य तदा आत्मानुजश्चासौ जोजफस्तस्मै तद्राज्यपीठं ददौ प्रायच्छत् ॥

भा०—यह बात प्रसिद्ध है कि फ्रान्सेश्वरनिपोलियन्ने पुनः १८०८ ईसवीमें लिस्बननामकस्थानविशेषको तथा स्पेनेश्वरके राज्यासनको अपने आयत्तकर उस समय उसस्पेनराज्यासनको अपने छोटेभाई जोजफकेलिये देदिया ॥ ६३ ॥

अथेंग्लिशाधीशममन्दविक्रमं

सहायतां स्पेननृपो ह्ययाचत ।

तदैव तत्रेंग्लिशभूपतिः क्षणा-

दयुङ्क्त केनिङ्गमनीकिनीपतिम् ॥ ६४ ॥

टी०—अथेति । अथानन्तरं हीति निश्चयेन स्पेननृपः स्पेनदेशाधिपो ऽमन्दविक्रमं प्रबलपराक्रमं इंग्लिशाधीशं सहायतां साहाय्यं अयाचत अर्थयाश्चक्रे "याच्धातोर्द्विकर्म्मकत्वात्कर्म्मद्वयम्" तदाएव तस्मिन्समयएव इंग्लिशभूपतिस्तत्र स्पेनदेशे अनीकिनीपतिं सेनापतिं केनिङ्गं एतन्नामकं पुरुषं क्षणात् अयुङ्क्त नियोजितवान् ॥

भा०—अनन्तर स्पेनदेशाधिपतिने इंग्लिशदेशाधिपतिसे सहायतामांगी उसीसमय वहां इंग्लिशेश्वरने केनिङ्गनामक सेनापतिको भेजा ॥ ६४ ॥

अतः परं फ्रान्समहीपतेश्चमू-

र्विमीरके वेल्सलिना व्यजीयत ।

1. Joseph. 2. Canning. 3. Vimiera. 4. Wellesley.

प्रदह्यमानं किल जातवेदसा
पुरं समालोक्य च मौस्क[1]संज्ञकम् ।
तदैव ते फ्रान्सनिवासिनोऽञ्जसा
हतोद्यमाः स्वं विषयं विनिर्ययुः ॥ ६९ ॥

टी०—प्रदह्येति । किलेति निश्चयेन तदैव फ्रान्सनिवासिनस्तेलोका-जातवेदसा वह्निना प्रदह्यमानं भस्मीभवत् मौस्कसंज्ञकं पुरं नगरं च समालोक्य दृष्ट्वा अतएव हतोद्यमा नष्टोद्योगाः सन्तः अञ्जसा शीघ्रं [ स्राक् झटित्यञ्जसाह्नायेत्यमरः ] स्वमात्मीयं विषयं देशं फ्रान्सं विनिर्ययुः पलायाञ्चक्रिरे ॥

भा०—यह बात प्रसिद्धहै कि फ्रान्सवासीलोग उसीसमय अग्निसे जलतेहुए मौस्कनामकनगरको देखकर हतोद्योगहोकर शीघ्रही अपने फ्रान्सदेशको पलायन होगये ॥ ६९ ॥

स वेल्सेली[2] फ्रान्सजनान्प्रतीपगान्
पुनर्विजिग्ये च भिटोरिया[3]स्थले ।
विधेः प्रतीपाद्विफलेप्सितं जनं
प्रयान्ति विघ्ना ह्यभितः पदे पदे ॥ ७० ॥

टी०—स इति । पुनर्भूयः स प्रसिद्धो वेल्सली प्रतीपगान् स्वदेशंप्रति प्रतिगच्छतः फ्रान्सजनान् फ्रान्सवासिनोलोकान् भिटोरियास्थले भिटोरियाख्ये स्थानविशेषे च विजिग्ये व्यजेष्ट हीति निश्चयेन विघ्नाः प्रत्यूहाः । [विघ्नोऽन्तरायः प्रत्यूह इत्यमरः] प्रतीपाद् विमुखाद् विधेर्दैवाद् विफलं ईप्सितं यस्यैवंविधं जनं अभितः समन्तात् " अभितः परितः समयानिकषा हाप्रतियोगे ऽपि द्वितीया " पदे पदे स्थाने स्थाने " वीप्सायां द्विर्वचनम् " प्रयान्ति प्राप्नुवन्तीत्यर्थान्तरन्यासेन समर्थ्यते ॥

1. Moscow. 2. Wellesley. 3. Vittoria.

स वेल्सली वाहुवलोपशोभितः
स्वविक्रमात्फ्रान्सनृपस्य गोपितान् ।
थिऊददादीन्कटकाननेकशो
जिगाय तान्फ्रान्सजनान्निपीडयन् ॥ ६७ ॥

टी०—सइति । वाहुवलेन उपशोभितः सवेल्सली एतन्नामकः सैन्यपतिस्तान् फ्रान्सजनान् निपीडयन् वितर्दयन् स्वविक्रमाद् निजपराक्रमात फ्रान्सनृपस्य गोपितान् रक्षितान् थिऊददादीन् थिऊददप्रभृतीन् अनेकशः कटकान् दुर्गाणि जिगाय जितवान् ॥

भा०—वाहुवलशाली उसप्रसिद्ध वेलसलीनामक सैन्यपतिने फ्रान्सजनों को पीडनकर अपनेपराक्रमसे फ्रान्सेश्वरके रक्षित थिऊदद प्रभृति अनेक क़िलाओंको जीतलिया ॥ ६७ ॥

निपोलियन्फ्रान्सपतिश्च मौस्कंकं
व्यजेष्ट तत्राखिलं विपोथयन् ।
तदैव तद्देशनिवासिभिर्जनैः
पुरं हृतार्थं सहसा ह्यदह्यत ॥ ६८ ॥

टी०—निपोलियन्निति । फ्रान्सपतिर्निपोलियँश्च तत्रसंग्रामे अखिलं शत्रुसैन्यं विपोथयन् ताडयन्सन् मौस्ककं नामनगरं व्यजेष्ट जितवान् हीति निश्चयेन स एव देशस्तद्देशस्तस्मिन् निवसन्तीति तैर्जनैर्हृतार्थं गृहीत सर्वस्वं अरिभिरिति शेषः पुरं नगरं तदैव सहसा शीघ्रमेव अदह्यत "कर्म्मणि लङ्" ॥

भा०—फ्रान्सेश्वर निपोलियन्ने उससंग्राममें शत्रुसेनाको मारकर मौस्कानामक पुरविशेषको जीतदिया यह वात प्रसिद्धहै कि उसी देशके रहनेवाले लोगोंने हृतसर्वस्वनगरको उसीसमय शीघ्र जलादिया ॥ ६८ ॥

1. Wellesley. 2. Cindad. 3. Moscow.

भा०—उससमय रशिया प्रभृतिदेशोंके तथा और वीरोंसे उन (फ्रान्सवालों) के मार्गमें इकट्ठाहोकर संग्राममें तरवार, भाला, बाण और पत्थरोंसे पीड़ित वे फ्रान्सकेलोग जीतेगये ॥ ७२ ॥

अतः परं फ्रान्सनिवासिभिर्जनै-
रजस्रमाकस्मिकवैरकारणम् ।
निपोलियन्भूमिपतिर्नृपासनाद्
व्यपोह्य चेल्वा[1]विषयं ह्यनीयत ॥ ७३ ॥

टी०—अतइति । हीति निश्चयेन अतःपरं अनन्तरं फ्रान्सनिवासिभिर्जनै र्लोकैः अजस्रं सन्ततं आकास्मिकं अहेतुकं यद्वैरं तस्य कारणं हेतुर्भूमिपतिर्निपोलियन् एतदाख्योराजा नृपासनाद् राजपीठात् व्यपोह्य दूरीकृत्यच इल्वाविषयं इल्वानामकंदेशं अनीयत प्राप्यत "कर्म्मणि लङ्" ॥

भा०—यह बात प्रसिद्धहै कि अनन्तर फ्रान्सवासीलोगोंने निरन्तर वैरकरनेवाले निपोलियन्राजाको राज्यासनसे दूरकर इल्वानामकदेशको भेजदिया ॥ ७३ ॥

यतस्तदा फ्रान्सिभिरैंग्लिशैर्जनैः
परस्परं प्रेमभरार्द्रमानसैः ।
शुभेऽह्नि चाष्टादशसंख्यकोलुई[2]यी
नृपासनेऽधार्यत धारणास्पदम् ॥ ७४ ॥

टी०—यतइति । तदा तस्मिन्समये यतःकारणात् परस्परमन्योऽन्यं प्रेमभरेण आर्द्रं मानसं येषां ते तथाविधैः फ्रान्सिभिः फ्रान्सदेशीयैः ऐंग्लिशैर्जनैश्च शुभेऽह्नि धारणास्पदं बुद्धिभाजनं अष्टादशसंख्यकोलुयी एतन्नामकोराजा नृपासने राज्यपीठे अधार्य्यतास्थाप्यत "कर्म्मणि लङ्" ॥

भा०—उससमय निपोलियन्के न होनेकेकारण परस्परप्रेमवाले फ्रान्सदेशीय और ऐंग्लिशलोगोंने अच्छेदिनपर बुद्धिमान् अठारहवां लुयीनामकराजा फ्रान्सके राज्यासनपर स्थापित किया ॥ ७४ ॥

1. Elba. 2. Lewis.

भा०—पुनः उसप्रसिद्धवेलसलीनामक वीरने स्वदेशको लौटतेहुए फ्रान्सदेशीयलोगोंको भिटोरियास्थलमें भी जीतलिया यह बात प्रसिद्धहै कि दैवके विमुखहोनेसे विफलमनोरथवाले मनुष्यको चारोंतरफसे पदपदमें विघ्न प्राप्तहोते हैं ॥ ७० ॥

ततः सिवाष्टेनपुरं तदात्मसा-
च्चकार सेनाग्रसरः स वेल्सली।
जयैकपात्रं समराध्वरक्षमः
कथं नु राज्याधिकतां करोति न ॥ ७१ ॥

टी०—ततइति। ततोऽनन्तरं तदा तस्मिन्समये सेनाग्रसरः सेनाग्रगामी स वेलसली सिवाष्टेननामकं पुरं नगरं आत्मसाच्चकार स्वायत्तमकरोत् नु इति वितर्के जयैकपात्रं विजयभाजनं समराध्वरस्य क्षमः समर्थः पुरुषः कथं केनप्रकारेण राज्याधिकतां राज्यवृद्धिं न करोति अपि तु सर्वथा करोतीत्यर्थान्तरेण समर्थ्यते ॥

भा०—अनन्तर उससमय राजाजौर्जका सेनापति उसप्रसिद्ध वेलसलीने सिवाष्टेननामकनगरको अपने आयत्तकरलिया क्योंकि विजयशील संग्रामयज्ञमें समर्थपुरुष किस तरह राज्यवृद्धिको नहीं करताहै ॥ ७१ ॥

अथान्यवीरै रशियादिसैनिकै-
स्तदैव सम्भूय तदीयवर्त्मनि।
कृपाणभल्लेषुशिलाभिरर्दिता
विजिग्यिरे फ्रान्सजना महाहवे ॥ ७२ ॥

टी०—अथेति। अथानन्तरं तदा तस्मिन्समये रशियादीनां देशानां ये सैनिकास्तैस्तथा अन्यवीरैरपरभटैः तेषां (फ्रान्सीयानां) इदं तदीयं तच्च तद्वर्त्म तस्मिन् सम्भूय एकत्रितभावं प्राप्य महाहवे संग्रामे कृपाणभल्लेषुशिलाभिः अर्दिताः पीडिताः फ्रान्सजना विजिग्यिरे व्यजीयन्त "कर्मणि लिट्" ॥

1. St. Sebastian. 2. Wellesley. 3. Russia.

महाहवं वाटरलूस्थलेपुन-
र्व्यधात्समाविष्कृतबाहुविक्रमः ॥ ७७ ॥

टी०—अथेति । अथानन्तरमपि समाविष्कृतबाहुविक्रमः प्रकटीकृतस्वभुजपराक्रमो बलोद्धतो वेलिङ्गटनोनाम कश्चिदैंग्लिशोवीरः तदा निपोलियन्भूपतिना एतदाख्येन राज्ञा समं सार्धं पुनर्भूयो वाटरलूस्थले महाहवं बृहत्संग्रामं व्यधादकार्षीत् ॥

भा०—अनन्तर बड़ापराक्रमी और बलोन्मत्त वेलिङ्गटननामकपुरुषने निपोलियन् फ्रान्सेश्वरकेसाथ वाटरलूस्थलमें फिर बड़ासंग्रामकिया ॥ ७७ ॥

ततोऽपराह्णे समये च तद्दिने
सहायभावं प्रुशियानिवासिनाम् ।
अवाप्य वेलिङ्गटनोऽपि तत्क्षणा-
न्निपोलियन्भूमिपतिं ह्यजेजयीत् ॥ ७८ ॥

टी०—ततइति । हीति निश्चयेन ततोऽनन्तरं तद्दिने तस्मिन्युद्धदिवसेऽपराह्णसमये च वेलिङ्गटनः सेनापतिरपि प्रुशियानिवासिनां जनानां सहायभावं अवाप्य लब्ध्वा तत्क्षणात् निपोलियन्भूमिपतिं एतन्नामकं फ्रान्सेश्वरं अजेजयीदतिशयेनाजयत् "जिधातोर्यङ्लुकि लङिरूपम् ॥

भा०—अनन्तर यह बात प्रसिद्धहै कि उसीदिन अपराह्णसमयमें वेलिङ्गटनने प्रुशियदेशके लोगोंकी सहायताको पाकर उसीसमय निपोलियन्राजाको जीतलिया ॥ ७८ ॥

तदैव तैरिंग्लिशवासिभिः स्वयं
निपोलियन्भूपतिरञ्जसा क्रुधा ।
ससेण्टहेलेनाविषयं ह्यनायित-
मसावसून् यत्र मुमोच बन्धने ॥ ७९ ॥

1. Waterloo. 2. Prussia. 3. St. Helena.

अथो गतेष्वेव दिनेषु केषुचि-
न्निपोलियन्फ्रान्सकनीवृतं पुनः ।
पलाय्य चेल्वाविषयात्समाययौ
विमुक्तबन्धो हरिणाधिपो यथा ॥ ७५ ॥

टी०—अथोइति । अथोऽनन्तरं केषुचिद्दिनेषु गतेषु सत्सु निपोलियन् इल्वाविषयात्पलाय्य भग्नोभूत्वा विमुक्तबन्धो विगतबन्धनो हरिणाधिपः सिंहो यथा पुनर्भूयः फ्रान्सकनीवृतं फ्रान्सदेशं [ नीवृज्जनपदोदेश इत्यमरः ] समाययौ प्राप ॥

भा०—अनन्तर कितनेही दिनबीतजानेपर निपोलियन् इल्वदेशसे भागकर विमुक्तबन्धनवाले सिंहकीतरह फिर फ्रान्सदेशको आपहुंचा ॥ ७५ ॥

ततोऽखिलाः फ्रान्सनिवासिनो जनाः
शरेन्दुनागेन्दुमिते शके पुनः ।
निपोलियन्संज्ञकमाहवप्रियं
न्यवेशयन् भूपतिपीठमग्रिमम् ॥ ७६ ॥

टी०—ततइति । ततोऽनन्तरं अखिलाः समग्राः फ्रान्सनिवासिनो जनाः पुनः शरेन्दुनागेन्दुमिते पञ्चदशाधिकाष्टादशशतमिते क्रैष्टशके आहवप्रियं संग्रामाभिलाषुकं निपोलियन्संज्ञकं नृपं अग्रिमं मुख्यं भूपतिपीठं राज्यसिंहासनं न्यवेशयन्नस्थापयन् ॥

भा०—अनन्तर सम्पूर्णफ्रान्सवासीलोगोंने १८१५ ईसवीमें फिर संग्रामप्रिय निपोलियन्को राज्यासनपर स्थापितकरदिया ॥ ७६ ॥

अथापि वेलिंङ्गटनोबलोद्धतो-
निपोलियन्भूपतिना समं तदा ।

1. Wellington ( Duke of ).

टी०—नभेति । ततो ऽनन्तरं स जौर्जसंज्ञो नृपतिः नभायनेभेन्दुमिते विंशत्याधिकाष्टादशशतमिते क्रैष्टशके आशु शीघ्रं कृतात्मसंस्क्रियो विहितस्वमरणसमयसंस्कारः अतएव प्रशान्तचेताः शान्तचित्तःसन् परलोकं लोकान्तरं अभ्यगात् प्राप "इणोगालुङि, गातिस्थेति सिचोलुक्" ॥

भा०—यह बात प्रसिद्धहै कि अनन्तर वह राजातृतीयजौर्ज १८२० ईसवीमें जल्दीही मरणसमयसंस्कारको कर शान्तचित्तहोकर क्षणभंगुर संसारको छोड़ परलोकको प्राप्तहुआ ॥ ८१ ॥

ततस्तुरीयो ननु जौर्जसंज्ञको
नभायनाष्टेन्दुमिते शके तदा ।
अशेषसामन्तशिरस्त्रपूजितं
स्वतातसिंहासनमध्यतिष्ठत् ॥ ८२ ॥

टी०—ततइति । नन्विति निश्चयेन ततो ऽनन्तरं तदा तस्मिन्समये तुरीयश्चतुर्थो जौर्जसंज्ञको जौर्जाभिधेयोराजा नभायनाष्टेन्दुमिते विंशत्यधिकाष्टादशशतमिते क्रैष्टशके अशेषाः समग्राः ये सामन्ता मण्डलेश्वरास्तेषां शिरस्त्रैः मुकुटैः पूजितं अर्चितं स्वतातसिंहासनं निजपितू राज्यपीठं अध्यतिष्ठदुपाविशत् "अधिशीङ्स्थासां कर्मेत्याधारस्य कर्म्मत्वम्" ॥

भा०—यह निश्चयहै कि अनन्तर उससमय चतुर्थजौर्ज भूपति १८२० ईसवीमें सबराजाओंसे पूजित अपने पिताके राज्यासनपर बैठा ॥ ८२ ॥

अजस्रमानन्तिकदुःखकारणा-
त्तथानयक्रूरतया निपीडिताः ।
प्रजाः सुखोन्मूलकरान्कुमन्त्रिणो
विहन्तुमेवेषुरमन्दमन्यवः ॥ ८३ ॥

टी०—अजस्रमिति । अजस्रं अनवरतं आनन्तिकं अवसानरहितं यद्दुःखं तस्य कारणाद्धेतोः तथा नयस्य क्रूरतया निष्ठुरभावेन निपीडिता-

टी०--तदेति । तदा विजयसमय एव तैरिंग्लिशवासिभिर्जनैः स्वयं स्वेच्छया क्रुधा कोपेन अञ्जसा शीघ्रं स निपोलियनभूपतिः तं प्रसिद्धं सेण्ट-हेल्नानामकं विषयं देशं अनायि प्राप्यत "कर्म्मणि लुङ्" यत्र देशे ऽसौ निपोलियन् वन्धने कारागारे असून्प्राणान् मुमोच त्यक्तवान् ॥

भा०--उसीसमय ऐंग्लिशोंने क्रोधसे आपही शीघ्र निपोलियन्को सेण्टहेल्ना-नामक देशको भेजदिया जहां कि वन्धनहीमें पीछे निपोलियन्का मरणहुआथा ॥७९॥

धराधिनाथः समरे ऽधिकव्यया-
दशीतिकोट्याधिकपर्य्युदञ्चनः ।
करातिभारेण धनापहारणै-
रशेषलोकान्व्यथयाम्बभूव सः ॥ ८० ॥

टी०--धरेति । स धराधिनाथस्तृतीयो जौर्जः समरे संग्रामे विषये अधिकव्ययात् धनस्याधिकापगमात् अशीतिसङ्ख्यकायाः कोट्यस्ताभ्य-आसमन्तादधिकं पर्य्युदञ्चनं यस्य [ ऋणंपर्य्युदञ्चनम्, उद्धार इत्यमरः ] एवंविधः सन् अशेषलोकान् करातिभारेण धनापहारणैर्द्रव्यग्रहणैः व्य-थयाम्बभूव पीडयामास ॥

भा०--राजातृतीयजौर्जने संग्राममें अधिक व्ययकरनेसे अस्सीकरोड़से अधिक ऋणयुक्तहोकर सारीप्रजाको ज्यादः कर लगानेसे और हठपूर्वक धन लेनेसे दुःखित किया ॥ ८० ॥

नभायनेभेन्दुमिते शके ततः
सजौर्जसंज्ञो नृपतिर्हि नश्वरम् ।
जगद्विहायाशु कृतात्मसंस्क्रियः
प्रशान्तचेताः परलोकमभ्यगात् ॥ ८१ ॥

2. George.

दकरोत् नराधिपो राजा तथाऽेव तादृशमेव मनीषिणं विद्वांसं रोबर्टपिल-नामपुरुषं गृहाधिकारेषु गृहकार्याधिकारविषये अयुनक् प्रायुङ्क्त "इरितोवा इतिच्लेरड्" ॥

भा०- अनन्तर राजाजौर्जने बडेचतुर केनिङ्गनामकपुरुषको सर्वदेशोंका सेक्रेटरी बनादिया तिसीतरह उसने विद्वान् रोबर्टपिलको घरके कामोंका सेक्रेटरी किया ॥ ८५ ॥

क्यनिङ्गनामाधिकृतः स्वपौरुषात्
स पोर्चुगालं[1] विषयं रिपोर्भयात्।
जुगोप गुप्तेङ्गितविक्रमः सुधीः
प्रजासुखोत्पत्तिकरो भवत्यरम् ॥ ८६ ॥

टी०—क्यनिङ्गेति । अधिकृतोऽधिकारी क्यनिङ्गनामा स पुरुषः स्वपौरुषात् निजपराक्रमात् पोर्चुगालनामं विषयं देशं रिपोः शत्रोर्भयाज्जुगोप ररक्ष गुप्तौ रक्षितौ इङ्गितविक्रमौ यस्यैवंविधः सुधीर्बुद्धिमान् पुरुषोऽरमत्यर्थं प्रजासुखोत्पत्तिकरः प्रकृत्यानन्दविधायको भवतीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—अधिकारी केनिङ्गनामकपुरुषने अपने पराक्रमसे पोर्चुगालनामकदेशको शत्रुभयसे रक्षितकिया क्योंकि गुप्तचेष्टा और पराक्रमवाला बुद्धिमान् पुरुष अतिशयकरके प्रजाका सुखदायक होताहै ॥ ८६ ॥

अमेरिकां[2] दक्षिणदिक्समाश्रितां
स्वतन्त्रयुक्तामकरोत्क्यनिङ्ककः[3]।
विषादितायाः प्रकृतेर्ज्वलन्मनः
सुबुद्धिना शाम्यति नीतिवारिणा ॥ ८७ ॥

टी०—अमेरिकामिति । क्यनिङ्ककः क्यनिङ्गनामापुरुषो दक्षिणादिक्-

1. Portugal. 2. America. 3. Canning.

बाधिता अतएव अमन्दो मन्युर्यासां तथाविधाः प्रजाः प्रकृतयः सुखोन्मूलकरान् सुखविनाशकान् कुमन्त्रिणो निन्दितसचिवान् विहन्तुमेव ईषुरैच्छन् ॥

भा०—निरन्तर अनन्तदुःख कारणसे तथा नीतिकी क्रूरतासे पीडित अतएव बड़े क्रोधयुक्त प्रजाकेलोगोंने सुखकेनाशक दुष्ट मंत्रियोंको मारनाचाहा ॥८३॥

जिघांसवः केचन मन्त्रिणोऽभवन्
धरापतिश्चारविलोचनैर्हितान् ।
विबुध्य घोरापकृतेश्च कारणाद्
व्यघातयत्पाशविबन्धनेन सः ॥ ८४ ॥

टी०—जिघांसवइति । हीति निश्चयेन केचनपुरुषा मन्त्रिणः सचिवान् जिघांसवो हन्तुमिच्छवोऽभवन् अजायन्त स धरापतिश्चतुर्थो जौर्जः चारविलोचनैर्गूढपुरुषेक्षणैस्तान् जिघांसून् विबुध्य ज्ञात्वा घोरापकृतेर्महापराधस्य कारणात् पाशविबन्धनेन कण्ठयन्त्रितदाम्नेत्यर्थः व्यघातयद् नाशयाञ्चकार ॥

भा०—यह प्रसिद्ध है कि कोईपुरुष मन्त्रियोंको मारनेमें उद्यतहुएथे राजाजौर्जने गूढ़पुरुषरूप नेत्रोंसे उनलोगोंको जानकर बड़ेअपराधके कारण फांसीदेकर मरवादिया ॥ ८४ ॥

अथापि केनिङ्गमनन्यवाग्मिनं
स सर्वदेशेष्वधिकारिणं व्यधात् ।
तथैव रोबर्टपिलं नराधिपो
गृहाधिकारेष्वयुजन्मनीषिणम् ॥ ८५ ॥

टी०—अथेति । अथानन्तरमपि स नृपतिः अनन्यवाग्मिनं अतुलितयुक्तिपटुं केनिङ्गनामपुरुषं सर्वदेशेषु अधिकारिणं अधिकारवन्तं व्यधा-

1. Canning. 2. Robert Peel.

भा०—अनन्तर पहिले अपने आजीवनादि कार्य्यसे रहित कैथोलिकलोगोंने उससमय दानियलादिपुरुषोंके बोधनसे ऐंग्लिशोंके साथ सम्पूर्ण मनोऽभिलषित देनेवाला मेलकरादिया ॥ ८९ ॥

## ( युग्मकम् )

पुरैव ये ग्रीसनिवासिमानवाः
सहाहवं टर्किजनैरकुर्वत ।
अथैंग्लिशानां रशियाधिवासिनां
तथौष्ट्रियाफ्रान्सनिवासिनां नृणाम् ॥ ९० ॥
सहायतां तेऽर्थकरीं समन्ततो-
ऽधिगम्य संख्ये ह विजिग्यिरे रिपून् ।
जनानुरागेण कृतात्मसत्क्रिया
व्रजन्ति लक्ष्मीमनुरूपसौख्यदाम् ॥ ९१ ॥

टी०—पुरेति । पुराएव पूर्वस्मिन्समय एव ये ग्रीसनिवासिनो ग्रीसदेशीयाजनाः टर्किजनैष्टर्किदेशीयैर्लोकैः सह आहवं संग्रामं अकुर्वत व्यदधुः । अथानन्तरं ते ग्रीसवासिनोजना ऐंग्लिशानां रशियाधिवासिनां तथा औष्ट्रियाफ्रान्सयोर्निवासिनां नृणां समन्ततोऽभितोऽर्थकरीं प्रयोजनविधायिनीं सहायतां साहाय्यं अधिगम्य प्राप्य संख्ये संग्रामे रिपून् वैरिणो विजिग्यिरे ऽजयन् हेति निश्चयेन जनानुरागेण लोकप्रीत्या कृतात्मसत्क्रिया विहितनिजकार्य्याःपुरुषाः अनुरूपसौख्यदां योग्यानन्दविधायिनीं लक्ष्मीं श्रियं व्रजन्ति यान्तीत्यर्थान्तरेण समर्थ्यते ॥

भा०—पहिले जिनग्रीसनिवासीलोगोंने टर्किदेशवासियोंके साथ युद्धकियाथा अनन्तर उन्हीं ग्रीसदेशियोंने ऐंग्लिश, रशियावासी तथा औष्ट्रिया और फ्रान्सवा-

1. Greece. 2. Turkey. 3. Russia. 4. Austria. 5. France.

समाश्रितां यमदिगाश्रितां अमेरिकां नाम भूमिं स्वतन्त्रयुक्तां स्वातन्त्र्योपेतां अकरोत् विदधे । यतः खेदयुक्तायाः प्रकृतेः प्रजाया ज्वलत् संतापप्राप्तं मनः सुबुद्धिना पुरुषेण नीतिवारिणा नयजलेन शाम्यति शान्तियुक्तं भवतीत्यर्थान्तरेण समर्थ्यते ॥

भा०—क्यानिङ्गने दक्षिण अमेरिकाको स्वतन्त्रतादिदी क्योंकि खेदयुक्त प्रजाका मनसन्ताप बुद्धिविशिष्टपुरुषसे न्यायरूपजलसे शान्तहोता है ॥ ८७ ॥

तथाऽपरो हस्किंसनो विचक्षणो-
द्वितीयमन्त्री नृपतेर्दयान्वितः ।
समस्तसद्विक्रयणार्हवस्तुषु
सुशान्तये ऽत्यल्पकरं न्ययोजयत् ॥ ८८ ॥

टी०—तथेति । तथा तादृशमेव दयान्वितो विचक्षणो विद्वान् नृपते राज्ञो द्वितीयमन्त्री हस्किसनोनामपुरुषः समस्तानि यानि सद्विक्रयणार्हाणि वस्तूनि समीचीनविक्रेयद्रव्याणि तेषु विषये अत्यल्पकरं अतिन्यून राजग्राह्यद्रव्यभागं सुशान्तये शान्त्यर्थं न्ययोजयदकरोदित्यर्थः ॥

भा०—इसीतरह दयायुक्त और विद्वान् राजाका द्वितीयमन्त्री हस्किसननामकपुरुषने शान्त्यर्थ सम्पूर्ण विक्रयवस्तुओंमें न्यूनकर लगादिया ॥ ८८ ॥

ततश्च कैथोलिकमानवास्तदा
पुरा निजाजीवनकार्य्यवञ्चिताः ।
सहेनिजोदानियलादिबोधनाद्-
व्यधुः सुसन्धानमशेषसिद्धिदम् ॥ ८९ ॥

टी०—ततइति । ततोऽनन्तरं पुरा पूर्वं निजं स्वकीयं यत् आजीवनकार्य्यं तत्र वञ्चिता वर्जिताः कैथोलिकमानवाः कैथोलिकजातिसम्भवाः पुरुषास्तदा तस्मिन्समये दानियलादयो ये पुरुषास्तेषां बोधनाज्ज्ञापनात् सुसन्धानं सम्मेलं व्यधुरकार्षुः ॥

1. Huskisson. 2. Catholic. 3. Daniel O'Conell.

उसकी सड़कें प्रयत्नके साथ प्रकाशितकीं यह बात प्रसिद्ध है कि आलस्यरहित बुद्धि-विशिष्ट पुरुषोंको दुःसाध्य क्या है ॥ ९३ ॥

अथाभ्रवह्नीभमहीमिते शके
तृतीयजौर्जस्य[1] सुतः सुबुद्धिमान्।
तुरीयसंख्यो[2] हि विलीयमो नृपो
नृपासनेऽस्थाज्जनताञ्चितक्रियः ॥ ९४ ॥

टी०—अथेति। अथानन्तरं अभ्रवह्नीभमहीमिते त्रिंशदधिकाष्टादशशतमिते क्रैष्टशके जनतया अञ्चिता पूजिता क्रिया कृतिर्यस्यैवंविधः सुबुद्धिमान् तृतीयजौर्जस्य सुतस्तनयस्तुरीयसंख्यश्चतुर्थो विलीयमोनाम नृपो नृपासने राज्यपीठे अस्थादुपाविशत् ॥

भा०—अनन्तर १८३० ईसवीमें लोगसम्मानित बुद्धिमान् तृतीयजौर्जका पुत्र चतुर्थविलियमनामक राजा राज्यासनपर बैठा ॥ ९४ ॥

प्रजासुखोत्पत्तिकरान्नयाश्रवान्
अमंस्त नासौ नृपतिर्विलीयमः।
यतः समन्ताद्विषये निगर्हणा-
ऽतिवादवृत्तं प्रकटीबभूव तत् ॥ ९५ ॥

टी०—प्रजेति। असौ विलीयमो नृपतिः प्रजायाः सुखस्योत्पत्तिकरान् उत्पादकान् नयाश्रवान् नीतिनियमान् नामंस्त न मेने यतो यस्मात्कारणात् विषये ऽस्मिन्देशे समन्तात् तत्प्रसिद्धं निगर्हणाया निन्दाया अतिवादवृत्तं कठोरवृत्तं प्रकटीबभूव प्रादुरासीत् ॥

भा०—उस राजाविलियमने प्रजाको सुखदेनेवाले नीतिनियमोंको न माना जिससे कि सारेदेशमें वह प्रसिद्ध निन्दाका अतिकठोरवृत्त प्रकट हुआ ॥ ९५ ॥

अतो धरेशो भयमानसस्तदा
सुबुद्धिमद्भिर्मनुजैर्नयाश्रवान्

1. George III. 2. George IV.

सियोंको योग्य सहायताको पाकर संग्राममें टर्किवालोंको जीतलिया क्योंकि जिन्होंने लोगोंके प्रेमसे अपने कार्य्य सिद्धकर लिये हैं वे लोग योग्य सुखदेनेवाली लक्ष्मीको प्राप्तहोते हैं ॥ ९० । ९१ ॥

परस्परं द्वेषभिया नराधिप-
स्तदैव कैथोलिकजातिपूरुषान् ।
अकिञ्चनत्वोपहतान्समन्ततो-
ऽनुकम्पया वृत्तिपदेष्वलम्भयत् ॥ ९२ ॥

टी०-परस्परमिति । तदाएव तस्मिन्समयएव नराधिपोराजा परस्परमन्योऽन्यं द्वेषभिया वैरभीत्या समन्ततोऽभितोऽकिञ्चनत्वेनोपहतान् दरिद्रतयाऽतिदुःखितान् कैथोलिकजात्याः पूरुषान् अनुकम्पया कृपया वृत्तिपदेषु आजीवनस्थानेषु अलम्भयत प्रापयत् ॥

भा०--उसीसमय राजाजोर्जने परस्परद्वेषकी भीतिसे सबतरह दरिद्रभावको प्राप्त कैथोलिकलोगोंको बडीकृपासे आजीवनस्थानोंमें रखदिया ॥ ९२ ॥

स्टिफन्सनस्तत्र च धूमयानकं
पथस्तदीयाँश्च विरच्य यत्नतः ।
व्यचीचकाशन्ननु शेमुषीमतां
किमस्ति दुःसाध्यमतन्द्रितात्मनाम् ॥ ९३ ॥

टी०--स्टिफन्सनइति । तत्रेंग्लिशदेशे स्टिफन्सनोनाम कश्चित्पुरुषश्च धूमयानकं धूमविशिष्टं विमानं तदीयांस्तत्सम्बन्धिनः पथश्च मार्गांश्च यत्नतो विरच्य व्यचीचकाशत् विरचकार ननु इति निश्चयेन अतन्द्रितआलस्यरहित आत्मा येषां तथाविधानां शेमुषीमतां प्रज्ञावतां पुरुषाणां दुःसाध्यं दुष्करं किमस्ति अपितु किमपि नास्तीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०-- इस इंग्लिशदेशमें स्टिफन्सननामकपुरुषने धूमयान ( रेल ) को और

1. Catholic. 2. Stephenson.

मुपार्लिमेण्टाख्यसभैव कोटिश-
स्तदैव दासाधिपतिभ्य एवहि ।
प्रदाय रौप्याणि कृपार्द्रमानसा
विदासतां प्रापयदाशु दासकान् ॥ ६८ ॥

टी०—सुपार्लिमेण्टेति । हीति निश्चयेन तदाएव कृपार्द्रमानसा करुणार्द्रचेताः शोभना पार्लिमेण्टाख्यसभाएव दासाधिपतिभ्यः क्रीतदासस्वामिभ्यएव कोटिशोरौप्याणि रजतमुद्राः प्रदाय दत्त्वा आशु शीघ्रं दासकान् " अनुकम्पायां कन् प्रत्ययः " विदासतां दासभावराहित्यं प्रापयद्गमयत् ॥

भा०—यह बात प्रसिद्धहै कि उसीसमय दयायुक्त पार्लिमेण्टसभानेही क्रीतदासस्वामियोंको करोड़ोंरुपया देकर जल्दीही दासलोगोंको दासत्वरहित करदिया ॥ ६८ ॥

असौ हि संसन्नयमार्गगामिनी
समग्रदीनानपि पर्य्यपालयत् ।
तथैव भृत्यार्हजनान्बुभुक्षितान्
ररक्ष सा वृत्तिनिबन्धनात्स्वयम् ॥ ६९ ॥

टी०—असाविति । हीति निश्चयेन नयमार्गगामिनी नीतिवर्त्मपरा असौ संसत्सभा समग्रदीनान् अपि पर्य्यपालयत् पालयाञ्चकार सा सभा तथा एव तादृशमेव बुभुक्षितान् क्षुधार्त्तान् भृत्यार्हजनान् कर्म्मकरयोग्यान् लोकान् वृत्तिनिबन्धनाद् आजीवनाद्धेतोः स्वयं ररक्ष अपात् ॥

भा०—यह निश्चयहै कि नीतिमार्गयायिनी उस पार्लिमेण्टसभाने सम्पूर्ण गरीबोंका पालनकिया इसीतरह उससभाने क्षुत्क्षाम भृत्ययोग्य जनोंको आजीवन लगानेसे आपही रक्षित किया ॥ ६९ ॥

1. Parliament.

द्विवह्निनागेन्दुमिते शके पुन-
र्व्यकाशयल्लोकहितैककारणम् ॥ ९६ ॥

टी० --अतइति। अतो निन्दाकारणात् तदा तस्मिन्समये भयं मानसे यस्यैवंविधो धरेशो राजा सुबुद्धिमद्भिर्मनुजैः पुनर्भूयो द्विवह्निनागेन्दुमिते द्वात्रिंशदधिकाष्टादशशतमिते क्रैष्टशके लोकहितैककारणं जनसुखविधानबीजं नयाश्रवान् नीतिनियमान् " उद्देश्यविधेयभावान्नलिङ्गवचनभेदो दोषावहः " व्यकाशयत् प्रकाशमनयत् ॥

भा०--जिसकारणसे कि उससमय भययुक्त राजाविलियमने पुनः बुद्धिविशिष्ट लोगोंसे १८३२ ईसवीमें लोगोंकी भलाईका एकहेतु नीतिनियमोंको प्रकाशित किया ॥ ९६ ॥

ह्विगाख्यलोका[1] लिबरेलसकाख्यया[2]
सुटोरिजाः[3] कन्सरभेटिभाह्वया[4] ।
प्रसिद्धिमापुर्विषयेषु तत्क्षणा-
च्छुभादरा यान्ति सतामलङ्क्रियाम् ॥ ९७ ॥

टी० --ह्विगेति। ह्विगाख्यलोका ह्विग्जना लिबरलसकाख्यया लिबरलसाइति तथा सुटोरिजाः शोभनाष्टोरिसंज्ञोत्पन्नाः पुरुषाः कन्सरभेटिभाह्वयाः कन्सरभेटिभा इति तत्क्षणात् नियमप्रकाशनसमयादेव विषयेषु समग्रदेशेषु प्रसिद्धिं ख्यातिं आपुर्जग्मुः शुभादराः सम्मानाः सतां सज्जनानां अलङ्क्रियां अलङ्कारभावं यान्ति प्राप्नुवन्तीत्यर्थान्तरन्यासेन समर्थ्यते ॥

भा०--ह्विग्लोग लिबरलसनामसे और टोरिसंज्ञोत्पन्नलोग कन्सरभेटिभनामसे नियमप्रकाशन समयसेही सारेदेशोंमें प्रख्यात होगये क्योंकि अच्छे आदर सज्जनोंके अलङ्कारभावको प्राप्तहोते हैं ॥ ९७ ॥

---

1. Whigs. 2. Liberals. 3. Tories. 4. Conservatives.

# अष्टमः सर्गः ॥



केण्टेशोनरपतृतीयजौर्जसूनु-
रासीद्यः समधिकबुद्धिरेडवर्डः ।
आत्माहां युवतिवरां सुरूपवेषां
सस्नेहान्ननु लुईजां पुरोपयेमे ॥ १ ॥

टी०—केयंविक्टोरियानाम कन्यका कस्यपुत्रीति संक्षेपतस्तस्या-उदन्तमभिदधातिकवयिता । केण्टेशइति । नन्विति निश्चयेन पुरा पूर्व-स्मिन्समये नरपश्चासौ तृतीयजौर्जस्तस्यसुनुस्तनूजः समधिकबुद्धिर्विशेष-प्रज्ञः केण्टेशः केण्टदेशाधिपतिर्यएडवर्ड आसीत् स आत्माहां स्वानुरूपां युवतिवरां तरुणीश्रेष्ठां सुरूपवेषां सुरूपंसौन्दर्यमेव वेषोयस्या एवंविधां-लुयिजांनाम वनितां स्नेहात्प्रेम्णः उपयेमे उदवोढ । अस्मिन्सर्गे प्रहर्ष-णीवृत्तम् म्नौज्रौगस्त्रिदशयतिः प्रहर्षणीयमिति लक्षणात् ॥

भा०—यहबात प्रसिद्धहै कि पहिले राजातृतीयजौर्जका पुत्र बुद्धिविशिष्ट केण्टदेशाधिपति ( ड्यूकआफ्केण्ट ) जो एडवर्डनामक राजाहुआ था उसने अपने योग्य सुन्दर रूपवाली युवतिश्रेष्ठ लुइजानाम स्त्री से स्नेहपूर्वक विवाह किया ॥ १ ॥

नन्देन्दुद्विपधरणीमितेशकेऽस्मिन्
सुस्थानास्थितनिखिलग्रहे शुभेऽह्नि ।
लोकानां सदयनयेन रक्षणार्थं
सा राज्ञीक्षणसुभगां सुतामसूत ॥ २ ॥

टी०—नन्देति । सा राज्ञी केण्टेशपत्नी नन्देन्दुद्विपधरणीमिते एकोनविंशत्यधिकाष्टादशशतमिते अस्मिन् क्रैष्टशके सुस्थानेषु स्थिता निखि-

1. Kent ( Duke of ). 2. Edward. 3. Louisa.

अथ नरपतिरात्मपीठयोग्यां
स्वकुलजनिं विकेटोरियां प्रशस्याम्।
अनुपमगुणशालिनीं निरीक्ष्य
निरवधिसौख्ययुतां दिवं समैषीत् ॥ १०० ॥

टी०—अथेति । अथानन्तरं नरपतिश्चतुर्थो विलियमो भूपतिः अनुपमगुणशालिनीं अतुलितगुणोपेतां प्रशस्यां प्रशंसार्हां स्वकुलजनिं निजवंशोत्पन्नां आत्मपीठयोग्यां स्वसिंहासनार्हां विकटोरियांनाम कन्यकां निरीक्ष्यावलोक्य निरवधिसौख्ययुतां अनवरतसुखोपयुक्तां दिवं-स्वर्भूमिं समैषीत् प्राप्त् । अस्मिन्छ्लोके पुष्पिताग्रावृत्तम् अयुजिनयुगरेफतोयकारो युजि च नजौ जरगाश्च पुष्पिताग्रा इति लक्षणात् ॥

भा०—अनन्तर राजा चतुर्थविलियम शुभगुणोपेत प्रशंसनीय निजवंशोत्पन्न तथा अपनेसिंहासनकेयोग्य विकटोरियानामिका कन्याको देखकर अत्यन्त सुखयुक्त स्वर्गभूमिकोप्राप्तहोगया ॥ १०० ॥

इति उर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये हैनोभरकुलोत्पन्नजौर्ज दिविलियमान्तभूपपञ्चकवंशराज्यवर्णनन्नाम सप्तमः सर्गः ॥ ७ ॥

---

1. Victoria.

अन्याभिः सुनयकलाभिरात्तबुद्धी-
राज्यार्हा ऽखिलप्रकृतिप्रिया हि सा ऽभूत् ॥ ४ ॥

टी०—शिक्षाभिरिति। अजस्रं निरन्तरं स्मृतिपरिवेदिनां धर्म्मशास्त्रविदां शिक्षाभिः शासनैः तथा प्रकृतेः प्रजाया यद्धितं तस्यैकहेतुकाभिर्मुख्यबीजरूपाभिः विद्याभिः तथा अन्याभिः सुनयकलाभिः आत्तबुद्धिः प्राप्तधिषणा अखिलप्रकृतिप्रिया निखिललोकप्रेमयुक्ता सा विक्टोरिया राज्यार्हा राज्यासनारोहणक्षमा अभूत् ॥

भा०—निरन्तर धर्म्मशास्त्रके जाननेवाले लोगोंकी शिक्षासे तथा प्रजाकी भलाईकी मुख्यकारण विद्याओंसे तथा अन्यान्यसुनीतिकलाओंसे विशिष्टबुद्धिवाली सम्पूर्ण प्रजाकी प्रेमपात्र वह विक्टोरिया राज्यासनारोहणयोग्य होगई ॥ ४ ॥

अद्र्यग्निद्विपधरणीमिते शके ऽस्मिन्
दिष्टान्तं विलियमभूपतौ[1] प्रयाते।
लोकानामथ च सभासदां सुमत्या
सा देवी नरपतिपीठमध्यतिष्ठत् ॥ ५ ॥

टी०—अद्रीति। अथानन्तरं विलियमभूपतौ दिष्टान्तं कालधर्म्मं प्रयाते गते सति "यस्य च भावेनभावलक्षणमिति सप्तमी" अद्र्यग्निद्विपधरणीमिते सप्तत्रिंशदधिकाष्टादशशतमिते अस्मिन् क्रैष्टशके देवी दिव्यगुणभूषिता सा विक्टोरियानाम राजकन्यका लोकानां सर्वेषां जनानां सभासदां च सुमत्या शोभनबुद्ध्या नरपतिपीठं राजसिंहासनं अध्यतिष्ठत् न्यविशत "अधिशीङ्स्थासांकर्म्मेत्याधारस्य कर्म्मत्वम्" ॥

भा०—अनन्तर राजाविलियमके मरनेपर १८३७ ईसवीमें दिव्यगुणभूषित विक्टोरियानाम राजकन्या सब प्रजाके लोगों और सभासदोंकी सम्मतिसे राज्यासनपर बैठी ॥ ५ ॥

1. William IV.

लाग्रहा यस्मिन् ... विधे शुभेऽह्नि शुभदिने लोकानां जनानां सदयनयेन दयालहितनीत्या रक्षणार्थं परित्राणार्थं ईक्षणसुभगां नेत्रानन्ददात्रीं सुतां पुत्रीं असूत सुषुवे ॥

भा०—लुइजानाम डचेसकेण्टेशपत्नीने १८१९ ईसवीमें शुभस्थानोंमेंस्थित समस्तग्रहवाले शुभदिनमें लोगोंको दयायुक्तनीतिसे रक्षार्थ नयनानन्ददायिनी पुत्रीको पैदाकिया ॥ २ ॥

केण्टेशः सह निखिलैः सुहृद्भिरेतां
स्वां पुत्रीमधिकसुलक्षणैरुपेताम् ।
आत्मेच्छाविहितयथार्थकेन नाम्ना
सानन्दं किल विक्टोरियां प्रचक्रे ॥ ३ ॥

टी०—केण्टेशइति । किलेति निश्चयेन केण्टेश एडवर्डो निखिलैः सुहृद्भिर्मित्रैः सह अधिकसुलक्षणैः अतिशुभचिह्नैरुपेतां युक्तां एतां स्वां पुत्रीं निजां तनूजां आत्मेच्छया विहितो यथार्थको योग्यार्थो यस्मिन् एवंविधेन नाम्ना अभिधानेन सानन्दं यथास्यात्तथा विक्टोरियां विशेषेण कटं रक्षावरणं ऊयते विस्तारयतीति विकटोरीः "ऊयी तन्तुसन्तानेधातो-र्बाहुलकात् रीक् प्रत्ययः" [ ऊरयूरी चोररी च विस्तारेऽङ्गीकृतौ त्रय-मित्यजयामरौ ] एवंविधो गुणविशेषो विद्यते यस्याः "शेषाइति शैषि-को प्रत्ययः" एवंविधां विक्टोरियां प्रचक्रे विदधे ॥

भा०—यह निश्चयहै कि केण्टाधिपति ( ड्यूकआफ़्केण्ट ) ने अपने बन्धु-वर्गकेसाथ अधिक शुभलक्षणोपेत अपनीपुत्रीका अपनीइच्छासे कियेहुए यथार्थ नामसे आनन्दपूर्वक विक्टोरिया करके रक्खा ॥ ३ ॥

शिक्षाभिः स्मृतिपरिवेदिनामजस्रं
क्रियाभिः प्रकृतिहितैकहेतुकाभिः ।

---

1. Duke of Kent. 2. Victoria.

दुःख देखकर नियमसे जितेन्द्रिय महारानी विक्टोरियाके लिये तत्कालमें छः नियमों से युक्त शान्तिकारक प्रार्थनापत्रको समर्पण किया ॥ ७ ॥

( कलापकम् )

देशेऽस्मिन्निखिलजना हि राज्यकार्य्ये
भूमीश्यै कृतिमनुसम्मतिं विदध्युः ।
देशोऽयं परिमितमण्डलैर्विभागं
संयायात्क्षितिपतिशासनानुमत्या ॥ ८ ॥

टी०—देश इति । हि यस्माद्धेतोः अस्मिन्निङ्ग्लिशे देशे निखिलजनाः समग्रलोका राज्यकार्य्ये भूमीश्यै राजेश्वर्य्यै कृतिं अनु "लक्षणेत्थं भूताख्यानभागवीप्सासु प्रतिपर्य्यनव इति कर्म्मप्रवचनीयत्वम्" सम्मतिं विदध्युः तथा ऽयं देशः क्षितिपतिशासनानुमत्या महेश्वर्य्याज्ञानुकूलतया परिमितमण्डलै र्विधेयमण्डलै विभागं पृथगंशतां संयायात् शोभनप्रकारेण प्राप्नुयात् ॥

भा०—जिससे कि सम्पूर्णलोग इसदेशमें राज्यविषयक प्रत्येककार्य्यमें महारानीके लिये सम्मतिदेवें तथा यह देश राजेश्वरीकी आज्ञासे परिमितमण्डलों (जिलाओं) में पृथक् पृथक् विभक्तहोजाय ॥ ८ ॥

संज्ञायाः कथनमथान्तरेण पत्रं
स्वीकुर्य्यान्नृपतिरसौ निवेदकस्य ।
येनैषामधिपतयोऽपि मण्डलानां
जायेरन्प्रकृतिहिताय नन्दनेश्या ॥ ९ ॥

टी०—संज्ञाया इति । अथानन्तरं असौ नृपतिर्भूपेश्वरी निवेदकस्य प्रार्थयितुः संज्ञाया नाम्नः कथनमन्तरेण उक्तिं विनापत्रं प्रार्थनापत्रं स्वीकुर्य्यात् अङ्गीकरोतु येनहेतुना एषां मण्डलानां अधिपतयोऽपि अधिकृता अपि नन्दनेश्या करणभूतया प्रकृतिहिताय प्रजासुखार्थं जायेरन् भवेयुः ॥

राज्ये ऽस्मिन्नथ लघुजातिसम्भवानां
वृत्तीनां च कृशतयान्धसामभावात् ।
कृच्छ्राणि प्रचुरतया तदाविरासन्
क्षुत्क्षामाः क्वचिदपि नो सुखं लभन्ते ॥ ६ ॥

टी०—राज्यइति। अथानन्तरं तदा तस्मिन्समये अस्मिन्निंग्लिशेराज्ये लघुजातिसम्भवानां न्यूनजातिसमुत्पन्नानां जनानां वृत्तीनां आजीवनानां कृशतया अल्पभावेन तथा अन्धसां अन्नानां अभावाच्च कृच्छ्राणि दुःखानि स्यात् [कष्टं कृच्छ्रमाभीलमित्यमरः । कृच्छ्रमाख्यातमाभीले पापसान्तपन दिनोरिति मेदिनी ] प्रचुरतया अतिशयेन आविरासन् प्रकटीबभूवुः क्षुत्क्षामाः क्षुधार्ताः क्वचिदपि सुखं आनन्दं नो लभन्ते न प्राप्नुवन्तीत्यर्थान्तरेण समर्थ्यते ॥

भा०—अनन्तर इसइंग्लिशराज्यमें न्यूनजातिकेलोगोंको अल्प आजीविका के होनेसे तथा अन्नके अभावसे बड़े बड़े दुःखहुए क्योंकि क्षुधार्तलोग कहींभी सुख नहींपाते ॥ ६ ॥

दृष्ट्वैतत्सकलजनैः कृतप्रयत्नैः
श्रीमत्यै सपदि पडाश्रवैरुपेतम् ।
शान्त्यर्थं दलमचिरोद्गतातिखेदै-
रानिन्ये नियमवशीकृतात्मबुद्ध्यै ॥ ७ ॥

टी०—दृष्ट्वेति । अचिरोद्गतातिखेदैरल्पकालात्प्राप्तानुशयैः अतएव कृतप्रयत्नैर्विहितोद्योगैः सकलजनैरशेषलोकैः एतद्दुःखं दृष्ट्वा ऽवलोक्य नियमेन वशीकृता आत्मबुद्धिर्यया एवंविधायै श्रीमत्यै नन्दनेश्वर्यै सपदि तत्क्षणे पडाश्रवैः पद्वनियमैरुपेतं प्राप्तं शान्त्यर्थं शान्तिविधायकं दलं प्रार्थनापत्रं आनिन्ये प्राप्यत " कर्म्मणि लिट् " ॥

भा०—अचिरकालसे खेदको प्राप्त अत एव विहितोद्योग समग्र लोगोंने यह

दियेहुए इसतरह पत्रको देखकर उससमय तृतीय और पञ्चम नियमोंको स्वीकारकिया ॥ ११ ॥

वृत्तानामनवगमेन दुःखितानां
लोकानां व्यथितमनोऽनुरञ्जनाय ।
क्षौणीश्या ऽतिलघुपणव्ययेनलभ्यं
स्टैम्पं[1] तत्प्रतिनगरं तदाविरास ॥ १२ ॥

टी०—वृत्तानामिति । वृत्तानां प्रयोजनोदन्तानां अनवगमेन अप्राप्त्या दुःखितानां लोकानां व्यथितमनो बाधितचित्तं अनुरञ्जनायानन्दार्थं क्षौणीश्या राजेश्वर्य्या अतिलघुपणव्ययेन अल्पमूल्येनेति भावः, लभ्यं प्राप्यं तत्प्रसिद्धं स्टैम्पं तदा तस्मिन्समये प्रतिनगरं पुरं पुरं प्रति आविरास प्रकटीबभूव ॥

भा०—प्रियजनवृत्तान्तोंके न पानेसे दुःखितलोगोंके सखेदचित्तको प्रसन्नकरनेके लिये महारानीविकटोरियासे अल्पमूल्यप्राप्य डाकटिकट उसीसमय प्रत्येक नगरमें प्रकटहुआ ॥ १२ ॥

हीनाशाण्टर्रैकि[2]निवासिनो विलोक्य
विद्वेषी यवनकुलो हि मिश्र[3]वासी ।
संग्रामे महमदली[4]ति नामधेय-
स्तान्रोषादतिचपलः पराविजिग्ये ॥ १३ ॥

टी०—हीनेति । हीति निश्चयेन अतिचपलश्चञ्चलप्रकृतिः मिश्रवासी मिश्रदेशीयो यवनकुलो यवनवंशोत्पन्नो विद्वेषी द्वेषपरो महमदली इति नामधेयं यस्यैवंविधः कश्चिद्राजा हीनाशान् नष्टमनोरथान् टर्किनिवासिनोजनान् विलोक्य दृष्ट्वा रोषादहेतुकक्रोधात् संग्रामे तान् टर्किजनान् पराविजिग्ये व्यजेष्ट ॥

1. Stamp (Postage). 2. Turkey. 3. Egypt.
4. Mehemet.

भा०—अनन्तर राजेश्वरी निवेदकपुरुषके नामसे रहितपत्रको स्वीकारकरे जिसमें कि इनसब ज़िलाओंके रक्षक प्रजाहितार्थ राजेश्वरीसे नियत कियेजायँ ॥ ९ ॥

देशे ऽस्मिन्प्रतिशरदं सभाऽपि नव्या
जायेत प्रकृतिहितैकतानवृत्तिः ।
हीनो वा द्रविणयुतो ऽथवा मनुष्यः
सभ्यःस्याद्धरणिधराज्ञया नितान्तम् ॥ १० ॥

टी०—देश इति । अस्मिन्देशे प्रकृतेर्यद्धितं शुभं तदेकताना निरन्तरमनुलग्ना वृत्तिर्यस्या एवंविधा सभाऽपि प्रतिशरदं "अव्ययीभावेशरत्प्रभृतिभ्य इति समासान्तष्टच् प्रत्ययः" प्रतिवर्षम् नव्या नूतना जायेत भवेत् तथा हीनोदरिद्रोवा अथवा द्रविणयुतो मनुष्यो धरणिधराज्ञया नन्दनेश्यनुशासनेन नितान्तमत्यन्तं सभ्यः स्यात् ॥

भा०—इसदेशमें प्रजाका हित चाहनेवाली पार्लिमेण्टसभा प्रत्येक संवत्सरमें नूतन बदलजाय तथा मनुष्य धनहीनहो अथवा धनाढ्यहो राजेश्वरीकी आज्ञासे सभ्य होजाय ॥ १० ॥

वृत्तिं स्वां निखिलसभासदो लभेर-
न्नित्येवं दलमखिलैर्जनैः प्रदत्तम् ।
दृष्ट्वैतत्सुनिभृतचक्षुषा महेशी
मध्यौपान्तिकनियमौ तदा हि मेने ॥ ११ ॥

टी०—वृत्तिमिति । निखिलसभासदः सभ्याः स्वांवृत्तिं वेतनं लभेरन् प्राप्नुयुः महेशी राजेश्वरी अखिलैः समग्रैर्जनैः प्रदत्तं इत्येवं इत्थं एतद्दलं पत्रं सुनिभृतचक्षुषा निश्चलदृष्ट्या दृष्ट्वा ऽवलोक्य हि यस्मात् कारणात् तदा मध्यौपान्तिकनियमौ पण्नियमानां नियमद्वयक्रमानुसारेण भागत्रयं भवति अतस्तृतीयपञ्चमौ नियमौ मेने स्वीचकार ॥

भा०—सम्पूर्णसभ्यलोग अपने आजीवनको पावें महारानीने समग्रलोगोंके

भा०—रूसदेशाधिपति महमदअलीका मित्रहै वह महमदकी सहायताको पाकर सारे भारतदेशको जीतेगा इसतरह ऐंग्लिशलोगोंने शङ्काकी ॥ १५ ॥

येनैते खलु बहुवाहिनीसमेता
अफ्गानिस्थलमभितो विगाहमानाः ।
घोरेऽस्मिन्युधि तरसा परान्निहत्य
यज्ञान्तं फलमिव काबुलानगृह्णन् ॥ १६ ॥

टी०—येनेति । खल्विति निश्चयेन येन कारणेन बहुवाहिनीसमेताअनल्पसैन्योपेताः । अतएव अभितः समन्ताद् अफगानिस्थलं विगाहमाना-अवलोडयन्तः एते ऐंग्लिशा अस्मिन्घोरे भयङ्कर युधि संग्रामे तरसा बलेन पराञ्छत्रून् निहत्य विनाश्य यज्ञान्तं यज्ञसमाप्तिजनितं फलमिव कावुलान् देशविशेषान् अगृह्णन् आददिरे ॥

भा०—यह निश्चयहै कि जिसकारण बहुतसैन्योंसेयुक्त होकर सबतरफसे अफ्गानिस्थलको अवलोडन करतेहुए ऐंग्लिशलोगोंने इस घोरसंग्राममें बड़ेबलसे शत्रुओंको मारकर यज्ञसमाप्तिसमुत्पन्न फलकी नाईं काबुलदेशोंको स्वायत्त किया ॥ १६ ॥

अफ्गानिस्थलमनुजान्नियोद्धुकामान्
दृष्ट्वैवं युगपदथैंग्लिसाः समन्तात् ।
शत्रूणां कलकलनादभीतभीता-
स्तत्स्थानात्सपदि पलायनं प्रचक्रुः ॥ १७ ॥

टी०—अफ्गानीति । अथानन्तरं एवं अमुना प्रकारेण समन्तादभितो युगपत् एकवारमेवाफगानिस्थलस्य मनुजाँल्लोकान् नियोद्धुकामान् "तुम्काममनसोरपीति तुमो मकारस्य लोपः" युद्धाभिलाषिणो दृष्ट्वा शत्रूणां वैरिणां कलकलनादेन भीतभीता अतिभीता ऐंग्लिशलोकास्त-

1. Afghanistan. 2. Cabul.

भा०—चलस्वभाव मिश्रदेशका रहनेवाला द्वेषयुक्त यवनकुलोत्पन्न महमद्अलीने दुर्बल टरकिके लोगोंको देखकर बडेरोपसे संग्राममें उनको जीतलिया ॥ १३॥

दोःशाली सपदि स पामरष्टनाख्यः[1]
साहाय्यं युधि रशियेंग्लिशादिपुंसाम् ।
प्राप्यैतं यवनजितं हि टर्किदेशं
जग्राह प्रवलजवोऽथ वैरिहस्तात् ॥ १४ ॥

टी०—दोःशालीति । अथानन्तरं हीति निश्चयेन प्रवलजवो ऽति वेगयुक्तो दोःशाली बाहुबलोपयुक्तः स प्रसिद्धः पामरष्टनाख्यः पामरष्टनोनामवीरः सपदि तत्काले युधि संग्रामे रशिया च इंग्लिशादयश्च ये देशास्तद्वासिनां पुंसां साहाय्यं प्राप्य यवनजितं महमद्गृहीतं एतं टर्किदेशं वैरिहस्तात् शत्रुधिकाराज्जग्राह गृहीतवान् ॥

भा०—अनन्तर यह प्रसिद्धहै कि बडावेगवाला बाहुबलोपयुक्त उस प्रसिद्ध पामरष्टननामकवीरने रशिया तथा इंग्लिशादि देशीयलोगोंकी सहायता पाकर यवनगृहीत उस टर्किदेशको शत्रुसे ग्रहणकिया ॥ १४ ॥

रूसेशो[2] महमदभूपमित्रमस्ति
साहाय्यं परमुपलभ्य यावनं सः ।
निःशेषं किल युधि भारतं विजेता
शङ्कां तां दधुरिति चैंग्लिशास्तदानीम् ॥ १५ ॥

टी०—रूसेशइति । रूसेशो रूसदेशाधिपो महमदभूपस्य मित्रं सुहृदस्ति स रूसेशो यावनं यवनसम्बन्धि परं उत्कृष्टं साहाय्यं सहायतां उपलभ्य प्राप्य किलेति निश्चयेन युधि संग्रामे निःशेषं समग्रं भारतं देशं विजेता जेष्यति ऐंग्लिशाजनास्तदानीं तस्मिन्समये इतीत्थं तां पूर्वोक्तां शङ्कां दधुः दध्नुः ॥

1. Palmerston. 2. Russia.

भा०—यह प्रसिद्धहै कि बड़ाबलवान् पोलकनामा सेनापतिने अपनी सेनाकी इसकथाको सुनकर क्रोधयुक्त होकर जलालबादनगरसे आफ्गानिस्थलको आकर शत्रुओंको जीत बन्धनयुक्त ऐंग्लिशों को छुटादिया ॥ १९ ॥

सन्धानान्महमदभूपतिं च पीठे
संस्थाप्याशु स निजदेशमाजगाम।
तेजस्वी नयतितरां कृतापराधं
शत्रुं चानतमधिकां समुन्नतिं हि ॥ २० ॥

टी०—सन्धानादिति। सपामरष्टनाख्योवीरः सन्धानत् पुनरतैः सह मैत्रीकरणात् महमदभूपतिं यवनराजं च पीठे राज्यासने संस्थाप्य निवेश्य आशु शीघ्रं निजदेशं इंग्लिशं विषयं आजगाम प्राप हीति निश्चयेन तेजस्वीपुरुषः पूर्वं कृतापराधं पश्चात् आनतं शरणागतं च शत्रुं वैरिणं अधिकां समुन्नतिं वृद्धिं नयतितराम् प्रापयतीत्यर्थान्तरन्यासेन समर्थ्यते॥

भा०—उसपामरष्टननामक सेनापतिने पदच्युत महमदभूपतिको मिलापकरने से राज्यासनपर स्थापितकर जल्दीही अपने स्थानको चलागया क्योंकि यह बात प्रसिद्धहै कि तेजस्विपुरुष पहिले तो कृतापराध पश्चात् शरणागत शत्रुको अधिक उन्नतिको प्राप्तकरदेता है ॥ २० ॥

ब्राइट्कोब्डनमनुजौ स्वतन्त्रवृत्तिं
क्रेयार्थे व्यवहृतये ऽन्धसामकार्ष्टाम्।
दृष्ट्वैवं समधिकशेमुषीवरिष्ठाः
स्वीचक्रुः प्रकृतिहितं सभासदस्तत् ॥ २१ ॥

टी०—ब्राइडिति। ब्राइट्च कोब्डनश्च तौ मनुजौ अन्धसामन्नानां क्रेयार्थे क्रयविषये व्यवहृतये व्यवहाराय स्वतन्त्रवृत्तिं स्वेच्छावर्तनं वणिजामिति शेषः अकार्ष्टाम् व्यधाताम् समधिकशेमुषीवरिष्ठा योग्यबुद्धि-

1. Bright. 2. Cobden.

दस्थानात् अफ़गानिस्थलात् सपदि तत्काले पलायनं अपक्रमं प्रचक्रुर्विदधुः ॥

भा०—अनन्तर इसतरह चारोंतरफसे एकबारही युद्धकरनेकी इच्छावाले अफगानिके लोगोंको देखकर उन शत्रुओंके कलकलशब्दसे भयभीत ऐंग्लिशलोग उस अफ़्गानिस्थलसे उसीसमय भागगये ॥ १७ ॥

ये तत्रैंग्लिशपुरुषाः स्थिताबभूवु-
रफ़्गानिस्थलमनुजाश्च तान्नितान्तम् ।
कारायामतिदृढलोहबन्धनाया-
मानिन्युर्ह्यपकृतिदण्डदानबुद्ध्या ॥ १८ ॥

टी०—य इति । ये ऐंग्लिशपुरुषास्तत्राफ़गानिस्थले स्थिता बभूवुः हीति निश्चयेन अफगानिस्थलमनुजाश्च तानैंग्लिशान् नितान्तमत्यन्तं अतिदृढलोहबन्धनायां अयःशृङ्खलादिविशिष्टायां कारायां बन्धनवेश्मनि अपकृतेरपकारस्य यद्दण्डदानं तद्बुद्ध्या आनिन्युर्निवेशयाञ्चक्रुः ॥

भा०—जो ऐंग्लिशलोग वहां रहगये थे अफ़्गानिके लोगोंने उनको हठसे अत्यन्त दृढलोहबन्धनयुक्त कारागारमें बदलालेनेके लिये रखदिया ॥ १८ ॥

सैन्येशः प्रथितबलो हि पोलकाख्यः[2]
श्रुत्वैतां स्वबलकथां विवृद्धमन्युः ।
सम्प्राप्यात्र च नगराज्जलालबादा-[3]
ज्जित्वारीन्प्रसितियुतानमोचयत्तान् ॥ १९ ॥

टी०—सैन्येश इति । हीति निश्चयेन प्रथितबलः प्रख्यातपराक्रमः पोलकाख्यः सैन्येशः सेनापतिः एतां स्वबलकथां निजसैन्यवृत्तान्तं श्रुत्वाऽकर्ण्य विवृद्धमन्युः समुत्पन्नक्रोधः सन् जलालबादान्नगराच्च अत्राफगानिस्थले सम्प्राप्योपगत्य अरीञ्छत्रून् जित्वा प्रसितियुतान् बन्धनोपेतान् तानैंग्लिशान् अमोचयत् बन्धननिर्मुक्तानकरोत् ॥

1. Afghanistan. 2. Pollock. 3. Jellalabad.

न्यायविधानादिभिरनिशं अहरहः समन्तादभितः क्षितितलं पृथ्वीं नितान्तमत्यन्तं पालयन्ती गोपायन्ती तथाऽभिनवं नूतनं मृदु कोमलं गात्रं शरीरं यस्यास्तथा यौवनेन उल्लासिता देदीप्यमाना श्रीः शोभा यस्या एवंभूता ईश्वरी राजेश्वरी निजां परिणयस्य विवाहस्य चर्चां विचारणां आचचार विदधे। अस्मिन्पद्ये मालिनीवृत्तम् ॥

भा०—अनन्तर नीतिसे संशोधित राज्यकार्य्योंसे चारोंतर्फ पृथ्वीको अत्यन्त पालनकरतीहुई अतिसुकुमाराङ्गी युवतिश्रेष्ठ श्रीराजेश्वरी विकटोरिया अपने विवाहकी चर्चा चलानेलगी ॥ २३ ॥

इति उर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये विकटोरियाख्यराजेश्वरीजन्मराज्यप्राप्तिवर्णनन्नामाष्टमः सर्गः ॥ ८ ॥

श्रेष्ठाः सभासदः एवमित्थं दृष्ट्वा प्रकृतिहितं प्रजाक्षेमकरं तत्पूर्वोक्तं स्वतन्त्रत्वं स्वीचक्रुरङ्गीकुर्वन्तिस्म ॥

भा०—आड्ट् और कोब्डननामक दो पुरुषोंने अन्नके क्रयविक्रयव्यवहारार्थ व्यापारियोंको स्वतन्त्रतादेदी बुद्धिविशिष्ट सभासदोंने इसबातको देखकर प्रजाके लाभदायक उसस्वातन्त्र्यनियमको स्वीकारकिया ॥ २१ ॥

दुर्भिक्षात्क्षुधितजनाँस्तदारलैण्डे
दृष्ट्वा तान्परिभरितुं कृतप्रयत्नम् ।
पीलाख्यं सचिवमथैंग्लिशा निवार्य्य-
तत्स्थाने रसियलसंज्ञकं प्रणिन्युः ॥ २२ ॥

टी०—दुर्भिक्षादिति । तदा तस्मिन्समये ऐंग्लिशाजना दुर्भिक्षात् अन्नाभावात् आरलैंण्डे देशे क्षुधितजनान् बुभुक्षार्तांल्लोकान् दृष्ट्वा निरीक्ष्य तान् क्षुत्क्षामान् परिभरितुं पोषयितुं कृतप्रयत्नं विहितोद्योगं पीलाख्यं पीलनामकं सचिवं मन्त्रिणं निवार्य्य स्थानाद् दूरीकृत्य अथानन्तरं तत्स्थाने रसियलसंज्ञकं पुरुषं प्रणिन्युः प्रापयाम्बभूवुः "उपसर्गादसमासेऽपीत्यादिना णत्वम्" "नीधातोर्द्विकर्म्मकत्वात्कर्म्मद्वयम्" ॥

भा०—ऐंग्लिशलोगोंने आरलैण्डदेशमें अन्नाकालसे लोगोंको बुभुक्षार्त देखकर उनको पोषणकरनेको उद्यतपीलनामक मन्त्रीको पदसे दूरकर अनन्तर उसके स्थानपर रसियलनामकपुरुषको रखदिया ॥ २२ ॥

अथ नयपरिशुद्धै राज्यकार्य्यैः समन्तात्
क्षितितलमनिशं तत्पालयन्ती नितान्तम् ।
अभिनवमृदुगात्री यौवनोल्लासितश्री-
र्निजपरिणयचर्चामाचचारेश्वरीयम् ॥ २३ ॥

टी०—अथेति । अथानन्तरं नयपरिशुद्धैर्नीतया शुद्धिंगतै राज्यकार्य्यै-

1. Peel. 2. Russell.

भा०—महारानीविकटोरियाने शुद्धवंशोत्पन्न स्थिरबुद्धि और सौन्दर्य्यगुणोपेत मधुरवाणीवाला कामदेवाकृति एलवर्टको अपनापतिकरके चाहा ॥ २ ॥

निजप्रतिकृतिमेलवर्टगेहं
धरणिधराऽन्वनयत्सखीकरेण ।
स्थिरनियमवशेन्द्रियस्य तस्य
समजनि सैव विमोहनैकहेतुः ॥ ३ ॥

टी०—निजेति । धरणिधराऽवनिपा सखीकरेण वयस्ययेतिभावः निजप्रतिकृतिं स्वप्रतिमां एलवर्टगेहं अन्वनयत् प्रापयत् "नीधातोर्द्विकर्मकत्वात् कर्मद्वयम्" सा एव प्रतिमा स्थिरनियमेन वशानि वशीभूतानि इन्द्रियाणि विषयीणि यस्यैवंविधस्य तस्यैलवर्टस्य विमोहनैकहेतुर्वशीकरणोपायः समजनि अभूत् ॥

भा०—महारानीने अपनी प्रतिमा (फोटो) को किसी सखीकेहाथसे एलवर्टके घरमें प्राप्तकरादी जो प्रतिमा कि दृढनियमसे जितेन्द्रिय उस एलवर्टके विमोहनकी एककारण होगई ॥ ३ ॥

कथमियमतिरूपशालिनीका
रतिरिव पञ्चशरं विनाऽऽजगाम ।
विनिहितनयनश्चिरेण पश्चा-
दवनिभराप्रतिमां स निश्चिकाय ॥ ४ ॥

टी०—कथमिति । अतिरूपशालिनी सौन्दर्य्यगुणोपेता इयं युवतिः पञ्चशरं कामदेवंविना रतिरिव कथं केनहेतुना का अनिर्वचनीया आजगाम प्राप्तवतीबभूव पश्चाच्चिरेण बहुकालपर्य्यन्तं विनिहितनयनो दत्तदृष्टिः स एलवर्टः अवनिभराप्रतिमां राजेश्वरीप्रतिकृतिं निश्चिकाय निश्चययुक्तामकरोत् ॥

भा०—अतिसौन्दर्य्यगुणोपेत यह युवति कामदेवके बगैर रतिकीनाईं किसहेतु

# नवमः सर्गः ॥



अथ सकलमहीधरा महेशी
सुविशदसैक्सकुवर्गभूपसूनुम् ।
युवतिशतनिरीक्षणैकलक्ष्य-
मभिनवयौवनमैक्षतैलवर्टम् ॥ १ ॥

टी०—अथेति । अथानन्तरं सकलमहीधरा समग्रपृथिव्यारक्षित्री महेशी राजेश्वरी विक्टोरिया अभिनवयौवनं नूतनवयस्कं अतएव युवतिशतानां निरीक्षणमवलोकनं तत्रैकं लक्ष्यं एकदृश्यं सुविशदो विस्तृतो यः सैक्सकुवर्गो देशस्तस्य भूपस्य सूनुं पुत्रं एलवर्टनामपुरुषं ऐक्षतापश्यत् । अस्मिन्सर्गे पुष्पिताग्रावृत्तम् लक्षणमुक्तम् ॥

भा०—अनन्तर समग्रपृथ्वीकी रक्षाकरनेवाली राजेश्वरीने नूतनवयस्क तथा युवतिशतनेत्रोंके एकदृश्य विस्तृतसैक्सकोवर्गदेशाधिपतिके पुत्र एलवर्टको प्रेमदृष्टिसे देखा ॥ १ ॥

अतिशुचिकुलसम्भवं वदान्यं
स्थिरधिषणं विकसन्मुखारविन्दम् ।
प्रियवचनमनङ्गतुल्यरूपं
तमवनिपा निजकान्तमाचकाङ्क्ष ॥ २ ॥

टी०—अतीति । अवनिपा धरेशी अतिशुचिकुलसम्भवं शुद्धवंशसमुद्भवं वदान्यं दातृगुणोपेतं स्थिरधिषणं दृढबुद्धिं विकसन्मुखारविन्दं यौवनोद्भासितवदनाम्बुजं प्रियवचनं मधुरभाषिणं तथा अनङ्गतुल्यरूपं कामाकृतिं तं एलवर्टं निजकान्तं स्वप्रियतमं आचकाङ्क्ष इयेष ॥

1. Saxecoburg. 2. Albert.

भा०—उस राजपुत्र एलवर्टने सुशोभित दशनकान्तिवाली अरालकेशी उस महारानी विकटोरियाको बहुतप्रकारसे प्रशंसाकर उसकी अपनेसमीप बुलानेके प्रयोजनविशिष्ट प्रेमसेभेजीहुई पत्रिकाको पढ़ा ॥ ६ ॥

अयि दयित ममैव चित्तवृत्तिं
स्वयमपहृत्य गतोऽसि दूरदेशम्।
सहृदयजनवैपरीत्यमेत-
द्यदसहतापमनीहितं ददासि ॥ ७ ॥

टी०—अयीति। अयीति कोमलामन्त्रणे हे दयित प्रिय! त्वं मम एव चित्तवृत्तिं अपहृत्य आच्छिद्य दूरदेशं गतोऽसि यद्यस्मात् अनीहितमनाकांक्षितं असहतापं दुःसहसंतापं ददासि प्रयच्छसि एतत् सहृदयजनानां वैपरीत्यं विपरीतभावो विद्यते। अत्राभिलाषविषयको विप्रलम्भः शृङ्गारः पूर्वरक्ताभवेन्नारीपुमान्पश्चात्तदिङ्गितैरिति नियमादत्र सौरस्यं प्रतिभाति। परिवृत्तिर्विनिमयो योऽर्थानांस्यात्समासमैरितिलक्षणादत्र परिवृत्तिरलङ्कारः॥

भा०—हे प्रिय! मेरीचित्तवृत्तिको आपही अपहरणकर दूरदेशको तुम चलेगये जोकि नहींचाहाहुआ असह्य तापको देतेहो यह बात सज्जनोंके विपरीतहै ॥ ७ ॥

तदनघ सहसैहि कान्तमूर्त्ते!
मुखशशिनं स्पृहयामि वीक्षितुं ते।
रजनिकरमरीचिबद्धभावा
प्रमदभरेव चकोरिका निशासु ॥ ८ ॥

टी०—तदिति। तत्तस्मात्कारणात् कान्ता रमणीया मूर्तिर्यस्य तत्संबुद्धौ कान्तमूर्ते हे अनघ पवित्र! सहसा शीघ्रं एहि आगच्छ ते तव मुखशशिनं वदनचन्द्रं निशासु रात्रिषु रजनिकरस्य चन्द्रस्य मरीचिषु किरणेषु बद्धोभावोऽभिप्रायो यस्या एवंविधा प्रमदभरा हर्षोपेता चकोरिका

से कौनआई है पीछे बहुतकालतक दत्तदृष्टिहोकर एल्बर्टने राजेश्वरीकी प्रतिमाको निश्चय किया ॥ ४ ॥

सकलभुवननिर्मितिप्रवीणः
कमलजनिर्जगदेककार्य्यखिन्नः ।
व्यरचयदिति तां ननूच्चसंस्थां
हरिणदृशं स्वमनोविनोदहेतुम् ॥ ५ ॥

टी०—सकलेति । नन्विति निश्चयेन सकलं समग्रं यद्भुवनं तस्या या निर्मितिर्निर्माणं तत्र प्रवीणः कुशलः कमले जनिर्जन्म यस्यैवंविधो ब्रह्मा, जगदेवैककार्य्यं तत्र खिन्नः खेदयुक्तः सन् इतिहेतोः स्वमनसो यो विनोद आनन्दोपायस्तस्यहेतुं कारणं तथा उच्चसंस्थां सर्वोपरिवर्तमानां अतिमनोहरवस्तुनः उच्चस्थाने स्थितित्वादितिभावः एवंविधां हरिणदृशं मृगनयनां तां राजेश्वरीं व्यरचयदुदपादयत् ॥

भा०—जगत्कार्य्यमें खेदयुक्त समग्रभुवनोंके बनानेमें कुशल ब्रह्माने इसी कारण स्वमनोविनोदार्थ उच्चस्थानास्थित हरिणनेत्रसदृश नेत्रवाली इस राजेश्वरी विक्टोरियाको उत्पन्नकिया ॥ ५ ॥

बहुविधमनुवर्ण्य तां सुकेशीं
सुरुचिरदन्तरुचिं स राजपुत्रः ।
प्रणयप्रहितचीटिकां च तस्या-
निज सन्निधागमनार्थिकां पपाठ ॥ ६ ॥

टी०—बहुविधमिति । स राजपुत्रएल्बर्टः सुरुचिरा देदीप्यमाना दन्तरुचिर्दशनकान्तिर्यस्या एवंविधां सुकेशीं सुकुन्तलां तां राजेश्वरीं बहुविधमनेकप्रकारं अनुवर्ण्य वर्णयित्वा तस्या राजेश्वर्या निज सन्निधागमनार्थिकां स्वसन्निधिमागमनप्रयोजनविशिष्टां प्रणयेन प्रहिता प्रेषिता या चीटिका पत्रिका तां च पपाठ अवाचयत् ॥

भा०—प्रियतमके आगमनको सुनकर उसकेदर्शनको चाहतीहुई राजेश्वरीने मान्यलोगोंसे राजकुमार एलवर्टको विस्तृतभवनमें प्राप्तकरादिया ॥ १० ॥

प्रियतमविरहार्दिताङ्गयष्टि-
मवनिभृतामधिपां सुचारुभावाम्।
स सुखयितुमना इवोष्णरश्मि-
रपहृतरश्मिचयोऽस्तमाजगाम ॥ ११ ॥

टी०—प्रियेति। स प्रसिद्ध उष्णरश्मिः सूर्य्यः प्रियतमस्य यो विरहस्तेन अर्दिता पीडिता अङ्गयष्टिर्यस्या एवंविधां सुचारुभावां शोभनाभिप्रायां अवनिभृतां राज्ञां अधिपां श्रेष्ठां सुखयितुमना आनन्ददानेच्छुरिव अतएव अपहृतरश्मिचयः संगृहीतकिरणनिवहःसन् अस्तमवसानं आसमन्ताज्जगाम प्राप। अत्रोत्प्रेक्षालङ्कारः ॥

भा०—सूर्य्यभी प्रियतमविरहसे दुःखित शुभाभिप्राययुक्त महारानी विकटोरियाको सुखदेनेकी इच्छासे अपने उष्णकिरणोंको संहरणकर अस्तंगत होगया ॥ ११ ॥

रजनितिमिरगुण्ठनं निरस्य
स्फुरितकरो रजनीकरोऽभिरक्तः।
अवनियुवतिकां मुदाभिनन्दन्
पतिरमणीरसमन्वबोधयत्ताम् ॥ १२ ॥

टी०—रजनीति। अभिरक्तो रक्तवर्णः चन्द्रस्योदयकाले रक्तवर्णत्वाद् यद्वा अनुरक्तः अतएव स्फुरितकरः प्रदीप्तकिरणः वा वनिताङ्गस्पर्शार्थं चञ्चलहस्त एवंविधो रजनीकरश्चन्द्रः कश्चित्पुरुषविशेषश्च रजनितिमिरं रात्र्यन्धकारएव गुण्ठनं ऊर्ध्वावरणवस्त्रं रात्र्यन्धकारवत् कृष्णसिचयान्तश्च निरस्यापहृत्य अवनियुवतिकां जगतीरूपस्त्रियं यद्वा अवन्याख्ययुवतीं मुदा हर्षेण अभिनन्दन् प्रसन्नांकुर्वन् तां राजेश्वरीं पतिरमणीरसं जम्पत्योःसुखं अन्वबोधयज्ज्ञापयाञ्चकार अत्र साङ्गरूपकालङ्कारः

जीवंजीविकाइव [ जीवंजीवश्चकोरकइत्यमरः ] वीक्षितुमवलोकितुं स्पृहयामि वाञ्छामीत्यत्रोपमालङ्कारः ॥

भा०—हे सुन्दर ! जल्दी आओ रात्रियोंमें चन्द्रमाके किरणोंमें बद्धाभिप्रायवाली अतएव हर्षोपेत चकोरिकाकी नाईं मैं तुम्हारे मुखचन्द्रको देखना चाहतीहूं॥ ८॥

इति दलमवलोक्य नन्दनेश्या-
स्त्वरितमना नृपसूनुरेलवर्टः[1] ।
अथ निजनगरात्स्वबन्धुयुक्तो
धरणिधरान्तिकमाव्रजत्तदानीम् ॥ ९ ॥

टी०—इतीति । अथानन्तरं नृपसूनुः एलवर्टः इतीत्थं नन्दनेश्या राजेश्वर्य्या दलं पत्रमवलोक्य दृष्ट्वा त्वरितमनास्त्वरोपेतचेताःसन् तदानीं तस्मिन्समये निजनगरात्स्वपुरात् स्वबन्धुयुक्तो निजभ्रातृसहितो भूत्वेति· शेषः धरणिधरान्तिकं राजेश्वरीसमीपं आव्रजत् प्रापत् ॥

भा०—राजपुत्र एलवर्ट इसतरह नन्दनेशीके प्रेमपत्रको देखकर शीघ्रताके साथ अपने ज्येष्ठभ्राताके सहित महारानीके पास आपहुंचा ॥ ९ ॥

श्रुतदयितसमागमा नरेशी
प्रियतमदर्शनकौतुकाकुलाङ्गी ।
भवनमतिविशालमेलवर्ट-
मधिकृतलोकशतैस्तदा निनाय ॥ १० ॥

टी०—श्रुतेति । तदा तस्मिन्समये श्रुतोदयितस्य समागमो यया अतएव प्रियतमस्य दर्शनं एव कौतुकं तेन आकुलानि अङ्गानि यस्याः एवंविधा नरेशी सा अधिकृता अधिकारिणो लोकास्तेषां शतैः एलवर्टं राजपुत्रं अतिविशालं विस्तृतं भवनं प्रासादं निनाय प्रापयामास " नीधातोर्द्विकर्मकत्वात्कर्म्मद्वयम् ॥

1. Albert.

वर्तमानस्त्वम् " इतीत्थं जनौघैर्लोकानिवहैरीरितं कथितं पुनर्भूयः सकलेषु दिगन्तेषु गतं प्राप्तं आविरासीत् प्रकटीबभूव ॥

भा०—उससमय इस १८४० ईसवीमें प्रशंसनीय राजेश्वरीका विवाहहोता है इसतरह जनसमुदायोंका कथन पुनः सारेदिगन्तोंमें फैलगया ॥ १४ ॥

इति धरणिभृतो निशम्य वार्ता
समुपययुः सुमदं दिगन्तरेभ्यः ।
भवति नृविसरो लघूत्सवेऽपि
किमुत महीपतिपालिकामहेऽस्मिन् ॥ १५ ॥

टी०—इतीति । धरणिभृतो राजानः इति जनोदीरितां वार्तां निशम्य श्रुत्वा दिगन्तरेभ्य आशाभ्यः सुमदं हर्षयुक्तं यथा भवति तथा समुपययुः आजग्मुः नृविसरो जनस्तोमो लघूत्सवे ऽल्पोत्सवे ऽपि भवति अस्मिन् महीपतिपालिकामहे राजेश्वरीविवाहमहोत्सवे किमुत किमुवक्तव्यम् इत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—सब राजालोग इसतरह जनोदीरित वार्ताको सुनकर दिगन्तरोंसे नन्दन-नगरमें बड़े हर्षसे आगये क्योंकि छोटे उत्सवमें भी जनसमुदाय होताहै और इस महारानीके विवाहमहोत्सवमें तो क्याही कहनाहै ॥ १५ ॥

अथ खलु पुरवासिनः समन्ता-
न्नववयसौ च वधूवरावुभौ तौ ।
रतिकुसुमशराविवेक्षितुं ते
निजगृहकर्म्म विहाय तत्र जग्मुः ॥ १६ ॥

टी०—अथेति । अथानन्तरं खल्विति निश्चयेन समन्तादभितस्ते पुरवासिनः पौरा नववयसौ नूतनवयस्कौ तावुभौ वधूवरौ रतिकुसुमशरौ रतिकामौ इव ईक्षितुमवलोकयितुं निजगृहकर्म्म स्वगृहकार्य्यं विहाय परित्यज्य तत्र विवाहमन्दिरसन्निधौ जग्मुः ईयुः । अत्रोपमालङ्कारः ॥

रूपकंरूपितारोपाद्विषये निरपह्नवे इति लक्षणात् । श्लेषालङ्कारश्च ॥

भा०—उदयसमयमें रक्तवर्ण तथा प्रदीप्तकिरण चन्द्रमाने रात्रितिमिररूप गुण्ठनको दूरकर पृथ्वीरूप युवतिको हर्षसे आनन्दितकर राजेश्वरीको पति और पत्नीका सुख बोधनकराया ॥ १२ ॥

कृतसमितिसुसम्मतिर्नृपेशी
विदितनराधिपसूनुचित्तभावा ।
विहितनिजविवाहमङ्गलाङ्गा
स्वकुलपुरोधस आह्वयत्तदानीम् ॥ १३ ॥

टी०—कृतेति । तदानीम् विदितो नराधिपसूनोरेलवर्टस्य चित्तस्य भावोऽभिप्रायो यया अतएव कृता समितेः सभायाः सुसम्मतिर्यया अतएव विहितानि निजविवाहमङ्गलस्याङ्गानि स्नानादीनि यया एवंविधा नृपेशी राजेश्वरी स्वस्य ये कुलपुरोधसः पुरोहितास्तान्सर्वान् आह्वयदाकारयतिस्म । अत्र काव्यलिङ्गालङ्कारः काव्यलिङ्गं हेतोर्वाक्यपदार्थता इति लक्षणात् ॥

भा०—उससमय राजेश्वरीने राजपुत्र एलवर्टके चित्ताभिप्रायको पाकर और पार्लिमेण्ट की सम्मतिलेकर अपने विवाहमङ्गलके स्नानादिक अङ्गोंकोकर अपने कुलपुरोहितों ( पादरियों ) को बुलालिया ॥ १३ ॥

नभयुगगजभूमिते शकेऽस्मिन्
वरतनुपाणिनिपीडनं प्रशस्यम् ।
भवति पुनरितीरितं जनौघैः
सकलदिगन्तगतं तदाविरासीत् ॥ १४ ॥

टी०—नभेति । तदा तस्मिन्समये नभयुगगजभूमिते चत्वारिंशदधिकाष्टादशशतमिते ऽस्मिन् क्रैष्टशके प्रशस्यं स्तुत्यं वरतनुपाणिनिपीडनं राजेश्वरीविवाहो भवति जायते “ वर्तमानसामीप्ये वर्तमानवद्वा इति

म्बनविभावः महोत्सव उद्दीपनविभावः अवलोकनादि अनुभावः त्वरा व्यभिचारिभावः रत्युत्साहः स्थायिभावः तज्ज्ञे सामाजिके शृङ्गार-रसनिष्पत्तिः ॥

भा०—अनन्तर एलवर्टको विवाहमण्डपको जातेहुए सुनकर उसीसमय पहिले मैं पहिले मैं इसतरहसे शीघ्रताको प्राप्त शतशः युवतियां उसको देखनेके लिये चारोंतरफसे आपहुंचीं ॥ १८ ॥

विकसितवदनाम्बुजव्रजानि
स्मितदशनावलिकेसराणि तासाम्।
अभिनवमधुगन्धसौरभाणी-
क्षणमधुपानि शरीरकाणि रेजुः ॥ १९ ॥

टी०—विकसितेति। तत्र विवाहमन्दिरसमीपे विकसितानिवदनान्येवाम्बुजानि कमलानि तेषां व्रजा निवहा येषां तथा स्मितेनेषद्धासेन दृश्यमाना या दशनावलिर्दन्तपंक्तिः सैव केसरो येषां तथा अभिनवं नूतनापीतं यन्मधुमद्यं तस्य गन्धेन सम्बन्धेन सौरभाणि सुगन्धयुक्तानि तथा ईक्षणानि नेत्राण्येव मधुपाभ्रमरा येषु तथाविधानि तासांस्त्रीणां शरीरकाणि वर्ष्माणि "अनुकम्पायां कन् प्रत्ययः" रेजुः शुशुभिरे। अत्र रूपकालङ्कारः ॥

भा०—उस विवाहमन्दिरसमीप प्रफुल्लित मुखरूपीकमल समूहवाले तथा ईषत् हाससे विनिःसृत दन्तपङ्क्तिरूपकेसराविशिष्ट तथा नूतनगृहीत मद्यसम्बन्धरूपी मकरन्दसुगन्धवाले तथा नेत्ररूपी भ्रमरविशिष्ट उन स्त्रियोंके शरीर सुशोभित हुए ॥ १९ ॥

अथ धरणिधरात्मजो वरीयान
मनुजसहस्रसमावृतः समन्तात्।
परिणयभवनं प्रवेष्टुकामो-
युवतिहृदीव विवेश राजमार्गे ॥ २० ॥

टी०—अथेति। अथानन्तरं परिणयभवनं विवाहगृहं प्रवेष्टुकामो

भा०—अनन्तर यह बात प्रसिद्धहै कि चारोंतरफसे वे पुरवासीलोग नूतनवयस्क रति और कामदेवसमान उन वधूवरोंको देखनेके लिये अपने गृहकार्य्यको छोड़कर विवाहमन्दिरके समीप चलेगये ॥ १६ ॥

नरपतिसरणौ स्वमन्दिरेषु
परिणयमण्डपवीथिकान्तरेषु ।
प्रमदपवनसारितालिवीचि-
नरजलपूर्णमभूत्स्थलं पुरस्य ॥ १७ ॥

टी०—नरेति । पुरस्य स्थलं नरपतिसरणौ राजमार्गे स्वमन्दिरेषु निजहर्म्येषु तथा परिणयस्य यो मण्डपस्तस्य या वीथिका अन्तरालपदव्यस्तदन्तरेषु प्रमदो हर्ष एव पवनोवायुस्तेन सारिता प्रेरिता या आलिः पङ्क्तिः सा एव वीचिस्तरङ्गो यस्मिंस्तच्चतन्नर एव जलं तेन पूर्णं आकीर्णमभूत् । अत्र रूपकालङ्कारः ॥

भा०—नगरका स्थल राजमार्गमें अपने महलोंमें तथा विवाहमण्डपके समीप अन्तरालगलियोंमें हर्षरूपवायुसे प्रेरित मनुष्य पङ्क्तिरूप तरङ्गविशिष्ट नररूप जलसे परिपूर्ण होगया ॥ १७ ॥

अथ परिणयमण्डपं प्रयान्तं
युवतिशतान्यनुकर्ण्य चैलवर्टम्[1] ।
अहमहमिकया त्वरां वहन्ति
ययुरभितस्तमवेक्षितुं तदानीम् ॥ १८ ॥

टी०—अथेति । अथानन्तरं एलवर्टं परिणयमण्डपं विवाहमन्दिरं प्रयान्तं गच्छन्तं अनुकर्ण्याश्रुत्य तदानीं तस्मिन्समये अहमहमिकया पूर्वमहं अहंपूर्वं इति अहमहमिका तया "मयूरव्यंसकादयश्च एते निपात्यन्ते" त्वरां शीघ्रतां वहन्ति धारयन्ति एवंविधानि युवतिशतानि तं अवेक्षितुं द्रष्टुं अभितः समन्तात् ययुः अयासिषुः । अत्र युवत्य आल-

1. Albert.

टी०—अयीति। अयि मदननिपीडिते कामार्दिते! गवाक्षे वातायने मां जघनेन नितम्बाग्रभागेन नितान्तमत्यन्तं किं किमर्थं व्यथयसि पीडयसि तत्तस्मात्कारणाद् अपसर दूरीभव सत्कुलजाः सुवंशोत्पन्नाः सुरूपवत्यः सौन्दर्य्यगुणोपेताः सचेतसो बुद्धिमत्यः स्त्रियोऽनुरूपं योग्यं विदधति कुर्वन्तीति दृष्टान्तालङ्कारः। दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनमिति लक्षणात्। अत्र नायिका आलम्बनविभावः महोत्सव उद्दीपनविभावः जघनाघातोऽनुभावः लज्जाऽसूयादयो व्यभिचारिणः हासस्थायिभावः तज्ज्ञे सामाजिके हास्यरसनिष्पत्तिः। अत्र परोढा नायिका ॥

भा०—अयि कामातुर! झरोखेमें मेरेको नितम्बाग्रभागसे क्यों अत्यन्तपीडितकरती है इसलिये दूरहोजा क्योंकि बड़ीबुद्धिविशिष्ट सत्कुलोत्पन्न सुन्दरस्त्रियां योग्यकार्य्य करती हैं ॥ २२ ॥

स्मृतसुरतरसे निमीलिताक्षि
स्थगय पयोधरमंशुकेन हीनम्।
अवनिपतिसुतं वरं निरीक्ष्य
हृतहृदयेति विलोक्यसे जनेन ॥ २३ ॥

टी०—स्मृतेति। स्मृतसुरतरसे संस्मृतसम्भोगानन्दे! अतएव हे निमीलिताक्षि शून्यीकृतेक्षणे! अंशुकेन हीनं आच्छादनेन रहितं पयोधरं स्तनं स्थगय आच्छादय अवनिपतिसुतं राजपुत्रं वरं वरणीयं निरीक्ष्यावलोक्य हृतहृदया अपहृतचेता इयमस्तीति जनेन लोकेन विलोक्यसे दृश्यसे। अत्र नायिका आलम्बनं स्तनावलोकनमुद्दीपनं कटाक्षादि अनुभावः स्मरणनेत्रनिमीलनादि व्यभिचारिभावः विस्मयः स्थायिभावः तज्ज्ञे सामाजिके नायिकामवलोक्य अद्भुतरसनिष्पत्तिः। अत्र स्मरान्धाप्रगल्भानायिका ॥

भा०—स्मरणकियाहै कामविलास जिसने ऐसी हे आंखबन्दकरनेवाली! आच्छादनसे रहित स्तनको ढाँपदे राजपुत्र एलवरको देखकर तेरामनहरागयाहै इसतरह तू लोगोंसे देखीजाती है ॥ २३ ॥

गन्तुमनाः "तुमूकाममनसोरपीति तुमोमकारलोपः" अतएव समन्तादभितो मनुजसहस्रैः समाहृतो युक्तो वरीयान् श्रेष्ठः धरणिधरस्य सेवसकोवर्गभूपस्यात्मजस्तनय एलवर्टः युवतिहृदीव कामिनीमनसीव राजमार्गे विवेश प्राविशत् अत्रोपमोत्प्रेक्षयोः सङ्करः ॥

भा०——अनन्तर विवाहमन्दिरको प्रवेशकरनाचाहता अतएव चारोंतरफसे सहस्त्रों मनुष्योंसे युक्त श्रेष्ठराजकुमार एलवर्टने राजमार्गमें युवतियोंके हृदयमें जैसा प्रवेशकिया ॥ २० ॥

नरपतितनयं विलोक्य सद्यो
मदनशराभिहतात्मविह्वलानाम् ।
प्रणयभरितभाषितानि तासां
चलितदृशां हि परस्परं विसस्रुः ॥ २१ ॥

टी०——नरेति । हीति निश्चयेन नरपतितनयं एलवर्टं विलोक्य दृष्ट्वा सद्यः शीघ्रं मदनशरैरभिहतेन पीडितेनात्मना विह्वलानां व्याकुलानां चलितदृशां चञ्चलदृष्टीनां तासां युवतीनां प्रणयभरितभाषितानि प्रेमयुक्तवचनानि परस्परमन्योऽन्यं विसस्रुः प्रसरन्तितरम । अत्र रसवदलङ्कारः । रसवद्रसपेशलमिति लक्षणात् ॥

भा०——यह बात प्रसिद्धहै कि राजपुत्र एलवर्टको देखकर शीघ्रही कामवाणों से व्याकुल उन चञ्चलनयनवाली स्त्रियोंके प्रेमगर्भितवंचन परस्पर होने लगे ॥ २१ ॥

( कुलकम् )

अयि मदननिपीडिते नितान्तं
व्यथयासि मां जघनेन किं गवाक्षे ।
तदपसरसचेतसो ऽनुरूपं
विदधाति सत्कुलजाः सुरूपवत्यः ॥ २२ ॥

भा० —हे मिथ्यानम्र ! हे चपलस्वभाववाली ! आगेसे अपने घूंघटको दूरकर राजमार्गमें वर एलवर्ट जाताहै इसके दर्शनसे अपने नेत्रयुग्मको आनन्दितकर ॥ २९ ॥

इति नरपतिसूनुरेलवर्टो
युवतिजनाभिहितं वचोऽनुशृण्वन् ।
सकलजनजयाशिषं च गृह्णन्
समुपययौ स विवाहमन्दिरेऽस्मिन् ॥ २६ ॥

टी०—इतीति । नरपतिसूनुः स एलवर्ट इतीत्थं युवतिजनैः अभिहितं उक्तं वचो वचनं अनुशृण्वन् आकर्णयन् सकलजनानां समग्रलोकानां जयाशिषं जयाशीर्वादं च गृह्णन् स्वीकुर्वन् अस्मिन् विवाहमन्दिरे समुपययौ प्राप, समाप्तं कुलकम् ॥

भा० —राजपुत्र वह एलवर्ट इसतरह युवतियोंका कहाहुआ वचन सुनताहुआ और सबलोगोंके जयशीर्वादको स्वीकारकर विवाहमन्दिरमें पहुंचा ॥ २६ ॥

अथ नरपतिपूजिता महेशी
जिगमिषया हि विवाहमण्डपेऽस्मिन् ।
युवतिजनप्रसाधिताङ्गयष्टि-
र्निखिलसखीजनमध्यगा विरेजे ॥ २७ ॥

टी०—अथेति । अथानन्तरं हीति निश्चयेन नरपतिपूजिता राजभिः समभ्यर्चिता महेशी राजेश्वरी अस्मिन् विवाहमण्डपे जिगमिषया गन्तुमिच्छया अतएव युवतिजनैः प्रसाधिता अलङ्कृता अङ्गयष्टिर्यस्याः एवंविधा निखिलसखीजनानां मध्ये गच्छतीति एतादृशी विरेजे शुशुभे ॥

भा० —अनन्तर यह निश्चयहै कि राजपूजित महारानी इसविवाहमण्डपमें जानेकी इच्छासे युवतियोंसे समलङ्कृतकी हुई सारी सखियोंके बीचमें प्राप्त शोभायमानहुई ॥ २७ ॥

---

1. Albert.

व्रजति स नृपसूनुरग्रतो मां
पिहितवती मुखचुम्बनेन सेर्ष्यम् ।
क्षणमपि विरमाशु हास्यशीले
कुलयुवतेरनुकूलमाचरैव ॥ २४ ॥

टी०—व्रजतीति । हे हास्यशीले हसनप्रकृते ! स नृपसूनुः एलवर्टो ऽग्रतः पुरस्तात् व्रजति गच्छति मुखचुम्बनेन सेर्ष्यम् ईर्ष्यासहितं यथा भवति तथा मां पिहितवती आच्छादितवती त्वं आशु शीघ्रं क्षणमपि विरम मुक्तचुम्बनव्यापारा भव कुलयुवतेः सुवंशोत्पन्नयुवत्या अनुकूलं योग्यमेवाचर । अत्र युवतिरालम्बनं इतस्ततस्समयउद्दीपनं कटाक्षचुम्बनादि अनुभावः असूयाव्यभिचारिभावः हासः स्थायिभावः तज्ज्ञे सामाजिके हास्यरसनिष्पत्तिः । अत्र लज्जाया अपगमत्वात् स्वलाव्रीडानायिका ॥

भा०—हे हास्यरसिके ! राजपुत्र एलवर्ट आगेसे जाताहै तैंने मेरेको ईर्ष्यापूर्वक चुम्बनके बहानेसे ढांपदिया एकक्षण चुपकररह सुकुलोत्पन्न स्त्रियोंकेयोग्य आचरणकर । २४ ॥

निजमुखसिचयान्तमेव दूरं
कुरु चपले पुरतो मृषाविनीते ।
व्रजति ननु वरः सुराजमार्गे
नयनयुगं सुखयास्य दर्शनेन ॥ २५ ॥

टी०—निजेति । हे मृषाविनीते मिथ्याविनये ! अतएव हे चपले ! पुरतोऽग्रतः निजमुखसिचयान्तं स्वाननावगुण्ठनं एव दूरं कुरु अपहर ननु राजमार्गे वर एलवर्टोऽजति गच्छति अस्य दर्शनेन नयनयुगं नेत्रद्वन्द्वं सुखय आनन्दय । अत्र नायिका आलम्बनं अत्यभिलषितैलवर्टस्य पुरतोगमनमुद्दीपनं भ्रूभङ्गादयोऽनुभावाः शङ्काचापल्यादयो व्यभिचारिणः एलवर्टविषयिणीरतिः स्थायिभावः तज्ज्ञे सामाजिके शृङ्गाररसनिष्पत्तिः । अत्र प्रथमावतीर्णमदनविकारा मुग्धानायिका ॥

(कलापकम्)

कथमिदमभिजातचन्द्रबिम्बं
स्फुरितमरीचियुतं विराजते नु ।
किमु धरणिगता तडिल्लतेयं
घननिवहैरहिता विभाति शश्वत् ॥ ३० ॥

टी०—कथमिति । नु इति वितर्के स्फुरिताः प्रदीप्ता या मरीचयस्ताभिर्युतं युक्तं इदं पुरोवर्त्ति अभिजातं नूतनं चन्द्रबिम्बं इन्दुमण्डलं कथं किमस्ति तथा घननिवहैर्मेघसमूहै रहिता वर्जिता धरणिगता पृथ्वीं प्राप्ता इयं पुरोवर्त्तिनी तडिल्लता विद्युद्वल्ली शश्वन्निरन्तरं विराजते किमु शोभते किम् । अत्र भेदानुक्तौ सन्देहालङ्कारः—ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशय इति लक्षणात् ॥

भा०—प्रकाशित किरणवाला यह नूतन चन्द्रबिम्ब विराजित है क्या तथा मेघोंसे रहित पृथ्वीको प्राप्त यह विद्युत् शोभित होरही है क्या ॥ ३० ॥

यदि ननु हि भवेदयं हिमांशु–
र्न च वरिवर्त्ति मृगांक एव बिम्बे ।
अथ खलु तडितश्चिरप्रभात्वं
नतु परिदृश्यत एव मेघपङ्क्तौ ॥ ३१ ॥

टी०—यदीति । नन्वित्याशङ्कायां हीति निश्चयेन यदि चेत् अयं पुरोवर्त्ती हिमांशुश्चन्द्रो भवेत् "आशङ्कायां लिङ्" अत्रास्मिन्बिम्बे मृगाङ्कः शशलाञ्छनं च नैव वरिवर्त्ति "रुग्रिकौ च लुकि यङ्लुकि रिगागमः" नैवातिशयेन वर्तते अत्र एवकारो ऽन्ययोगव्यवच्छेदकः । अथानन्तरं खल्विति निश्चयेन तडितः सौदामिन्याश्चिरप्रभात्वं तु । तस्या अचिरप्रभात्वादिति भावः । मेघपङ्क्तौ कादम्बिन्यां न परिदृश्यत एव नावलोक्यत एव अत्र एवकारो ऽत्यन्तयोगव्यवच्छेदकः अत्र भेदोक्तौ सन्देहालङ्कारः ॥

पटुपटहनिनादपूरितानि
मनुजजयध्वनिभिर्विमिश्रितानि ।
अवनिपतिभरां जयेतिनादै-
र्ध्रुवमचिरं नुनुवुर्दिगन्तराणि ॥ २८ ॥

टी०--पट्विति । ध्रुवमिति निश्चयेन पटुपटहानां अतिगम्भीरशब्द-युक्तानां दुन्दुभीनां निनादेन शब्देन पूरितानि तथा मनुजानां जयध्वनि-भिर्जयशब्दैः विमिश्रितानि विशेषेणयुक्तानि दिगन्तराणि ककुभान्तराणि अवनिपतिभरां राजेश्वरीं जय इति नादैः अचिरं अल्पकालेन नुनुवुः प्रास्तुवन । अत्रोत्प्रेक्षालङ्कारः ॥

भा०--यह बात प्रसिद्ध है कि बड़े बड़े नकारोंके शब्दसे परिपूरित तथा सब मनुष्योंके जय शब्दसे मिलेहुए दिगन्तर राजेश्वरीको जय जय इसतरहके शब्दों से अचिरकालहीमें स्तुतिकरनेलगे ॥ २८ ॥

सपदि जनतया निरीक्ष्यमाणा
परिणयमण्डपसन्निधौ व्रजन्ती ।
युवतिगणशतैः सुपेव्यमाणा
नृपतिभरा हि पुलोमजेव रेजे ॥ २९ ॥

टी०--सपदीति । हीति निश्चयेन परिणयस्य विवाहस्य यो मण्डप-स्तत्सन्निधौ समीपे व्रजन्ती गच्छन्ती अतएव सपदि तत्काले जनतया लोकनिवहेन निरीक्ष्यमाणा दृश्यमाना एवंविधा युवतिगणशतैः सुषेव्य-माणा परिचर्यमाणा नृपतिभरा राजेश्वरी पुलोमजा शचीव रेजे व्यराजत । अत्रोपमालङ्कारः ॥

भा०--यह बात प्रसिद्ध है कि उसीसमय विवाहमण्डपको जातीहुई अतएव सब लोगोंसे दृश्यमान युवतियोंसे सेवायुक्त कीजाती राजेश्वरी इन्द्राणी की तरह शोभायमानहुई ॥ २९ ॥

भा०—नगरकी स्त्रियोंने इसतरह क्षणपर्य्यन्त शङ्कित होकर रतिकेसमान विलासशोभाको धारणकरतीहुई अतुलतरूपशृङ्गारवाली तथा अपनेनेत्रोंकी आनन्दहेतु उस राजेश्वरीको देखा ॥ ३३ ॥

अथ मणिपरिशोभितान्तरालां
सुरुचिरकाञ्चनवेदिकाविशेषाम् ।
अधिकृतमनुजोपदिष्टमार्गा
परिणयमण्डपिकां वधूरयासीत् ॥ ३४ ॥

टी०—अथेति । अथानन्तरं वधूः सा राजेश्वरी मणिभिः परिशोभितो ऽन्तरालो मध्यप्रदेशो यस्यास्तथा सुरुचिरा प्रदीप्ता या काञ्चनवेदिका सुवर्णालङ्कृतपरिष्कृतभूमिः [ वेदिः परिष्कृत भूमिरित्यमरः ] सैव विशेषो यस्यां तथा अधिकृता अधिकारिणो ये मनुजास्तैरुपदिष्टः प्रदर्शितो मार्गो यस्यास्तथाविधां परिणयमण्डपिकां विवाहभूमिकां अयासीत् प्राप्नोत् ॥

भा०—अनन्तर वैवाहिक अवस्थापन्न राजेश्वरी मणियोंसे शोभित मध्यभाग विशिष्ट तथा प्रदीप्तसुवर्णवेदिकायुक्त और अधिकारीलोगोंसे दर्शितमार्गवाली विवाहमण्डपिकाको प्राप्तहुई ॥ ३४ ॥

जनविहितशुभाशिषं दधाना
गुरुजनवन्दनसन्नताङ्गवल्ली ।
कतिपयमणिभूषितोच्चभागं
परिणयपीठमसौ नृपाऽधितष्ठौ ॥ ३५ ॥

टी०—जनेति । जनैर्विहिता कृता या शुभाशीस्तां दधाना स्वीकुर्वती तथा गुरुजनानां वन्दने प्रणतौ सन्नता नम्रा अङ्गवल्ली शरीरलता यस्या एवंविधा असौ नृपा राजेश्वरी कतिपयमणिभिः कियद्भिरपि रत्नविशेषैः शोभित उच्चभागः उर्ध्वदेशो यस्यैवंविधं परिणयपीठं विवाहसिंहासनं अधितष्ठौ अध्यास्त " अधिशीङ्स्थासां कर्म्मेत्याधारस्य कर्म्मत्वम् " ॥

भा०— यह बात निश्चय है कि यदि यह चन्द्रबिम्ब होवे तो इसमें मृगचिह्न नहीं है और विद्युल्लताका चिरकालतक प्रकाशितहोना मेघपंक्तिमें नहीं दिखाईदिया इससे विद्युल्लताभी नहीं है ॥ ३१ ॥

न च शशधरबिम्बमेतदग्रे
विलसति चन्द्रमुखं नृपार्चितायाः ।
इयमपि न तडिल्लता स्फुरन्ती
लसति वधूरुचिरप्रभाङ्गयष्टिः ॥ ३२ ॥

टी०—नेति । एतदग्रे पुरतः शशधरबिम्बं शशाङ्कमण्डलं नवास्ति किन्तु नृपार्चिताया राजेश्वर्याश्चन्द्रमुखं इन्दुवदाननं विलसति विराजते इयमपि पुरोवर्तिनी स्फुरन्ती देदीप्यमाना तडिल्लता न किन्तु वधूरुचिरप्रभाङ्गयष्टिः वध्वा विकटोरियायाः प्रदीप्तकान्तियुता शरीरयष्टिका लसति राजति । अत्र निश्चयान्तः सन्देहालङ्कारः ॥

भा०—यह आगे दिखलाई देना चन्द्रबिम्ब नहीं है किन्तु राजेश्वरीकामुख रूपचन्द्रमा विराजितहै और यह देदीप्यमान विद्युल्लता नहीं है किन्तु राजेश्वरीका प्रकाशित शरीरयष्टिका सुशोभितहै ॥ ३२ ॥

इति पुरवनिताः क्षणं विशंक्य
रतिसदृशीं दधतीं विलासशोभाम् ।
अवनिपतिमनन्यरूपवेषा-
मभिददृशुः स्वदृशां सुखैकहेतुम् ॥ ३३ ॥

टी०—इतीति । पुरवनिताः पौराङ्गना इतीत्थं क्षणं मुहूर्तपर्यन्तं विशंक्य संशय्य रतिसदृशीं रतितुल्यां विलासशोभां विभ्रमसुषमां "सुविनिदुर्भ्यः सुपि सूतिसमाः इति षत्वम्" दधतीमुद्वहन्तीं अतएव अनन्यरूपवेषां अतुलितस्वरूपशृङ्गारां तथा स्वदृशां निजदृष्टीनां सुखैकहेतुं आनन्दैककारणं अवनिपतिं राजेश्वरीं अभिददृशुः निरीक्षाञ्चक्रिरे "इजादेश्च गुरुमतोऽनृच्छ इति लिट्याम्" ॥

भा०—लोगोंसे सम्मानित ससेक्सदेशका राजा पिताकीतरह उस महारानीके दानदेनेमें तत्परहुआ तथा बड़ेऐश्वर्य्ययुक्त वे वधूवर विवाहसमयकी परस्पर प्रतिज्ञामें तत्परहुए ॥ ३७ ॥

निखिलगुरुजनान्प्रणम्य पूर्वं
तदनु तदाशिषमञ्जसोपलभ्य ।
सपदि जनकृताभिनन्दनौ स्वं
नृपभवनं ययतुर्वधूवरौ तौ ॥ ३८ ॥

टी०—निखिलेति । तौ वधूवरौ पूर्वं निखिलगुरुजनान् समग्रगुरून् प्रणम्य नमस्कृत्य तदनु तदनन्तरं तदाशिषं तद्दत्ताशीर्वादं अञ्जसा उपलभ्य प्राप्य सपदि तत्काले जनैर्लोकैः कृतं अभिनन्दनं प्रशंसा ययोः एवंविधौ सन्तौ स्वं आत्मीयं नृपभवनं राजमन्दिरं ययतुः अगमताम् ॥

भा०—वे वधूवर पहिले समग्रगुरुलोगोंको प्रणामकर अनन्तर उनसे आशीर्वादको पाकर उसीसमय लोगोंसे आप प्रशंसायुक्त कियेजाते अपने राजमहलको चलेगये ॥ ३८ ॥

पुरजनपदवासिनश्च सान्यान्
मनुजवरान्धरणीभृतोऽनुयातान् ।
अनुपमविविधानि भोजनानि
परिणयमोदभराऽऽशयाञ्चकार ॥ ३९ ॥

टी०—पुरेति । परिणयमोदभरा विवाहप्रमोदपूर्णा सा राजेश्वरी पुरजनपदयोर्वसन्तीति तथाविधाञ्जनान् अन्यानपरान् मनुजवरान् माननीयान् पुरुषान् तथाऽनुयातान् सम्प्राप्तान् धरणीभृतो राज्ञश्च अनुपमानि च तानि विविधानि नानाप्रकाराणि भोजनानि खाद्यवस्तूनि आशयाञ्चकार अभोजयत ॥

भा०—विवाहप्रमोदयुक्त उस राजेश्वरीने नागरिकदैशिकलोगोंको तथा

भा०—लोगोंके कियेहुए आशीर्वादको स्वीकारकरतीहुई तथा गुरुजनोंको प्रणामकरनेमें नम्रशरीरवाली राजेश्वरी कितनेहीमणियोंसे शोभितोर्ध्वदेशवाले विवाहसिंहासनपर बैठी ॥ ३५ ॥

अथ निजसुपुरोधसः स्वधर्म्मात्
परिणयप्रक्रममीहितं प्रचक्रुः ।
अतिनिपुणपुरस्त्रियोऽभिरामा
जगुरुभयोः सुविवाहमङ्गलानि ॥ ३६ ॥

टी०—अथेति । अथानन्तरं निजसुपुरोधसः स्वकुलपुरोहिताः स्वधर्म्मात् क्रैष्टधर्म्मात् ईहितं अभीप्सितं परिणयप्रक्रमं विवाहारम्भं । [ प्रक्रमः स्यादुपक्रमः । स्यादभ्यादानमुद्घात आरम्भ इत्यमरः ] प्रचक्रुः विदधुः तथा अभिरामा रमणीया अतिनिपुणाश्चतुरायाः पुरस्त्रियः पौराङ्गनास्ता उभयोर्वधूवरयोः सुविवाहस्य मङ्गलानि जगुः गायन्तिस्म ॥

भा०—अनन्तर अपने पुरोहितोंने क्रैष्टमतानुसार अभीष्टविवाहारम्भ किया तथा सौन्दर्य्यगुणोपेत चतुरनगरनारियोंने वर कन्याओंके विवाहमङ्गल गाये ॥ ३६ ॥

जनमहितगुणः ससेक्सभूपो[1]
गुरुरिव दानपरो बभूव तस्याः ।
अनुपमविभवौ वधूवरौ तौ
परिणयसंश्रवतत्परावभूताम् ॥ ३७ ॥

टी०—जनेति । जनैर्महिताः पूजितागुणा यस्यैवंविधः स सेक्सभूपः स सेक्सदेशाधिपो गुरुरिव पितेव तस्याः कन्यायाः दानपरो बभूव तथा अनुपमविभवौ अतुलितैश्वर्य्यौ तौ वधूवरौ परिणयस्य संश्रवो नियमस्तस्मिंस्तत्परौ " स्त्रीपुंसाभ्यां परस्परमित्थं विधातव्यमित्याद्याश्रवतत्परौ " अभूतामजायेताम् ॥

1. Duke of Sussex.

# दशमः सर्गः ॥

अथो महेशी रमणाभिनन्दिनी
स्वगोत्रसंवर्द्धनकांक्षया ध्रुवम् ।
सुतेजसां लोकभृतां च मात्रया
निविष्टमाधत्त सुगर्भमात्मनः ॥ १ ॥

टी०—अथोइति । अथोऽनन्तरं ध्रुवमिति निश्चयेन रमणाभिनन्दिनी पत्यानन्दविधायिनी महेशी राजेश्वरी स्वगोत्रस्य यत्संवर्द्धनं वृद्धिस्तस्य आकाङ्क्षया इच्छया सुतेजसां तेजोविशिष्टानां लोकभृतां लोकपालानां इन्द्रवरुणादीनां मात्रया अंशेन ( अष्टानांलोकपालानामंशाद्वै जायतेनृप इति प्रमाणात् ) निविष्टं युक्तं सञ्चितंवा आत्मनोगर्भं भ्रूणं । [ गर्भोभ्रूण इमौसमावित्यमरः । गर्भोभ्रूणेऽर्भकेकुक्षौसन्धौ पनसकण्टके इति विश्वमेदिन्यौ । भ्रूणः स्त्रीगर्भडिम्भयोरितिमेदिनी ] आधत्त दध्रे । अस्मिन्सर्गे वंशस्थंवृत्तम् ॥

भा०—अनन्तर प्रियतमको आनन्दित करनेवाली राजेश्वरीने हैनोभर कुलवृद्ध्यर्थ तेजोमय इन्द्रवरुणादिकोंके अंशसेयुक्त अपनेगर्भको धारणकिया ॥ १ ॥

तदैलवर्टो[1] नृपतिर्यदृच्छया
ह्यनेकदेशाहृतवस्तुसञ्चयैः ।
महेश्वरीं तां सुचिरं विनोदयन्
स्वयं च तद्दोहदपूरणं व्यधात् ॥ २ ॥

टी०—तदेति । हीति निश्चयेन तदा तस्मिन्समये नृपतिः सैक्सको

1. Albert.

और मान्यलोगोंको और वहां आयेहुए राजालोगोंकोभी अनेकप्रकारके अनुपम खाद्यवस्तुओंको खिलाया ॥ ३९ ॥

राजेश्वरी निजविवाहमहोत्सवं तं
कान्तेन राजतनयेन सहानुभूय ।
सानन्दमात्मवयसा सदृशीं च लीलां
प्रेयःप्रियां विदधती समयं निनाय ॥ ४० ॥

टी०—राजेति । सा राजेश्वरी राजतनयेन कान्तेन पत्यासह तं प्रसिद्धं निजविवाहमहोत्सवं स्वपाणिग्रहणोत्सवं अनुभूयानुवर्त्य सानन्दं आनन्दयुक्तं यथाभवति तथा आत्मवयसा निजयौवनावस्थया सदृशीं योग्यां प्रेयसः पत्युःप्रियां मनोहारिणीं लीलां क्रीडां विदधती कुर्वतीसती समयं कालं निनाय व्यतीयाय ॥

भा०—राजेश्वरीने अपने प्रियतम एलवर्टके साथ स्वविवाहोत्सवको अनुभवकर आनन्दपूर्वक अपनी यौवनावस्थाके अनुरूप प्रियतमके अनुकूल क्रीडाको करतीहुई कितनेही समयको व्यतीत किया ॥ ४० ॥

इति उर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये राजेश्वरीविवाहोत्सववर्णनन्नाम नवमः सर्गः ॥ ९ ॥

टी०—महीति । तदा तस्मिन्समये सुखस्थिता आनन्दोपविष्टा नृपाधिपा राजेश्वरी महीयुगेभेन्दुमिते एकचत्वारिंशदधिकाष्टादशशतमिते क्रैष्टशके समये दशमेमासि सुस्थानेषु गता अखिलग्रहा यस्मिन् एवंविधे शुभेऽह्नि सुदिवसे सर्वसुलक्षणै रशेषशुभलक्षमभियुतं सूनुं तनयं असोष्ट सुषुवे ॥

भा०—उससमय आनन्दसे बैठीहुई राजेश्वरीने १८४१ ईसवीमें दशम मासमें शुभस्थानोंमें प्राप्त समस्तग्रहवाले शुभदिवसमें अच्छेलक्षणोंसे युक्त पुत्रको उत्पन्नकिया ॥ ४ ॥

ततोऽखिलायामवनौ महोत्सवः
पुरे पुरेऽभूज्जनसम्मदास्पदम् ।
महोदये लोकहितानुबन्धिनि
प्रजा मुदं यान्ति धरामिते हरौ ॥ ५ ॥

टी०—तत इति । ततोऽनन्तरं अखिलायां समग्रायां अवनौ पृथिव्यां जनानां लोकानां सम्मदो हर्षस्तदास्पदं तत्स्थानं महोत्सवो महामहः पुरे पुरे नगरे नगरेऽभूदजायत प्रजाः प्रकृतयः लोकहितानुबन्धिनि जनोपकारयुक्ते महोदये अतिशयप्रादुर्भावविशिष्टे हरौ विष्णौ [ विष्णोः पृथिवीपतित्वनियमात् ] धरां महीं इते प्राप्तेसति "यस्यच भावेनेति सप्तमी" मुदं हर्षं यान्ति प्राप्नुवन्तीत्यर्थान्तरन्यासालङ्कारेण समर्थ्यते ॥

भा०—अनन्तर सारीपृथ्वीमें लोगोंका हर्षस्थान वह महोत्सव नगरनगरमें हुआ क्योंकि लोकोपकारक महानुभाव विष्णुके पृथ्वीको प्राप्तहोनेपर सारीप्रजा हर्षको प्राप्तहोती है ॥ ५ ॥

अथो तदा नन्दनसंज्ञया पुरा
तडित्सुदीपावलिसंघमालया ।
मृदङ्गभेरीपटहादिनादया
स्वयं ह्यजिह्रेदनयाऽमरावती ॥ ६ ॥

वर्गाधिप एलवर्टो यदृच्छया स्वेच्छया अनेकदेशेभ्य आहृता आनीता ये वस्तुसञ्चयाः खाद्यदृश्यद्रव्यनिवहास्तैः करणभूतैस्तां महेश्वरीं राजेश्वरीं सुचिरं चिरेण विनोदयन् आनन्दयन्सन् स्वयं तस्या दोहदस्येच्छायाः। अयं इच्छा वाच्यपि अन्तर्वर्त्नीच्छायामेव प्रयुज्यते [ दोहदोगर्भलक्षणे अभिलापे तथा गर्भे इति हैमः ] पूरणं परिपूर्तिं व्यधादकार्षीत् ॥

भा०—यह बात प्रसिद्धहै कि उससमय राजाएलवर्टने स्वेच्छासे बहुतदेशोंसे मँगायेहुए खाद्यदृश्य वस्तुओंसे चिरकालतक राजेश्वरीको आनन्दितकर आपही उनकी इच्छाको पूर्णकिया ॥ २ ॥

सएलवर्टोऽधिपतिर्नृपेश्वरीं
प्रसन्नतां प्रापयदाशु तां यथा।
मृदूक्तिभिर्नीतियुतैस्तथैव सः
प्रजामनांस्यात्मगुणैररञ्जयत् ॥ ३ ॥

टी०—स इति। सोऽधिपतिरेलवर्ट आशु शीघ्रं यथा तां नृपेश्वरीं राजेशीं प्रसन्नतां आनन्दभावं प्रापयदगमयत् स एलवर्टस्तथा एव मृदूक्तिभि र्नम्रवचनैः तथा नीतियुतैर्नयोपेतैरात्मगुणैर्निजसद्गुणै-रपीति शेषः प्रजामनांसि प्रकृतिमानसानि अरञ्जयत् सानुरागाण्यकरो-दिति भावः ॥

भा०—उसराजाएलवर्टने जिसतरह राजेश्वरीको प्रसन्नकिया उसीतरह उसने नम्रवचनोंसे तथा न्याययुक्त अपने सद्गुणोंसे भी प्रजाके चित्तोंको अनुरञ्जन किया ॥ ३ ॥

महीयुगेभेन्दुमिते शके तदा
शुभेऽह्नि सुस्थानगताखिलग्रहे।
नृपाधिपा सर्वसुलक्षणैर्युत-
मसोष्ट सूनुं समये सुखास्थिता ॥ ४ ॥

1. Albert.

वलक्षपक्षे स्वकलाविवर्धनैः
क्रमाद्यथा बालशशी जनप्रियः ॥ ८ ॥

टी०—ततइति । ततोऽनन्तरं कुसुमायुधः स्मरस्तद्वदाकृतिः स्वरूपं यस्यैवंविधः कुमारः वलक्षपक्षे शुक्लपक्षे क्रमात् क्रमशः स्वकलानां निजांशानांविवर्धनैरेधनैर्जनप्रियो बालशशी यथा बालेन्दुरिव. दिने दिने दिवसे दिवसे "नित्यवीप्सयोरिति द्विर्वचनम्" स्वस्य अवयवैरङ्गैः अवर्धत वृद्धिमगमत् ॥

भा०— अनन्तर कामस्वरूप वह कुमार शुक्लपक्षमें क्रमसे अपनी कलाओंकी पूर्तिसे लोकप्रिय बालचन्द्रमाकी तरह प्रतिदिन अपने. अङ्गोंसे वृद्धिको प्राप्त हुआ ॥ ८ ॥

स बाललीलाभिरहर्निशं तदा
सुखश्रवैर्मञ्जुलजल्पितादिभिः ।
तथैव धात्र्यञ्चितवस्तुयाचनैः
प्रणामवाक्यैः पितरावनन्दयत् ॥ ६ ॥

टी०—स इति । तदा तस्मिन्समये स कुमारो ऽहर्निशं रात्रिन्दिवं बाललीलाभिः शिशुक्रीडाभिः तथा सुखश्रवैः आनन्ददायकाकर्णनैर्मञ्जुलजल्पितादिभिर्मनोहरालापादिभिः तथा एव धात्र्या अञ्चितं प्रार्थितं यद्वस्तु तस्य याचनैर्मार्गणैः ( धात्री बालकमुखेन तत्पित्रोः सकाशादीप्सितं वस्तु याचते ) तथा प्रणामवाक्यैः प्रणतिवचनैः पितरौ मातापितरौ अनन्दयत् असुखयत् । केचिच्चमत्कारितया वत्सलं च रसंविदुरिति नियमात् अत्र बालक आलम्बनविभावः तद्बाल्यावस्थासमय उद्दीपनविभावः मञ्जुलालापप्रणतिवस्तुयाचनादयो ऽनुभावाः मोहचपलतौत्सुक्यादयो व्यभिचारिभावाः प्रेमस्थायिभावः तज्ज्ञे सामाजिके वत्सलरसनिष्पत्तिः ॥

भा०—उससमय उसबालकने रातदिन अपनी बालक्रीड़ाओंसे तथा सुखदेने

टी०—अथोऽइति । अथोऽनन्तरं हीति निश्चयेन तदा तस्मिन्समये अमरावती इन्द्रपुरी मृदङ्गानां मुरजानां भेरीणां बृहद्दुन्दुभीनां पटहादीनां दुन्दुभ्याकारालघवाद्यादीनां नादो यस्यां तथाविधया तथा तडितः सौदामिन्या याः सुदीपावलयः प्रदीपपंक्तयस्तासां संघानां माला यस्या तादृश्या अनया नन्दनसंज्ञया पुरा नगर्या कारणभूतया स्वयं अजिह्रेत् लज्जिताबभूव ॥

भा०—अनन्तर यह प्रसिद्ध है कि उससमय मृदङ्ग और बड़े बड़े नक्कारे वगैरहोंके शब्दयुक्त तथा विद्युद्दीपावली समुदायविशिष्ट इस नन्दननामक पुरीसे इन्द्रपुरी आपही लज्जायुक्तहोगई ॥ ६ ॥

स एलबर्टो[1] नृपतिः प्रियाज्ञया
सहान्यपुंभिः क्षितिपैश्च सम्मतम् ।
तदैव मातामहसंज्ञयात्मजं
मुदैडवर्ड[2] हि चकार नामतः ॥ ७ ॥

टी०—स इति । हीति निश्चयेन तदा एव स नृपतिरेलवर्टो मुदा हर्षेण प्रियाज्ञया राजेश्वर्य्यनुज्ञया अन्यपुंभिरपरैर्मान्यलोकैः सह क्षितिपै राजभिः सम्मतं अभीष्टं मातामहस्य अर्भकस्यमातामहस्यैडवर्डस्येत्यर्थः संज्ञया आख्यया आत्मजं तनयं नामतोनाम्ना "सार्वविभक्तिकस्तसिल् प्रत्ययः" एडवर्ड चकार ॥

भा०—यहबात प्रसिद्ध है कि उसीसमय राजाएलबर्टने हर्षसे राजेश्वरीकी आज्ञानुसार सब मान्यपुरुषोंके साथ सब राजाओंका सम्मत बालकके मातामहके अभिधानसे पुत्रका एडवर्डनाम करके रक्खा ॥ ७ ॥

ततः कुमारः कुसुमायुधाकृति-
र्दिने दिने स्वावयवैरवर्धत ।

1. Albert. 2. Edward.

भा०—अनन्तर भी उससमय महारानीने योग्यपुरुषोंसे धर्म्मशास्त्रको तथा सम्यग्ज्ञानविधायक सुनीतिकोभी प्रतिदिन कुमारको पढ़ाया ॥ ११ ॥

ततो महेशी नयमार्गगामिनी
कुमारकं वेल्सनृपं जगाद सा ।
अनेकशस्त्रागमशिक्षयाञ्चितो-
ऽभवत्कुमारो युवराजसंज्ञकः ॥ १२ ॥

टी०—तत इति । ततोऽनन्तरं नयमार्गगामिनी नीतिमार्गानुसरणप्रवृत्ता सा महेशी राजेश्वरी कुमारकं वेल्सनृपं वेल्सदेशाधिपं जगाद प्रोवाच अनेके ये शस्त्रागमाः शस्त्रविद्यास्तेषां या शिक्षा बोधनं तयाञ्चितः श्लाघ्यः प्राप्तो वा कुमारो युवराजसंज्ञको युवराजोपनामयुक्तोऽभवत् ॥

भा०—अनन्तर नीतिमार्गगामिनी उस राजेश्वरीने कुमारको वेल्सदेशाधिपति (प्रन्सआफ्वेल्स्[1]) करके कहा अनेक शस्त्रविद्याओंका जाननेवाला कुमार युवराजकरके कहागया ॥ १२ ॥

अथापि वीरप्रसवा नृपेश्वरी
प्रजाः परित्रातुममन्दविक्रमम् ।
सुतं द्वितीयं सुषुवे शुभेऽहनि
पृथेव भीमं भयदायकं द्विषाम् ॥ १३ ॥

टी०—अथेति । अथानन्तरमपि वीराणां प्रसव उत्पत्तिर्यस्या एवंविधा नृपेश्वरी प्रजाः प्रकृतीः परित्रातुं रक्षितुं शुभेऽहनि सुदिवसे अमन्दविक्रमं प्रबलपराक्रमविशिष्टं द्वितीयं सुतं तनयं पृथा कुन्ती द्विषां शत्रूणां भयदायकं भीतिप्रदं भीममिव वृकोदरं यथा सुषुवे उदपादयत् ॥

भा०—अनन्तर भी वीरोत्पादिका उस राजेश्वरीने प्रजाकी रक्षाकेलिये बड़ेपराक्रमी द्वितीय पुत्रकोभी कुन्तीने शत्रुओंको भयदेनेवाले भीमसेनको जैसा उत्पन्न किया ॥ १३ ॥

---

1. Prince of Wales.

वाले मनोहर स्वल्पवाक्योंसे और धाऊके चाहेहुए वस्तके मांगनेसे तथा प्रणाम वचनोंसेभी अपने मातापिताओंको वड़ा आनन्दितकिया ॥ ९ ॥

अथो महेशी निखिलार्थवेदिभिः
सुवंशजैः पाठनकर्म्मकोविदैः ।
धियावरिष्ठैर्मनुजैः कुमारकं
लिपिग्रहं स्वल्पदिनेष्वशिक्षयत् ॥ १० ॥

टी०—अथो इति । अथोऽनन्तरं महेशी राजेश्वरी निखिलार्थवेदिभिः समस्तार्थज्ञातृभिः तथा पाठनकर्म्मणि कोविदैः प्रवीणैर्धिया बुद्ध्या वरिष्ठैः श्रेष्ठैः एवंविधैर्मनुजैः स्वल्पदिनेषु कतिपयदिवसेषु एव कुमारकं "अनुकम्पायां कन् प्रत्ययः" लिपिग्रहं लेखनादिकार्य्योपादानं अशिक्षयदबोधयत् "शिक्ष विद्योपादाने भ्वादेर्धातोर्णिचि लङि रूपम्" ॥

भा०—अनन्तर राजेश्वरीने समग्रार्थजाननेवाले सुकुलोत्पन्न पढ़ानेमें चतुर और बुद्धिसे श्रेष्ठ मनुष्योंसे कुमारको लेखनादिकार्य्य थोड़ेहीदिनों में सिखादिया ॥ १० ॥

ततश्च धर्म्मागममाप्तपूरुषै-
स्तथा सुनीतिं प्रतिपत्तिहेतुकाम् ।
अनेकशः शिल्पिकलाश्च नित्यशः
कुमारकं सैव तदाध्यजीगपत् ॥ ११ ॥

टी०—ततइति । ततोऽनन्तरं च तदा सा एव राजेश्वरी आप्तपूरुषैर्योग्यपुरुषैः कुमारकं धर्म्मागमं स्मृतिशास्त्रं तथा प्रतिपत्तिहेतुकां सम्यग्ज्ञानबीजं सुनीतिं राजनीतिं तथा अनेकशः "बह्वल्पार्थाच्छस्कारकादन्यतरस्यामिति शस्प्रत्ययः" बहुशः शिल्पिकलाः कृषिकर्म्मादीनि च नित्यशः प्रतिदिनं अध्यजीगपत् "णौचसँश्चङोः इङो गाङ् वास्यात्" अध्यापिपत् ॥

निजाधिपं फ्रान्सजनाः पराङ्मुखा
निपोलियन्भूपतिरक्षणेन ते।
निवार्य्य पीठान्नयमार्गविच्युतं
स्वतन्त्रराज्यं व्यदधुश्चिरं तदा ॥ १६ ॥

टी०—निजेति। ते फ्रान्सजनाः पराङ्मुखाः विमुखाः सन्तः नयमार्गात् नीतिवर्त्मनः विच्युतं पृथग्भूतं निजाधिपं लुयिनं राजानं पीठाद्राज्यासनात् निवार्य दूरीकृत्य तदा तस्मिन्समये निपोलियन्नामकस्य परभूपतेः रक्षणेन चिरं बहुकालपर्यन्तं स्वतन्त्रराज्यं स्वाधीनराज्यं व्यदधुः कुर्वन् ॥

भा०—उन फ्रान्सके लोगोंने विमुख होकर अन्यायमें तत्पर अपने लुयीनामक राजाको राज्यासनसे दूरकर उससमय किसी दूसरे निपोलियन्नामक राजाकी सहायता से चिरकालतक स्वतन्त्र राज्यकरनेलगे ॥ १६ ॥

अथौष्ट्रियायामिटिलौ तथैव तत्
प्रुसीयिकायां पुरि पार्लिमेण्टकम्।
सदो हि तत्रत्यजना यदृच्छया
विधाय ते निर्विविशुः सुखं महत् ॥ १७ ॥

टी०—अथेति। अथानन्तरं हीति निश्चयेन औष्ट्रियायां इटिलौ तथैव प्रुसीयिकायांनाम पुरि ते प्रसिद्धाः तत्रत्यजनास्तत्तद्देशीया लोका यदृच्छया स्वेच्छया तत्प्रसिद्धं पार्लिमेण्टकंनाम सदः आस्थानं विधाय कृत्वा महत्सुखं निर्विविशुरभुञ्जन् ॥

भा०—अनन्तर यह बात प्रसिद्धहै कि औष्ट्रिया इटिलि और प्रुसीयामें वहां के प्रसिद्धलोगोंने प्रख्यात पार्लिमेण्ट सभाको स्वेच्छासे स्थापनकर बड़ा सुख भोगकिया ॥ १७ ॥

---

1. France. 2. Napolean ( Louis ). 3. Austria. 4. Italy. 5. Prussia. 6. Parliament.

ततो द्वितीयस्तनयोऽपि बुद्धिमान्
सुशिक्षितानेकविधागमस्तया ।
प्रजासुरक्षार्थमनन्यमेधया
स्थिडिन्वरा भूमिपतिर्व्यधायि सः ॥ १४ ॥

टी०--तत इति । ततोऽनन्तरं अनन्यमेधया अतुलितधारणया तया नन्दनेश्वर्या बुद्धिमान् अतएव सुशिक्षिता अधीता अनेकविधागमा बहुशास्त्राणि येन एवंविधः स द्वितीयस्तनयोऽपि प्रजायाः प्रकृतेः सुरक्षार्थं सुपरित्राणार्थं शोभनाय इडिन्वरादेशस्तस्य भूमिपतिः इडिन्वरादेशाधिपतिर्व्यधायि "कर्मणि लुङ्" अक्रियत ॥

भा०--अनन्तर यह निश्चयहै कि अस मान्यबुद्धिवाली उस महारानीने बड़ाचतुर अतएव अनेक शास्त्र जाननेवाला वह द्वितीयपुत्रभी प्रजाकी रक्षाके लिये इडिन्वराका राजा ( ड्यूकआफ् इडिन्वरा ) बनाया ॥ १४ ॥

अथो गजाब्धीभमहीमिते शाके
युरूपदेशाधिनिवासिनो जनाः ।
अनेककार्यैरसमञ्जसैस्तदा
दिवानिशं खेदयुता अबोभवुः ॥ १५ ॥

टी०--अथो इति । अथोऽनन्तरं तदा तस्मिन्समये गजाब्धीभमहीमिते अष्टाचत्वारिंशदधिकाष्टादशशतमिते क्रैष्टशके युरूपदेशं अधिनिवसन्ति ते जना असमञ्जसैरयोग्यैः अनेककार्यैः दिवानिशं अहर्निशं खेदयुताः खिन्ना अबोभवुः "यङन्तुकि लङि जुसि चेति गुणे रूपम्" अतिशयेनबभूवुः ॥

भा०--अनन्तर उससमय १८४८ ईसवीमें युरूपदेशके रहनेवाले लोग अयोग्य अनेक कामोंसे रातदिन बड़े खेदयुक्त होगये ॥ १५ ॥

1. Duke of Edinburgh. 2. Europe.

यत्नसे स्वतन्त्रराज्यको दूरकर आप फ्रान्सदेशका राजा होगया क्योंकि पृथ्वीमें पुरुषार्थयुक्त पुरुषको दुःख कहां है ॥ १९ ॥

निकोलसनामा[1] रशियामहीपतिः[2]
स्वरक्षणे टर्किनिवासिनो[3] भटान् ।
इयेष तान् क्रैष्टजनान्[4] स्वगौरवात्
तदैंग्लिशाश्चर्किजनाश्च नो ममुः ॥ २० ॥

टी०—निकोलसेति । निकोलसनामा रशियादेशस्य महीपतिर्भूपः स्वरक्षणे निजावनविषये टर्किनिवासिनष्टर्किदेशीयान् भटान् वीरांस्तान्प्रसिद्धान् क्रैष्टजनान् स्वगौरवात् निजगर्वात् इयेष चकाङ्क्ष ऐंग्लिशाश्चर्किजनाश्च तत्कार्यं नो ममुर्नाङ्गीचक्रिरे ॥

भा०—निकोलसनामक रशियादेशाधिपतिने अपनी रक्षा के लिये बड़े वीर उन टर्किनिवासी क्रैष्टलोगोंको अहङ्कारसे चाहा परन्तु ऐंग्लिशलोगोंने और टर्किके लोगोंने यह बात स्वीकार न की ॥ २० ॥

तदैव ते टर्किनिवासिपूरुषा[5]
विभीषयैवं रशियामहीपतेः[6] ।
सहायतामिंग्लिशवासिनां नृणां
ययाचिरे फ्रान्सनिवासिनां तथा ॥ २१ ॥

टी०—तदेति । तदा एव तस्मिन्समय एव ते टर्किनिवासिनः पूरुषा रशियामहीपतेः एवमित्थं विभीषया भयदानेच्छया इंग्लिशवासिनां जनानां तथा फ्रान्सनिवासिनां नृणां मनुजानां सहायतां ययाचिरे अर्थयाञ्चक्रिरे ॥

---

1. Nicholas. 2. Russia. 3. Turks. 4. Christians. 5. Turks. 6. Russia.

अथापि चार्टिष्टजनास्तदेंग्लिशे
स्वसम्मतान् षण्नियमान् समन्ततः ।
हठान्नृपां ग्राहयितुं कृतोद्यमाः
परस्परं द्वेषमयुः शमेतरे ॥ १८ ॥

टी०—अथेति । अथानन्तरमपि तदा तस्मिन्समये इंग्लिशे देशे शमेतरे शान्तिरहिताश्चार्टिष्टजना नियमनिवेदकाः पुरुषाः स्वसंमतान् स्वाभीष्टान् षड् नियमान् पूर्वोक्तान् संश्रवान् हठाद् बलात् नृपां राजेश्वरीं ग्राहयितुं स्वीकारयितुं कृतोद्यमा विहितोद्योगाः सन्तः समन्ततोऽभितः परस्परं अन्ये ऽन्यं द्वेषं अयुः प्रापुः ॥

भा०—अनन्तर उससमय इंग्लिशदेशमें शान्तिरहित नियमनिवेदकलोग अपने संमतपूर्वोक्त [ सबलोग रानीको राज्यकार्य्यमें संमतिदेवें, देश पृथक् २ जिलाओंमें विभक्तहोजाय इत्यादि ] अष्टमसर्गमें कहेहुए छः नियमोंको हठसे राजेश्वरीको स्वीकार करानेके लिये विहितोद्योग होकर सब तरफ़से परस्पर द्वेषको प्राप्तहोगये ॥ १८ ॥

ततः कियत्स्वेव दिनेषु दोर्बलः
स्वतन्त्रराज्यं विनिवर्त्य यत्नतः ।
निपोलियन् फ्रान्सजनाधिपो ऽभवत्
सुपौरुषाढ्याय कुतो ऽसुखं भुवि ॥ १९ ॥

टी०—तत इति । ततोऽनन्तरं कियत्सु एव दिनेषु दोर्बलो बाहुबलोपयुक्तो निपोलियन्नामा कश्चित्पुरुषो यत्नतः स्वतन्त्रराज्यं विनिवर्त्य व्यपोह्य फ्रान्सजनाधिपः फ्रान्सेश्वरो ऽभवत् भुवि धरायां सुपौरुषाढ्याय असुखं दुःखं कुतो भवति अपितु कस्मादपि नास्तीत्यर्थान्तरेण समर्थ्यते ॥

भा०—अनन्तर कितनेही दिनोंमें बाहुबलशाली निपोलियन्नामक पुरुष

1. Chartists. 2. England. 3. Napoleon. 4. France.

भा०—अनन्तर निरंकुश तथा सेनायुक्त निकोलसनामक रशियाके राजाने संग्राममें टर्कीवालोंके नौसमुदायको हरलिया क्योंकि बलयुक्त पुरुष धृष्टताको करता है ॥ २३ ॥

ततः परं टर्किनिवासिमानवा
जवादुपाल्मानदि शत्रुभिः सह ।
नियुध्य चैतान् रशियाधिवासिनो
विजिग्यिरे संगरदीक्षितांस्तदा ॥ २४ ॥

टी०—तत इति । ततः परं अनन्तरं तदा तस्मिन्समये टर्किनिवासिमानवा जवात् वेगात् अल्मानद्याःसमीपं इति उपाल्मानदि "अव्ययं विभक्तिसमीपेत्यादिना अव्ययीभावः समासः" शत्रुभिः सह नियुध्य संप्रहृत्य च संगरदीक्षितान् युद्धेकृतसंकल्पान् रशियाधिवासिनो रशियादेशीयान् ताँल्लोकान् विजिग्यिरे व्यजयन्त ॥

भा०—अनन्तर उससमय टर्किनिवासीलोगोंने बड़ेवेगसे अल्मानदीके समीप शत्रुओंके साथ लड़ाईकर युद्धमें कृतसंकल्प उन रशियाकेलोगोंको जीतलिया ॥२४॥

अथापि ते टर्किनिवासिनो भटा
बलेन सीवाष्टपुलं स्थलं महत् ।
विरोधिनां जगृहुरात्तविक्रमाः
फलं लभन्ते सुयशो महीतले ॥ २५ ॥

टी०—अथेति । अथानन्तरमपि ते प्रसिद्धा टर्किनिवासिनो भटा वीरा बलेन स्वौजसा विरोधिनां महत् सीवाष्टपुलं नाम स्थलं स्थानविशेषं जगृहुरादादिरे आत्तविक्रमा गृहीतपराक्रमाः पुरुषा महीतले पृथ्व्यां सुयशः फलं लभन्ते प्राप्नुवन्तीत्यर्थान्तरेण समर्थ्यते ॥

1. Turkey. 2. Alma (River). 3. Russia. 4. Sebastopol.

भा०—उसीसमय टर्किकेलोगोंने रशियाके राजाकी इसतरहकी विभीषासे ऐंग्लिशलोगोंकी तथा फ्रान्सदेशीयलोगोंकी सहायताको मांगा ॥ २१ ॥

ततो ऽखिलाष्टर्किनिवासिनो जनाः
सहायतां प्राप्य तदाहितास्तदा ।
युयुत्सवस्ते रशियाजनैः सम-
मकार्षुराजिं क्रिमियाभिधानिकाम् ॥ २२ ॥

टी०—तत इति । ततो ऽनन्तरं तदा तस्मिन्समये अखिलास्ते टर्किनिवासिनो जनाः तदाहितां ऐंग्लिशफ्रान्सीयलोकप्रदत्तां सहायतां साहाय्यं प्राप्य लब्ध्वा अतएव युयुत्सवो योद्धुमिच्छवः सन्तः रशियाजनैः समं सार्धं क्रिमियाभिधानिकां क्रिमियाख्यां आजिं संग्रामं अकार्षुर्व्यदधुः ॥

भा०—अनन्तर उससमय संपूर्ण उन टर्किनिवासीलोगोंने ऐंग्लिश और फ्रान्सीयलोगोंकी दीहुई सहायताको पाकर अतएव युद्धकरनेमें उद्यत होकर रशियाके लोगोंके साथ क्रिमियानामक संग्राम किया ॥ २२ ॥

अथो निकोल्सो ध्वजिनीसमावृतो
महाहवे टर्किनिवासिनां नृणाम् ।
जहार नौसंघमनन्यशासनो
बलोपयुक्तो विदधाति साहसम् ॥ २३ ॥

टी०—अथो इति । अथोऽनन्तरं अनन्यशासनो निरंकुशो ध्वजिनीसमावृतो वाहिनीयुक्तो निकोलसोनाम रशियाभूपः महाहवे संग्रामे टर्किनिवासिनां टर्किदेशीयानां नृणां नौसंघं तरीसमुदायं जहार अपाहरत् बलेन उपयुक्तः पुरुष इति शेषः साहसं धाष्टर्यं [ साहसं तु दमे दुष्करकर्मणि अविमृश्यकृतौ धाष्टर्ये इति हैमः ] विदधाति करोतीत्यर्थान्तरेण समर्थ्यते ॥

1. Crimea. 2. Nicholas.

अथैंग्लिशानां पृतना बुभुक्षया
न्यपीड्यतान्धोऽनुपलब्धिकारणात् ।
तदा नृपेशी करुणार्द्रमानसा
भटानगोप्सीदशनादिवस्तुभिः ॥ २८ ॥

टी०—अथेति । अथानन्तरं ऐंग्लिशानां पृतना सेना अन्धसोऽन्नस्य याऽनुपलब्धिरप्राप्तिस्तत्कारणाद्धेतोः बुभुक्षया क्षुधा न्यपीड्यत अबाध्यत तदा तस्मिन्समये करुणार्द्रमानसा दयार्द्रहृदया नृपेशी राजेश्वरी अशनादिवस्तुभिः भोजनप्रभृतिभिर्भटान् वीरान् अगोप्सीद् ररक्ष ॥

भा०—अनन्तर ऐंग्लिशलोगोंकी सेना अन्नकी अप्राप्तिरूप हेतुसे बुभुक्षासे पीडित होगई उससमय दयायुक्त महारानीने भोजनादिकोंसे उन सांग्रामिकवीरोंकी रक्षाकी ॥ २८ ॥

रसेषुनागेन्दुमिते शकेऽरयः
पराजितास्ते रशियाधिवासिनः ।
ययुः शरण्यां शरणं नृपेश्वरीं
मनोऽर्थसिद्धिप्रदपादपङ्कजाम् ॥ २९ ॥

टी०—रसेति । रसेषुनागेन्दुमिते षट्पञ्चाशदधिकाष्टादशशतमिते क्रैष्टशके पराजिता विजितास्ते रशियाधिवासिनोऽरयः मनसो योऽर्थसिद्धिस्तत्प्रदं पादपङ्कजं चरणकमलं यस्या एवंविधां शरण्यां रक्षित्रीं नृपेश्वरीं राजेश्वरीं शरणं गोपनभावं ययुः प्रापुः ॥

भा०—१८५६ ईसवीमें जीतेहुए वे रशियाके शत्रु मनोऽभिलषित फलदेनेवाली तथा रक्षाकरनेमें निपुण राजेश्वरीके शरणको प्राप्तहुए ॥ २९ ॥

प्रशान्तकोपानलवर्च्चिषावुभौ
विपक्षसंघौ नरपालिकाज्ञया ।

1. Russia.

भा०—अनन्तरभी उन टर्किनिवासी वीरोंने बड़ेबलसे शत्रुओंका सांवाष्टुपूलनामक किसी बड़ेस्थलको आक्रमण करदिया क्योंकि पराक्रमशील पुरुष धरातलमें सुयशफलको पाते हैं ॥ २९ ॥

विचिन्तयन्तः स्वपराभवं परैः
पुनः सरोषा रशियाधिवासिनः ।
उपेत्य ते चैन्करमैनभूस्थले-
ऽरिभिः समं जन्यमकुर्वतान्तिमम् ॥ २६ ॥

टी०—विचिन्तेति । परैः शत्रुभिः स्वपराभवं आत्मापमानं विचिन्तयन्तो विचारयन्तः अतएव सरोषाः क्रोधसहितास्ते पूर्वोक्ता रशियाधिवासिनः पुरुषाः इन्करमैनं नाम या भूस्तत्स्थले तत्प्रदेशे उपेत्याधिगम्य च पुनर्भूयोऽरिभिर्वैरिभिः समं सार्धं अन्तिमं चरमं जन्यं युद्धं अकुर्वत व्यधुः ॥

भा०—अरियोंसे अपने पराभवको विचारतेहुए अतएव क्रोधयुक्त उन रशियावासी लोगोंने इन्करमैनभूप्रदेशमें जाकर फिर शत्रुओंके साथ अन्तिम युद्ध किया ॥ २६ ॥

तदापि तैष्टर्किनिवासिपूरुषै-
र्विपक्षवीरक्षतजप्रवाहिभिः ।
अनल्पदोर्दण्डबलोपशोभिभि-
र्विजिग्यिरे ते रशियानिवासिनः ॥ २७ ॥

टी०—तदेति । तदापि अनल्पं महत् यद्दोर्दण्डबलं भुजबलं तेनोपशोभन्ते तथाविधैः विपक्षवीराणां क्षतजं रुधिरं प्रवाहयन्तीति तादृशैस्तैष्टर्किनिवासिपूरुषैष्टर्किदेशीयैर्भटैः ते पूर्वोक्ता रशियानिवासिनो लोका विजिग्यिरे व्यजीयन्त "कर्मणि लिट्" ॥

भा०—उससमयभी बड़ेबाहुबलशाली और शत्रुओंके रुधिरको बहावनेवाले उन टर्किदेशीय वीरोंसे वे पूर्वोक्त रशियाकेलोग जीतेगये ॥ २७ ॥

1. Russia. 2. Inkerman. 3. Turkey.

तृतीयसूनुं शुभलक्षणाञ्चितं

प्रजाहिताया जनयज्जनप्रिया ॥ ३२ ॥

टी०—अथेति । अथानन्तरमपि जनप्रिया लोकप्रेमपात्रं सती पतिव्रता राजभिः सुपूजिता समभ्यर्चिता सा राजेश्वरी शुभलक्षणाञ्चितं सम्यग्लक्षणयुतं वीररसाभिपूरितं महारथं युद्धाभियोगे ऽतिनिपुणं तृतीयसूनुं प्रजाहिताय लोकसुखाय अजनयदुदपादयत् ॥

भा०—अनन्तर सबलोगोंकी प्रिय पतिव्रता उस महारानीने वीररसपरिपूर्ण युद्धक्रियाकुशल अच्छेलक्षणोंसेयुक्त तृतीय पुत्रको लोगोंके सुखके लिये उत्पन्नकिया ॥ ३२ ॥

ततस्तृतीयोऽपि कुमारकस्तदा

सहान्यपुम्भिः प्रुशियानृपादिभिः ।

नरेन्द्रसंसेवितपादयाऽनया

कनाटदेशाधिपतिर्व्यधीयत ॥ ३३ ॥

टी०—ततइति । ततोऽनन्तरं तदा तस्मिन्समये नरेन्द्रैः संसेवितौ पादौ यस्या एवंविधयाऽनया नृपेश्या प्रुशियानृपादिभिः प्रुशियादेशभूपतिप्रभृतिभिः अन्यपुम्भिः सह तृतीयः कुमारकोऽपि कनाटदेशाधिपतिः कनाटभूपो व्यधीयत " कर्मणि लङ् " चक्रे ॥

भा०—अनन्तर उससमय राजसेवितचरणवाली उस महारानीने प्रुशियाके राजावगैरह और पुरुषोंके साथ अपने तृतीयपुत्रकोभी कनाटदेशका राजा ( ड्यूक आफ्कनाट ) बनाया ॥ ३३ ॥

अथ सकलधरायां गीयमानार्य्यकीर्तिः

प्रशमितनिखिलारिर्दीनसम्पालनार्था ।

कृततयनसुशिक्षा नन्दनेशी यथेष्ट-

महरहरतिसौख्यं प्राप राज्योपयुक्तम् ॥ ३४ ॥

1. Connaught ( Duke of ). 2. London.

प्रचक्रतुः सन्धिमभव्यवारणं

पुनर्निजग्मुर्विषयान्स्वकाञ्जनाः ॥ ३० ॥

टी०—प्रशान्तेति । प्रशान्ता निर्गता कोपानलस्य क्रोधवह्नेर्र्चिर्ज्वाला ययोस्तावुभौ विपक्षसंघौ शत्रुनिवहौ, नरपालिकाया राजेश्वर्या आज्ञया अनुशासनेन अभव्यवारणं अमङ्गलव्यपोहनकारणं सन्धिं मैत्रीं प्रचक्रतुरकार्ष्टाम् जना योद्धारः पुनर्भूयः स्वकान् विषयान् देशान् निजग्मुर्ययुः ॥

भा०—शान्तक्रोधवाले दोनों शत्रुसमुदाय महारानीकी आज्ञासे अमङ्गल दूरकरनेवाली मैत्रीको प्राप्तहोगये और फिर योद्धालोग अपने अपने देशोंको चलेगये ॥ ३० ॥

यतः प्रशान्तिः सकले धरातले-

ऽभवत्तया लोकसुखैककार्य्यया ।

समग्रदेशेषु सुभिक्षमक्लमं

बभूव तस्यां नयचक्षुषि प्रभौ ॥ ३१ ॥

टी०—यत इति । यतो यस्मात्कारणात् लोकानां यत्सुखं तदेवैकं कार्यं यस्या एवंविधया तया सकले समग्रे धरातले प्रशान्तिः उपद्रवराहित्यमभवत् अजायत तथा नयचक्षुषि नीतिनयनविशिष्टायां तस्यां राजेश्वर्यां प्रभौ स्वामिन्यां सत्यां समग्रदेशेषु अखिलविषयेषु सुभिक्षं अन्नप्राचुर्यं अक्लमं क्लान्तिरहितं यथा भवति तथा बभूव ॥

भा०—जिस सन्धिकारणसे कि लोगोंके सुखको चाहनेवाली उस महारानीसे सारी पृथ्वीमें उपद्रवशान्ति होगई नीतिनेत्रवाली उस विकटोरियाके स्वामिनी होनेपर सारे देशोंमें अन्न अच्छा हुआ ॥ ३१ ॥

अथापि सा राजसुपूजिता सती

महारथं वीररसाभिपूरितम् ।

# एकादशः सर्गः ॥



अथ लोकपरित्राणकृतजन्मपरिग्रहा ।
रराज नरराजेशी विहितेन्द्रियनिग्रहा ॥ १ ॥

टी०—अथेति । अथानन्तरं लोकानां परित्राणं रक्षणं तस्मै कृतो जन्मनः परिग्रहो धारणं यया तथा विहितइन्द्रियाणां निग्रहो दमनं यया एवंविधा नरराजानां भूपतीनां ईशी स्वामिनी विक्टोरिया रराज शुशुभे। अत्र पादभागाभ्यासेषु द्विपादान्तभागस्य चतुर्थपादान्तभागयमने संदष्टकंनाम यमकम् ॥

भा०—अनन्तर लोकपरित्राणार्थ कृतशरीरधारणवाली जितेन्द्रिय राजेश्वरी सुशोभितहुई ॥ १ ॥

अध्यापयन्ती तनयान् विद्यामान्वीक्षिकीं तथा ।
अध्याप मानैकरसा सुयशो नन्दनेश्वरी ॥ २ ॥

टी०—अध्यापेति । मानः सन्मान एवैको रसो यस्या एवंविधा सा नन्दनेश्वरी तनयान् पुत्रान् आन्वीक्षिकीं अनु आकर्णनोत्तरं ईक्षणं परीक्षणं इति अन्वीक्षा सा एवप्रयोजनं यस्या "प्रयोजनमिति ठक् ठस्येक इति इकादेशः" एवंविधां विद्यां अध्यापयन्ती पाठयन्ती सती सुयशः शुभकीर्ति अध्याप प्रापेत् । अत्र प्रथमपादस्य तृतीयपादे यमने संदंशनामकं यमकम् ॥

भा०—सन्मानको चाहनेवाली उसनन्दनेश्वरीने पुत्रोंको दण्डादिक विचार विद्याको पढ़ाकर अच्छा यश प्राप्तकिया ॥ २ ॥

ततो ऽधिकारिपुरुषान् राज्यसंस्थापनाय सा ।
प्रायुङ्क्त भारते वीरे राज्यसम्भ्रान्तिकैः सह ॥ ३ ॥

टी०—अथेति। अथानन्तरं प्रशमिता निखिला अरयो यया एवंवि-धा दीनानां दुर्बलानां सम्पालनं सम्यक्पोषणं एवार्थो यस्या अतएव सकलधरायां समग्रपृथिव्यां गीयमाना अनुरागेणोच्चार्यमाणा आर्या श्रेष्ठा कीर्तिर्यस्याः तथा कृता तनयानां सुशिक्षा शुभानुशासनं यया एवं-विधा नन्दनेशी राजेश्वरी यथेष्टं यथाभिलषितं यथा भवति तथा राज्यो-पयुक्तं राज्यसम्बन्धि अतिसौख्यं बृहदानन्दं प्राप उपागमत् ॥

भा०—अनन्तर सब अरियोंकी दमनकरनेवाली तथा दीनलोगोंकी प्रतिपा-लक अतएव समग्रपृथ्वीमें प्रशंसितयशवाली महारानी अपने सब पुत्रोंको सुशि क्षितकर यथाभिलषित राज्यसम्बन्धि महासौख्यको प्राप्तहुई ॥ ३४ ॥

इति दुर्गादत्तकृतौ एडवर्डवंशे महाकाव्ये राजेश्वरीकुमारजन्मोत्सव वर्णनन्नाम दशमः सर्गः ॥ १० ॥



भा०——उससमय १८५७ ईसवीमें ऐंग्लिशलोगोंने गौकी चर्बीसे अनुलिप्त अग्न्यस्त्र ( कार्तूस ) को बनाया ॥ ६ ॥

**यन्मुखं दशनैः शश्वदाकृत्य च वशान्वितम् ।**
**अजायत प्रयोगोऽस्य शत्रौ तत्क्रोधकारणम् ॥ ७ ॥**

टी०——यन्मुखमिति । शश्वन्निरन्तरं वशान्वितं यन्मुखं दशनैर्दन्तैराकृत्य विदार्य्य शत्रौ वैरिणि अस्यास्त्रविशेषस्य प्रयोगो हननप्रयोगोऽजायत तद्वृत्तं क्रोधकारणं आसीदिति शेषः ॥

भा०——निरन्तर चर्बीसे लिपटेहुए जिसके मुखको दांतोंसे काटकर शत्रुमें इसअस्त्रका प्रयोग होताथा वही एक क्रोधकारण हुआ ॥ ७ ॥

**अनेनास्मद्धर्म्मपथो विनश्यति न संशयः ।**
**मिषमेतत्समालम्ब्याकुप्यन् भारतसैनिकाः ॥ ८ ॥**

टी०——अनेनेति । अनेन प्रकारेण अस्मद्धर्म्मपथः "ऋक्पूरब्धूःपथामानक्षे इति समासान्तो ऽप्रत्ययः" अस्माकं धर्म्मस्य मार्गो विनश्यति नाशंप्राप्नोति अत्र संशयो नास्ति भारतसैनिका भारतीया योद्धारः एतन्मिषं निमित्तं समालम्ब्याङ्गीकृत्य अकुप्यन् ऐंग्लिशेभ्य इति शेषः ॥

भा०——इस बातसे हमारा धर्म्ममार्ग नष्टहोता है इस बातमें सन्देह नहीं भारतदेशके सैनिकोंने इस बहानेको लेकर ऐंग्लिशोंके लिये कुपित होगये ॥ ८ ॥

## ( युग्मकम् )

**ऐंग्लिशैरवधोदेशः स्वराज्ये विनियोजितः ।**
**स्वायत्तराज्याद्भ्रष्टःपुमान्याति कथं सुखम् ॥ ९ ॥**
**इति कोपानलः पूर्व्वं तद्राजानां हृदि स्थितः ।**
**तदिङ्गितानिलं पश्चात् प्राप्यादेदीप्यत स्फुटम् ॥ १० ॥**

टी०——ऐंग्लिशैरिति । ऐंग्लिशैरवधोनामदेशः स्वराज्ये निजायत्तदेशे

टी०—ततइति । ततोऽनन्तरं सा नृपेशी भारतवर्षे राज्यसंस्थापनाय अधिकारिपुरुषान् अधिकृतांल्लोकान् आजौ संग्रामे असम्भ्रान्तिकैः सम्भ्रमरहितैर्वीरैः सह मायुङ्क्त प्रेरयाञ्चक्रे । अत्र युक्पादयमकम्. द्वितीयेच चतुर्थेच यमकं यत्र दृश्यते । युक्पादयमकं तत्तु विज्ञेयं कविपुङ्गवैरिति ॥

भा०—अनन्तर महारानीने राज्यस्थितिकेलिये अधिकारीलोगोंको संग्राममें भ्रमरहित वीरोंके साथ भारतवर्षमें भेजा ॥ ३ ॥

भारतीयैः समं सैन्यै मण्डलेषु समन्ततः ।
भारती यतमानास्ते विचेरुः स्थितिकारणात् ॥ ४ ॥

टी०—भारतीति । तेऽधिकारिणः पुरुषा भारतीयैर्भारतवर्षीयैः सैन्यैः समं सार्धं भाच रतिश्च [ स्युः प्रभारुग्रुचिस्त्विड्भा भाश्छविद्युतिदीप्तयः इत्यमरः ] ते उभे यतमानाः साधयन्तः समन्तात् मण्डलेषु स्थितिकारणात् स्थित्यर्थं विचेरुः भ्रेमुः । अत्र अयुग्मपादयमकम् ॥

भा०—दीप्ति और प्रीतिको यत्नसहित बढ़ातेहुए वे अधिकारीलोग भारतीय सेनाओंके साथ चारोंतर्फ प्रत्येक ज़िलाओंमें स्थितिके कारण फिरनेलगे ॥ ४ ॥

हिन्दुधर्म्मविरुद्धन्तदिहगोमांसभक्षणम् ।
विदितं सर्व्वमनुजै रखिलेऽपि धरातले ॥ ५ ॥

टी०—हिन्द्विति । इह जगति सर्वमनुजैः अखिले धरातलेऽपि गोमांसभक्षणं हिन्दुधर्म्मेण विरुद्धं विपरीतं तत्सर्वं विदितं ज्ञातमस्ति ॥

भा०—इसजगत्में समग्र धरातलके बीच सबलोगोंको गोमांसभक्षण हिन्दुधर्म्मके विपरीत यह बात विदितहै ॥ ५ ॥

नगेषुनागेन्दुमिते शके चेंग्लिशमानवाः ।
तदा गोवशयालिप्तमनलास्त्रं विनिर्ममुः ॥ ६ ॥

टी०—नगेति । तदा तस्मिन्समये नगेषुनागेन्दुमिते सप्तपञ्चाशदधिकाष्टादशशतमिते क्रैष्टशके ऐंग्लिशमानवाश्च गोवशयालिप्तं गोमेदसायुक्तं अनलास्त्रं अ स्यत्रविशेषं विनिर्ममुः अघटयन् ॥

सेनापतीनामनया तिरश्चक्रे प्रबोधनम् ।
जनोऽपवादबधिरो न शृणोति महद्वचः ॥ १३ ॥

टी०—सेनेति । अनया सेनया सेनापतीनां प्रबोधनं उपदेशः तिरश्चक्रे ऽवमेने " कर्मणि लिट् " अपवादबधिरो जनो महद्वचः श्रेष्ठानां वचनं न शृणोति नाकर्णयतीत्यर्थान्तरेण समर्थ्यते ॥

भा०—इस बिगड़ी हुई सेनासे सेनापतियोंका समझाना तिरस्कारयुक्त किया गया क्योंकि अपवादसे बधिरलोग बड़ोंके वचनको नहीं सुनता है ॥ १३ ॥

तदैव सेनापतयस्तदस्त्रं हि न्यवारयन् ।
तथाऽप्यग्निं समुद्दीप्तं शमितुं कस्तमीश्वरः ॥ १४ ॥

टी०—तदेति । हीति निश्चयेन तदा तस्मिन्समये एव सेनापतयस्तद् वशान्वितं अस्त्रं न्यवारयन् दूरीचक्रुः तथापि समुद्दीप्तं उत्थितं तं क्रोधरूपं अग्निं शमितुं शीतलं कर्तुं क ईश्वरः समर्थो बभूव न कोऽपीति भावः ॥

भा०—यह प्रसिद्ध है कि उसीसमय सेनापतियोंने उस अस्त्र ( कार्तूस ) को दूर करादिया तोभी प्रदीप्त उस क्रोधाग्निको शान्तकरनेको कौन समर्थ था ॥ १४ ॥

ततस्तेऽवधदेशीया मिथ्यावादेन कोपितान् ।
भटानुद्द्योतयामासुर्निष्काशयितुमाङ्ग्लिशान् ॥ १५ ॥

टी०—तत इति । ततोऽनन्तरं अवधदेशीया लोका ऐंग्लिशान् निष्काशयितुं अपवाहयितुं मिथ्यावादेन मृषापवादेन कोपितान् क्रोधितान् भटान् योद्धॄन् उद्द्योतयामासुः विग्रहार्थं प्रोत्साहयाञ्चक्रुरिति भावः ॥

भा०—अनन्तर उन अवधदेशीयलोगोंने ऐंग्लिशलोगोंको निकालनेके लिये मिथ्यापवादसे क्रोधित भटोंको उद्द्योतन किया ॥ १५ ॥

मेरठाख्ये पुरे पूर्वं प्रदीप्तक्रोधपावकाः ।
सैनिका द्राक् सैन्यपतीनाजघ्नुः कर्कशात्मकाः ॥ १६ ॥

विनियोजितो विपिश्रितोऽस्ति स्वायत्तराज्याद् विभ्रष्टः परिच्युतः पुमान् कथं केन प्रकारेण सुखं याति इति तद्राजानां तद्देशीयभूपानां हृदि कोपानलः क्रोधवह्निः पूर्वं स्थित आसीदिति शेषः पश्चात्तदिङ्गितानिलं ऐंग्लिशचेष्टारूपवायुं प्राप्य लब्ध्वा स्फुटं प्रव्यक्तं अदेदीप्यत अतिशयेन प्रदीप्तोऽभवत् ॥

भा०—ऐंग्लिशोंने अवधदेशको अपनेराज्यमें मिलालियाहै क्योंकि स्वायत्त राज्यसे भ्रष्टपुरुष किसतरह सुख पासकताहै इसतरह पहिलेही उन अवधदेशीय राजाओंके हृदयमें क्रोधवह्नि स्थितथा पीछे ऐंग्लिशलोगोंके चेष्टारूप वायुको पाकर प्रत्यक्ष प्रदीप्त होगया ॥ ९ । १० ॥

**गोवशान्वितमस्त्रं तद्भाषितं हि मृषोदितम् ।**

**ह्वीलरस्येतिहासेन स्पष्टमेतत्सुनिश्चितम् ॥ ११ ॥**

टी०—गोवशेति । हीति निश्चयेन गोवशान्वितं गोमेदसायुक्तं अस्त्रमस्ति तद्भाषितं वचनं मृषा मिथ्या उदितं गदितमासीदिति शेषः कुतः ह्वीलरस्य एतदाख्यस्य पुरुषस्य इतिहासेन एतत्पूर्वोक्तं वचः स्पष्टं सुनिश्चितं बभूव ॥

भा०—यह बात प्रसिद्धहै कि गौकीचर्बी से युक्त अस्त्रहै यह कथन झूठथा क्योंकि ह्वीलरके इतिहाससे यह बात स्पष्ट निश्चितहोगई ॥ ११ ॥

**तेन मिथ्यापवादेन भारतीया पताकिनी ।**

**मनुजस्येव नियतिर्बभूव विमुखी तदा ॥ १२ ॥**

टी०—तेनेति । तदा तस्मिन्समये तेन पूर्वोक्तेन मिथ्यापवादेन भारतीया भारतदेशीया पताकिनी सेना मनुजस्य नियतिरिव भाग्यंयथा विमुखी पराङ्मुखी बभूव ॥

भा०—उससमय उस मिथ्यापवादसे भारतीयसेना मनुष्यके भाग्यकीतरह विमुखहोगई ॥ १२ ॥

---

1. Wheeler.

भा०—उन वैरियोंने जहां ऐंग्लिशलोगोंको पायाथा वहीं मारदिया क्योंकि क्रोधपरवश धूर्तलोग इसलोकमें पापको नहीं देखते ॥ १९ ॥

**राजवंशसमुत्पन्नं यावनं वृत्तिपालितम् ।**

**ते साम्राज्यपदे तत्रास्थापयँस्तं यदृच्छया ॥ २० ॥**

टी०—राजेति । तत्रेन्द्रप्रस्थे ते सैनिका राजवंशसमुत्पन्नं राजकुलसंभवं यावनं यवनजातीयं वृत्तिपालितं ऐंग्लिशजनदत्ताजीविकया पोषितं तं कश्चित्प्रसिद्धं पुरुषं यदृच्छया स्वेच्छया साम्राज्यं चक्रवर्तित्वं तत्पदे तत्स्थाने अस्थापयन् ॥

भा०—दिल्लीमें उन सैनिकलोगोंने राजकुलोत्पन्न यवनजातीय तथा ऐंग्लिशोंकी दीहुई आजीविकासे पलेहुये किसी पुरुषको अपनी इच्छासे साम्राज्य पद में रखदिया ॥ २० ॥

**तत्र पञ्चनदीयस्य देशस्याधिपतिस्तदा ।**

**लारेन्स इति विख्यातः ससैन्यः समुपाययौ ॥ २१ ॥**

टी०—तत्रेति । तदा तस्मिन्समये तत्र नगरे पञ्चनदीयस्य देशस्य पञ्चाम्बुविषयस्य अधिपतिर्लार्डः लारेन्स इति विख्यातः प्रसिद्धः ससैन्यो वाहिनीयुतः सन् समुपाययौ आजगाम ॥

भा०—उससमय पञ्जाबका लार्ड लारेन्सनामक सेनासहित उस दिल्लीमें आपहुँचा ॥ २१ ॥

**तत्र शैक्खी महासेना संयति प्राप्तगौरवा ।**

**शस्त्राणि द्विषतां तेषां निश्चुकोष समन्ततः ॥ २२ ॥**

टी०—तत्रेति । तत्र नगरे शैक्खी शिक्खजातीया महासेना अनीकिनी तथा संयति संग्रामे प्राप्तगौरवा लब्धसंमाना एवंविधा सती तेषां द्विषतां शत्रूणां शस्त्राणि आयुधानि समन्ततोऽभितो निश्चुकोषापजहार ॥

भा०—उस दिल्लीमें संग्राममें प्राप्तप्रतिष्ठावाली शिक्खलोगोंकी सेनाने उन सैनिकोंके अस्त्र शस्त्रोंको छीनलिया ॥ २२ ॥

1. Lawrence ( Sir I. ).

टी०—येषामिति । उद्दीप्त उद्धतः क्रोधपावकः कोपानलो येषां अतएव कर्कशः कठोरः आत्मा येषां तथाविधाः सैनिकाः पूर्वं मेरठाख्ये मेरठनामनि पुरे प्राक् शीघ्रं सैन्यपतीन् सेनाध्यक्षान् आजघ्नुः अवधिषुः ॥

भा०—बड़े क्रोधयुक्त अतएव क्रूरस्वभाववाले सैनिकलोगोंने पहिले मेरठ नगरमें अफसरों सेनापतियोंको मारदिया ॥ १६ ॥

ततो महाञ्जनाघातः सकलेऽपि पुरेऽभवत् ।
मन्ये कृतान्तः क्षुधितः कल्यवर्तं समाचरत् ॥ १७ ॥

टी०—तत इति । ततोऽनन्तरं सकले पुरेऽपि महान् जनाघातो जनसंमर्दोऽभवत् क्षुधितः कृतान्तो यमः कल्यवर्तं भोजनात्प्राक् अल्पभोजनं समाचरत् चिदर्थं इत्यहं मन्ये जानामि अत्रोत्प्रेक्षालङ्कारः ॥

भा०—अनन्तर सारेनगरमें बड़ा जनसंमर्द हुआ मैं समझताहूँ कि क्षुधार्त यमने भोजनके पूर्व अल्पभोजन को किया ॥ १७ ॥

अथेन्द्रप्रस्थं संप्राप्य कृतलोकविमर्दनाः ।
घातुकास्ते प्रतिगृहमैंग्लिशानगवेषयन् ॥ १८ ॥

टी०—अथेति । अथानन्तरं इन्द्रप्रस्थं नाम नगरं संप्राप्योपगम्य कृतं लोकानां विमर्दनं यैस्ते घातुकाः क्रूराः प्रतिगृहं प्रतिवेश्म ऐंग्लिशाङ्गनान् अगवेषयन् अमृगयन्त ॥

भा०—अनन्तर दिल्लीनगरको जाकर उन घातुकलोगोंने सबलोगोंको त्रासितकर प्रत्येक घरमें ऐंग्लिशलोगोंको अन्वेषण किया ॥ १८ ॥

यत्रालभन्तैंग्लिशाँस्तेऽवधिषुस्तानरातयः ।
क्रोधसंमूर्च्छिता धूर्ता न पश्यन्तीह पातकम् ॥ १९ ॥

टी०—यत्रेति । अरातयो विद्वेषिणो यत्र स्थाने ऐंग्लिशान् अलभन्त प्रापन् ते वैरिणस्तानैंग्लिशान् अवधिषुः जिहिंसुः क्रोधसंमूर्च्छिताः कोपपरवशा धूर्ताः शठा इह जगति पातकं कल्मषं न पश्यन्तीत्यर्थान्तरन्यासेन समर्थयते ॥

टी०--विषयस्येति। अत्र लक्ष्मणपुरे पुरा पूर्वं अवधस्य विषयस्य राजधानी अभवत् अग्रिया मुख्या या राजनगरी महेश्या राजेश्वर्या अचिरेणैव कालेन स्वाधीना स्वायत्ता अक्रियत व्यधीयत "कर्म्मणि लङ्" ॥

भा०--इस लक्ष्मणपुरमें पहिले अवधदेशकी राजधानीथी जो मुख्य राजधानी थोडेहीदिनोंसे राजेश्वरीने स्वायत्त करलीथी ॥ २६ ॥

एतस्माल्लक्ष्मणपुरात् क्रूरास्ते सैनिकाः खलाः ।
हेवलौकेनैंग्लिशेनावार्य्यन्तात्मपराक्रमैः ॥ २७ ॥

टी०--एतस्मादिति । ऐंग्लिशेन ऐंग्लिशदेशोत्पन्नेन हेवलौकेन एतदाख्येन क्रूरा घातुकाः खला दुष्टास्ते सैनिका एतस्माल्लक्ष्मणपुरात् आत्मपराक्रमैः स्वविक्रमैरवार्य्यन्त निरकाश्यन्त ॥

भा०--इस लखनऊसे हेवलौकनामक ऐंग्लिशने उन कठोरसैनिकोंको अपने पराक्रमसे हटादिया ॥ २७ ॥

अतोऽत्र नगरेऽत्यर्थं मनुजानां विसंक्षयः ।
घातुकैर्विहितामर्षैरभूल्लोकभयङ्करः ॥ २८ ॥

टी०—अत इति। अतःकारणात् अत्र नगरे अत्यर्थं अतिशयेन विहितामर्षैः कृतकोपैर्घातुकैः पुरुषैर्लोकभयङ्करो जनभीतिप्रदो मनुजानां विसंक्षयो विनाशोऽभूत् ॥

भा०—जिसकारणसे इस नगरमेंभी कुपित घातुकलोगोंसे अतिशयकरके लोगोंको भीतिप्रद जनक्षय हुआ ॥ २८ ॥

ततः कर्णपुरे गत्वा नृशंसैः सैनिकैस्तदा ।
वगाहितं पुरं सर्व्वं भीतभीतमिवाऽभवत् ॥ २९ ॥

टी०—तत इति। ततोऽनन्तरं तदा तस्मिन्समये कर्णपुरे गत्वा आहिराज्य नृशंसैः क्रूरैः सैनिकैर्वगाहितं अवलोडितं सर्व पुरं भीतभीतं अतिभीतमिव "वीप्सायां द्विर्वचनम्" अभवत् अत्रोत्प्रेक्षालङ्कारः ॥

1. Havelock.

भारताधिपतिः केनिङ्ङ्[1] चैंग्लिशीं ध्वजिनीं तदा ।
आदाय तत्रेन्द्रप्रस्थे ययौ विघ्नोपशान्तये ॥ २३ ॥

टी०—भारतेति । तदा तस्मिन्समये भारताधिपतिर्लार्डोपाधिविशिष्टः केनिङ्ङ्नामकः पुरुषश्रेष्ठश्च तत्रेन्द्रप्रस्थे नगरे ऐंग्लिशीं ध्वजिनीं सेनां आदाय विघ्नोपशान्तये उपद्रवनिवृत्त्यर्थं ययौ प्राप ॥

भा०—इससमय भारताधिपति लार्डकेनिङ्ङ्भी उस दिल्लीमें गोरेलोगोंकी पल्टनलेके विघ्न दूरकरनेके लिये आपहुँचा ॥ २३ ॥

सैनिकान्घातुकानेतावनेकैश्चाटुभाषितैः ।
यथा कथञ्चित्सन्तोष्य व्यधातां शान्तिमत्र तौ ॥ २४ ॥

टी०—सैनिकानिति । तावेतौ केनिङ्ङ्लारेन्सनामकौ लार्डौ घातुकान् क्रूरान् सैनिकान् अनेकैर्बहुविधैः चाटुभाषितैः प्रियवचनैः यथा कथञ्चिन्महता प्रयत्नेन सन्तोष्य प्रसन्नान्विधाय अत्र नगरे शान्तिं विघ्नपरिहारं व्यधातां अकुरुताम् ॥

भा०—उन दोनों लार्डोंने उन घातुकलोगोंको प्रियवचनोंसे बडेप्रयत्नके साथ सन्तुष्टकर उस नगरमें शान्तिस्थापनकी ॥ २४ ॥

अथ ते लक्ष्मणपुरे घातुकाः सहसैत्य हि ।
तथैवाक्लेशयँस्तत्र चैंग्लिशानतिदुःखितान् ॥ २५ ॥

टी०—अथेति । अथानन्तरं हीति निश्चयेन ते घातुका नृशंसाः सहसा शीघ्रं लक्ष्मणपुरे एत्य प्राप्य तथा एव पूर्वप्रकारेण तत्र नगरे च अतिदुःखितान् ऐंग्लिशान् अक्लेशयन् अतर्दयन् ॥

भा०—अनन्तर वे घातुकलोग जल्दीही लखनऊमें जाकर उसीतरह उस नगरमेंभी अतिदुःखित ऐंग्लिशलोगोंको क्लेशित करनेलगे ॥ २५ ॥

त्रिपथस्यावधस्यात्र राजधानी पुरा ऽभवत् ।
या महेश्या ऽचिरेणैव स्वाधीना ऽक्रियताश्रिया ॥ २६ ॥

---

1. Lord Canning, the Viceroy.

ये स्थिता भारते वर्षे ये बभूवुस्तदैंग्लिशे।
ते सर्व्वे चैंग्लिशजना भारताय विचुक्रुधुः॥ ३३॥

टी०—य इति। तदा तस्मिन्समये ये ऐंग्लिशा भारतवर्षे ये च इंग्लिशे देशे स्थिता बभूवुः ते सर्वे ऐंग्लिशजना भारताय देशाय विचुक्रुधुः कुपिता बभूवुः "; क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप इति संप्रदानत्वम् " ॥

भा०—उससमय जो ऐंग्लिशलोग भारतदेशमें थे तथा जो इंग्लिशदेशमें थे वे संपूर्ण ऐंग्लिशलोग भारतदेशके लिये कुपित होगये ॥ ३३॥

## (विशेषकम्)

भारतावासिनां धर्म्मान् स्वधर्म्मनिहितात्मनाम्।
व्यपोहितुं रक्षितुं वा ऽधिकारोऽस्तु महीपतेः॥ ३४॥
इत्यैंग्लिशानां नियमाञ्चितं पत्रं निरीक्ष्य सा।
निजधर्म्मसमं सर्वं परधर्म्ममन्यत॥ ३५॥
ततः सा करुणार्द्रान्तःकरणावनिपेश्वरी।
तदिङ्गितं समालोच्य नाङ्गीचक्रे तदङ्कितम्॥ ३६॥

टी०—भारतेति। स्वधर्म्मे निहितः स्थिरीकृत आत्मा येषां तादृशानां भारतावासिनां भारतदेशीयानां धर्म्मान् व्यपोहितुं अपनेतुं रक्षितुं त्रातुं वा महीपते राज्ञोऽधिकारोऽस्तु सा विक्टोरिया इति एवं ऐंग्लिशानां जनानां नियमाञ्चितं संश्रयोपेतं पत्रं निवेदनदलं निरीक्ष्य निजधर्म्मेण समं तुल्यं सर्वं समग्रं परधर्म्मं अन्यधर्म्मं अमन्यत मेने ततोऽनन्तरं करुणया दयया आर्द्रं अन्तःकरणं यस्याः एवंविधा साऽवनिपेश्वरी राजेश्वरी तेषामैंग्लिशानां इङ्गितं हिन्दुधर्म्मविनाशकं चेष्टितं समालोच्य विचार्य तदङ्कितं ऐंग्लिशलिपितं न अङ्गीचक्रे न स्वीचकार ॥

1. England.

भा०--अनन्तर कानपुरमें जाकर उन क्रूरसैनिकोंसे अवलोडित सारा नगर अतिशय विप्लुत ऐसा होगया ॥ २९ ॥

राज्याद् भ्रष्टो विठूरेशो नानासञ्ज्ञोऽत्र पत्तने ।
विश्वासपात्रं सर्वेषामैंग्लिशानामजायत ॥ ३० ॥

टी०--राज्यादिति । अत्र पत्तने नगरे राज्याद् भ्रष्टः परिच्युतो विठूरेशो विठूरदेशाधिपो नानासंज्ञो नानाख्यः सर्वेषां ऐंग्लिशानां विश्वासपात्रं अजायताभूत् ॥

भा०--राज्यसे परिच्युत विठूरदेशका राजा नानसाहब इस नगरमें सब ऐंग्लिश लोगोंका विश्वासपात्र था ॥ ३० ॥

तेन मिथ्याभिसन्धेन विश्वासप्रतिघातिना ।
युरूपदेशीयजनाः शतशो जघ्निरे खलैः ॥ ३१ ॥

टी०—तेनेति । विश्वासप्रतिघातिना विश्वसघातकेन मिथ्याभिसन्धेन भ्रष्टप्रतिज्ञेन तेन नानाख्येन शतशो युरूपदेशीयजना ऐंग्लिशाः खलैर्दुष्टैर्सैनिकैर्जघ्निरे अहन्यन्त "कर्मणि लिट्" ॥

भा०--विश्वासघाती भ्रष्टप्रतिज्ञ उस नानासंज्ञकने सैकड़ों ऐंग्लिशलोगोंको दुष्टसैनिकोंसे मरादिया ॥ ३१ ॥

भारताधिपतिः केनिङ्ग् शान्तचेताः सुबुद्धिमान् ।
क्रोधानलं शान्त्युदकैः शमयामास तत्र सः ॥ ३२ ॥

टी०—भारतेति । सुबुद्धिमान् प्राज्ञः अतएव शान्तचेता नम्रः भारताधिपतिः केनिङ्गनामकः स लार्डः तत्र नगरे क्रोधानलं सैनिककोपवह्निं शान्त्युदकैः प्रशान्तिरूपजलैः शमयामास शीतलतामनयत् ॥

भा०—बुद्धिविशिष्ट अतएव शान्तस्वभाव भारतेश्वर केनिङ्गनामक लार्डने उस कानपुरमें सैनिकोंके क्रोधाग्निको शान्तिरूप जलसे प्रशान्तकरदिया ॥ ३२ ॥

1. Europe. 2. Lord Canning.

ध्यन्तः सैन्यपतिर्नन्दननाम्नगराद् वाहिनीसङ्घैः सेनानिवहैः सह भारतेदेशे शान्त्यर्थं विघ्ननिवृत्तये आययौ माप ॥

भा०—यह बात प्रसिद्धहै कि बड़ावीर केम्पबेलनामक सेनापति नन्दन-नगरसे बहुतसेनाओंके साथ भारतदेशमें शान्तिस्थापनके लिये आपहुँचा ॥३९॥

**तदा भारतभूपस्यामृतसम्मितवाचया ।**
**निखिले विषये ऽत्यर्थं शान्तिः प्रादुरभून्नृषु ॥ ४० ॥**

टी०—तदेति । तदा तस्मिन्समये भारतभूपस्य भारताधीशस्य केनिङ्नामकस्य अमृतेन सम्मिता युक्ता या वाचा वाणी तया निखिले समग्रे विषये देशे नृषु जनेषु अत्यर्थं शान्तिः प्रादुरभूत् प्रकटीबभूव ॥

भा०—उससमय भारतेश केनिङ्नामक लार्डकी अमृतयुक्तवाणीसे सारे देशमें सबलोगों में अत्यन्तशान्ति हे गई ॥ ४० ॥

**यत्किञ्चिदपि ये पापं विग्रहेऽस्मिन् व्यधुस्तदा ।**
**केम्पबेलो हि ताञ्जाल्मान् पाशोत्त्रासैर्व्यनाशयत् ॥ ४१ ॥**

टी०—यदिति । हीति निश्चयेन तदा तस्मिन्समये ये पुरुषा अस्मिन् विग्रहे युद्धे यत्किञ्चिदपि यत्किमपि पापं अनर्थं व्यधुः अकार्षुः केम्पबेलोनाम सैन्येशस्ताञ्जाल्मान् दुष्टान् पाशोत्त्रासै रज्जुबन्धनक्लेशैः व्यनाशयदहिंसयत् ॥

भा०—यह बात प्रसिद्धहै कि उससमय जिन्होंने इससंग्राममें थोड़ाभी पाप कियाथा केम्पबेल सेनापतिने उन दुष्टोंको फांसीदेकर मरवादिया ॥ ४१ ॥

**महापराधी नानाख्योऽन्विष्यमाणो महाभटैः ।**
**नीहारचयवद्भूमौ तदा कुत्राऽप्यलीयत ॥ ४२ ॥**

टी०—महेति । महाभटैर्वीरैरन्विष्यमाणो ऽनुमृग्यमाणो महापराधी अतिदोषयुक्तो नानाख्यो विठूरेशो विठूरदेशाधिपतिः तदा तस्मिन्समये

1. Sir Colin Campbell.

भा०—स्वधर्ममें तत्पर भारतवासियोंके धर्मोंको दूरकरनेका अथवा रखनेका अधिकार राजाके हस्तगत होजाय इसतरह महारानीने ऐंग्लिशलोगोंके लिखेहुये पत्रको देखकर अपने धर्मके समान दूसरेके धर्मको माना अनन्तर दयार्द्रहृदय उस राजेश्वरीने उन ऐंग्लिशोंकी हिन्दुधर्मको नाशकरनेवाली चेष्टाको विचारकर उनके लिखेहुये पत्रको स्वीकार न किया ॥ ३४ । ३५ । ३६ ॥

ततः केनिङ् महासत्त्वः समयोचितकार्य्यकृत् ।
सर्वान्प्रावोध्य मनुजान् पुनः शान्तिमतिष्ठिपत् ॥ ३७ ॥

टी०—तत इति । ततोऽनन्तरं समयोचितं यत्कार्य्यं तत्करोतीति तथाविधो महासत्त्वो धैर्य्योपेतः केनिङ्लार्डः सर्वान् भारतीयान् ऐंग्लिशान् मनुजान् प्रावोध्य विज्ञाप्य पुनर्भूयः शान्तिं उपद्रवोपशान्तिं अतिष्ठिपत् स्थापयामास ॥

भा०—अनन्तर समयानुकूल कार्य्यकरनेवाले और धैर्य्यविशिष्ट केनिङ्नामक लार्डने सब भारतीय और ऐंग्लिशलोगोंको समझाकर पुनः शान्तिस्थापन कराई ॥ ३७ ॥

अथेन्द्रप्रस्थे भूयोऽपि श्रीमत्या विजयध्वजः ।
आनन्दपवनोद्धूतस्तर्जयामास तानरीन् ॥ ३८ ॥

टी०—अथेति । अथानन्तरं इन्द्रप्रस्थे नगरे भूयोऽपि पुनरपि श्रीमत्या राजेश्वर्या विजयध्वजो जयकेतुः आनन्द एव पवनो वायुस्तेन उद्धूत आकम्पितः सन् तान्पूर्वोक्तान् अरीञ्छत्रून् तर्जयामास अभर्त्सयत् ॥

भा०—अनन्तर दिल्लीमें फिरभी राजेश्वरीकी विजयपताका आनन्दरूप वायुसे इतस्ततः संचालनयुक्त होतीहुई उन पूर्वोक्त शत्रुओंको तर्जनायुक्त करनेलगी ॥ ३८ ॥

केम्पवेलो महाशूरः सेनाध्यक्षो हि भारते ।
नन्दनाद्वाहिनीसङ्घैः सह शान्त्यर्थमाययौ ॥ ३९ ॥

टी०—केम्पवेलइति । हीति निश्चयेन महाशूरः केम्पवेलो नाम सेना-

1. Lord Canning. 2. Campbell.

भा०—इस युद्धमें भारतदेशके सब राजाओंने शुद्धचित्तसे महारानी की सहायता की ॥ ४५ ॥

ततो नृपेश्या देशे ऽस्मिन् राजधर्मो ऽनयान्तकः।
विदार्य्य ध्वान्तपटलं दिवाकर इवाबभौ ॥ ४६ ॥

टी०—तत इति। ततोऽनन्तरं अस्मिन्देशे अनयान्तको ऽन्यायविनाशको नृपेश्या राजेश्वर्य्या राजधर्म्मो ध्वान्तपटलं अन्धकारं विदार्य्य व्यपोह्य दिवाकरः सूर्य्यइव आबभौ शुशुभे। अत्रोपमालङ्कारः ॥

भा०—अनन्तर इस भारतदेशमें अन्यायविनाशक महारानीका राजधर्म्म अन्धकारको दूरकर सूर्य्यकी तरह सुशोभित हुआ ॥ ४६ ॥

अथ भारतदेशभूमिपाली विषयोपद्रववारणं विधाय।
अपवर्जितमेघजालपङ्क्तिः स्फुटरोचिर्हि शशीवसाविरेजे ४७

टी०—अथेति। अथानन्तरं हीति निश्चयेन भारतदेशभूमिपाली भारतेश्वरी सा विक्टोरिया विषयोपद्रववारणं देशोपद्रवशान्तिं विधाय कृत्वा अपवर्जिता दूरीकृता मेघजालस्याभ्रपटलस्य पंक्तिर्येन अतएव स्फुटरोचिः परित्यक्तकान्तिः शशीव चन्द्रो यथा विरेजे दिद्युते अत्राप्युपमा। अस्मिन्पद्ये मालभारिणीवृत्तं लक्षणमुक्तम् ॥

भा०—अनन्तर भारतेश्वरी विकटोरिया देशोपद्रवशान्तिकर मेघोंसे रहित अतएव प्रकाशित चन्द्रमाकी तरह विराजमान हुई ॥ ४७ ॥

इति उर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये भारतोपद्रवशान्ति
वर्णनन्नामैकादशःसर्गः ॥ ११ ॥

नीहारचयवत् अवश्यायनिवह इव कुत्रापि भूमौ पृथिव्यां अलीयत अन्तर्हितोबभूव ॥

भा०—बंडवर्डेनीरोंसे अन्वेषणयुक्त कियाजाता महापराधी नानानामक विठूरदेशक स्वामी उससमय कुज्झटिकाकीतरह न जाने भूमिमें कहां छिपगया ॥४२॥

## ( युग्मकम् )

यो द्वेषिजन साहाय्याद्यावनं भूपवंशजम् ।
कर्तुं सम्राजमतुलं यततेस्माशु दुर्नयात् ॥ ४३ ॥
तं बहादुरशाहाख्यमिन्द्रप्रस्थनिवासिनम् ।
कारागृहमयोबन्धमाजीवं स न्यवेशयत् ॥ ४४ ॥

टी०—य इति । यः पुरुषो द्वेषिजनानां दुष्टसैनिकानां साहाय्यात् यावनं यवनजातीयं भूपवंशजं राजकुलोत्पन्नं कञ्चित्पुरुषं दुर्नयात् स्वहठात् आशु शीघ्रं अतुलं श्रेष्ठं सम्राजं सार्वभौमं कर्तुं यततेस्म सयत्नो बभूव स केम्पवेलः सेनापतिः इन्द्रप्रस्थनिवासिनं बहादुरशाहाख्यं तं प्रसिद्धं पुरुषं अयोबन्धं लोहशृङ्खलाद्युपेतं कारागृहं बन्दिगृहं आजीवं यावज्जीवं यथास्यात्तथा न्यवेशयत् न्ययोजयत् ॥

भा०—जिसने कि विद्वेषी सैनिकोंकी सहायतासे यवनजातीय राजकुलोत्पन्न किसीपुरुषको अपनेहठसे अनुपम चक्रवर्ती राजाबनानेके लिये यत्नकियाथा केम्पवेल सेनापतिने दिल्लीमें रहनेवाले उस बहादुरशाहको लोहशृङ्खलायुक्त बन्धनालय में जन्मभरके लिये कैदकरादिया ॥ ४३ । ४४ ॥

एतस्मिन्विग्रहे सर्व्वे चात्रत्या धराणिक्षितः ।
धराधरेश्याः साहाय्यमकार्षुः शुद्धचेतसा ॥ ४५ ॥

टी०—एतस्मिन्निति । एतस्मिन् विग्रहे युद्धे अत्रत्या भारतदेशीया धराणिक्षितो राजानश्च शुद्धचेतसा कपटरहितमनसा धराधरेश्या राजेश्वर्याः साहाय्यं सहायतां अकार्षुर्व्यदधुः ॥

स्वजनकस्य प्रतिज्ञां संकल्पं परिपूरयन् पूर्णतांप्रापयन्सन् आत्मनः स्वस्य समग्रदेशाधिपतित्वं अशेषदेशप्रभुत्वं विधातुं कर्तुं ऐषीदाचकाङ्क्ष ॥

भा०—उससमय गुप्तचेष्टावाला और श्रेष्ठ इमेन्युअल्नामक इटलिदेशाधिप अपने पिताकी प्रतिज्ञाको पूर्णकरताहुआ अपनेको सारेदेशका राजाबनाने को इच्छाकरनेलगा ॥ २ ॥

निपोलियंन्फ्रान्समहीभुजो भृशं
सहायतां प्राप्य स भूपतिः पुनः ।
विजित्य सर्वं विषयं महारणे
स्वराजधानीं विदधे सुरोमकम् ॥ ३ ॥

टी०—निपोलियन्निति । पुनर्भूयः कतिपयदिनानन्तरमित्यर्थः । स भूपतिः इमेन्युअल्नामको राजा निपोलियँश्चासौ फ्रान्समहीभुक् तस्य भृशमत्यर्थं सहायतां प्राप्य लब्ध्वा महारणे सर्वं विषयं देशं विजित्य स्वायत्तीकृत्य सुरोमकं शोभनं रोमनामकं स्थानविशेषं स्वराजधानीं आत्मराजनगरीं विदधे चक्रे ॥

भा०—कितनेही दिनोंके बाद इमेन्युअल्नामक राजाने निपोलियन्नामक फ्रान्सेश्वरकी अत्यन्त सहायताको पाकर संग्राममें सारेदेशको जीतकर रोमनामक स्थानको अपनी राजधानी बनालिया ॥ ३ ॥

नभर्तुनागेन्दुमिते शके पुनः
सुबुद्धिमान्कौबर्डनः सुसौहृदम् ।
तदेंग्लिशफ्रान्सकयोः परस्पर-
मकारयत्तद्व्यवहारकारणम् ॥ ४ ॥

टी०—नभेति । तदा तस्मिन्समये सुबुद्धिमान् प्राज्ञः कौबडन एतदाख्यः कश्चित्पुरुषो नभर्तुनागेन्दुमिते षष्ट्यधिकाष्टादशशतमिते क्रैष्टशके

1. Napolean. 2. France. 3. Rome. 4. Cobden.

# द्वादशः सर्गः ॥



अथेटलिस्थानविशेषकोऽपरः
पृथग्विभक्तो बहुमण्डलैरभूत् ।
यतो हि तद्देशनिवासिनोजनाः
स्वपारतन्त्र्येण विषादमाययुः ॥ १ ॥

टी०—अथेति । अथानन्तरं अपरोऽन्य इटलिनामकश्चासौ स्थान विशेषकः इटल्याख्यो भूप्रदेशो बहुमण्डलैः पृथग्विभक्तो ऽनेकभागो पेतोऽभूत् हीति निश्चयेन यतो यस्मात्कारणात् तद्देशनिवासिनस्तद्देशीया जनाः स्वपारतन्त्र्येण आत्मपराधीनतया विषादं खेदं आययुः प्रापुः । प्रथमत आरभ्य दशश्लोकपर्य्यन्तं वंशस्थं वृत्तम्. लक्षणमुक्तम् ॥

भा०—अनन्तर इटलिनामकदेश बहुतसारे जिलाओंमें बटाहुआथा जिससे कि वहांके रहनेवाले लोग परतन्त्र होनेके कारण बड़े दुःखितथे ॥ १ ॥

इमेन्युअल् तद्विषयाधिपोऽग्रणीः
पितुः प्रतिज्ञां परिपूरयँस्तदा ।
समग्रदेशाधिपतित्वमात्मनो
विधातुमैषीदभिसम्भृतेङ्गितः ॥ २ ॥

टी०—इमेन्युअल् इति । तदा तस्मिन्समये अभिसम्भृतेङ्गितो गुप्तचेष्टः अग्रणीः श्रेष्ठ इमेन्युअल्नामकस्तद्विषयाधिप इटलिदेशाधिपतिः पितुः

1. Italy. 2. Emmanuel (Victor), the son of Charles Albert, King of Sardinia.

दक्षिणादिङ्निवासिनं जनं लोकं निरीक्ष्यावलोक्य अनेका या नावस्तासां व्रातेन निवहेन निरुद्धा पद्धतिर्मार्गो यस्यैवंविधं तं जनं जलाहवे जलमध्यसंग्रामे प्रसभं बलात्कारेण जिगाय व्यजैष्ट ॥

भा०—अमेरिकाके उत्तरदिशाके लोगोंने द्वेषमतिवाले दक्षिणदिशाके लोगोंको देख अनेक नौकाओंके समूहसे रास्तोंको रोककर उन्होंको जलमध्यसंग्राममें जीतलिया ॥ ६ ॥

अथायनर्तुद्विपभूमिते शके
तदौत्तरीयो मनुजोऽरिसम्मतम् ।
तदीयदासत्वमपोह्य विक्रमाद्-
बलेनहीनान्मनुजाननन्दयत् ॥ ७ ॥

टी०—अथेति । अथानन्तरं तदा तस्मिन्समये औत्तरेय उत्तरादिक्सम्बन्धी "स्त्रीभ्योढक् ढस्येय्" मनुजो मनुष्यः अयनर्तुद्विपभूमिते द्वाषष्ट्यधिकाष्टादशशतमिते क्रैस्तशके अरिसम्मतं अमेरिकादक्षिणदिग्जनाभिमतं तदीयदासत्वं तेषां पाश्चात्यानां दासत्वं विक्रमात् स्वपराक्रमात् अपोह्य दूरीकृत्य बलेन हीनान् रहितान् मनुजान् लोकान् अनन्दयत् प्रसन्नानकरोत् ॥

भा०—अनन्तर उससमय उत्तरदिशकेलोगोंने १८६२ ईसवीमें दक्षिण अमेरिकाकेलोगोंका सम्मत पश्चिमदिशाकेलोगोंके दासत्व व्यवहारको अपने पराक्रमसे दूरकर बलहीनलोगोंको प्रसन्नकिया ॥ ७ ॥

अथापि नौमार्गनिरोधनाद्रणे
तूलभावोऽजनि चेंग्लिशे[1] तदा ।
यतोऽभवँस्तद्विषयाधिवासिनः
पटाद्यभावेन च शीतबाधिताः ॥ ८ ॥

---

1. England.

पुनर्भूयः इंग्लिशफ्रान्सकयोर्देशयोः परस्परं अन्योऽन्यं तद्व्यवहारकारणं तयोरिंग्लिशफ्रान्सदेशयोर्यो व्यवहार स्तस्य बीजं सुसौहृदं मित्रभावं अकारयद् व्यधापयत् ॥

भा०—उससमय बड़े बुद्धिमान् कौबडननामक पुरुषने १८६० ईसवीमें फिर इंग्लिश और फ्रान्सदेशका परस्पर तद्देशीयलोगोंका व्यवहारकारण मित्रभावको करादिया ॥ ४ ॥

अमेरिकादक्षिणदिङ्नरो भृशं
जने तदा पश्चिमदिक्समाश्रिते ।
बभूव दासत्वविधानदीक्षित-
स्तदेव तद्द्वेषनिदानमुत्कटम् ॥ ५ ॥

टी०—अमेरिकेति । अमेरिकाया या दक्षिणादिक् तस्या नरो मनुजः पश्चिमा या दिक् तत्र समाश्रिते जने भृशमत्यर्थं दासत्वं क्रीतदासत्वं तद्विधाने दीक्षितः कृतसंकल्पोबभूव तद्दासत्वविधानमेवोत्कटं प्रबलं तेषां पाश्चात्यानां द्वेषस्य निदानं आदिकारणं आसीदिति शेषः ॥

भा०—दक्षिणअमेरिकाके लोगोंने पश्चिमकी तरफ रहनेवाले लोगोंमें दासत्वविधानका न्याय प्रस्तुत करदिया वही काम उनलोगोंके द्वेषका बड़ामुख्य कारणथा ॥ ५ ॥

धनाधिपाशाश्रितमानवोमहा-
न्निरीक्ष्य विद्वेषधियं ह्यमुं जनम् ।
अनेकनौव्रातनिरुद्धपद्धतिं
जलाहवे तं प्रसभं जिगाय सः ॥ ६ ॥

धनेति । हीति निश्चयेन महान् प्रबलो धनाधिपस्य या आशा दिक् तस्यां आश्रितो स्थितो मानवो मर्त्यः विद्वेषधियं द्वेषबुद्धिं अमुं अमेरिका-

1. America.

पत्नोकोऽशेषजनः परिपूर्णतां आनन्दभावं अगात् प्राप हीति निश्चयेन प्रजा प्रकृतिः सुभूपतौ सुराज्ञिसति शान्ति उपद्रवराहित्यं उपैति प्राप्नोतीत्यर्थान्तरेण समर्थ्यते ॥

भा०——अनन्तर व्यापारीलोगोंसे पहिलेकीतरह और देशोंसे लायेहुए कपास वगैरहोंसे इंग्लिशदेशके सबलोग आनन्दित होगये क्योंकि प्रजा अच्छेराजाके होनेपर निरुपद्रवभावको प्राप्तहोती है ॥ १० ॥

अथैडवर्डो[1] युवराजसंज्ञः
कान्त्या सुशौर्य्येण धिया वरीयान् ।
रूपेण सन्निर्जितकामगर्वो
विवाहयोग्यां हि दशामियाय ॥ ११ ॥

टी०——अथेति । अथानन्तरं हीति निश्चयेन कान्त्या राजतेजसा सुशौर्य्येण सुविक्रमेण तथा धिया बुद्ध्या वरीयान् श्रेष्ठः रूपेण सौन्दर्य्येण सन्निर्जितोऽपहृतः कामस्य मदनस्य गर्वोऽभिमानो येन तथाविधो युवराजसंज्ञ एडवर्डः विवाहयोग्यां परिणयानुरूपां दशामवस्थां इयाय प्राप ॥

भा०——अनन्तर यह बात प्रसिद्धहै कि राजतेज शूरता और बुद्धिसे श्रेष्ठ तथा रूपसे कामदेवगर्वको दूरकरनेवाला युवराज एडवर्ड विवाहयोग्य अवस्थाको प्राप्तहुआ ॥ ११ ॥

अनेकभूपालसुता युवानं
माहाकुलीनं करुणार्द्रभावम् ।
राजेश्वरीसूनुमनन्यवीर्य्यं
विलोक्य तं कान्ततया समीषुः ॥ १२ ॥

टी०——अनेकेति । अनेके ये भूपाला मण्डलेश्वरास्तेषां सुताः कन्या युवानं तरुणं माहाकुलीनं "महाकुलादञ्खञाविति खञ्प्रत्ययः"

1. Edward ( Prince of Wales ).

टी०—अथेति । अथानन्तरमपि तदा तस्मिन्समये रणे संग्रामे नौमार्गनिरोधनात् तरीवर्त्मरोधनात् इंग्लिशदेशे वितूलभावः कार्पासराहित्यं अजनि अभूत् यतोयस्मात्कारणात् तद्विषये इंग्लिशदेशे अधिवासिनोजनाः पटाद्यभावेन वस्त्रादिरहितत्वेन च शीतेन बाधिताः पीडिता अभवन् अजायन्त ॥

भा०—अनन्तर उससमय युद्धमें नौकाओंके मार्गरोकनेसे इंग्लिशदेशमें कपासका अभाव होगया जिससे कि वहांके रहनेवालेलोग वस्त्रादिकोंके न होनेसे शीतसे पीडित होगये ॥ ८ ॥

ततो महेश्या निजशासनेन सः
प्रबोधितश्चोत्तरदेशमानवः ।
स्वकं निवार्य्याशु तरीव्रजं क्षणा-
त्स्फुटीचकारेंग्लिशदेशपद्धतिम् ॥ ९ ॥

टी०—ततइति । ततोऽनन्तरं महेश्या राजेश्वर्या निजशासनेन स्वाज्ञया स उत्तरदेशमानवः प्रबोधितःसन् आशु शीघ्रं स्वकं आत्मीयं तरीव्रजं नौसमुदायं निवार्य्य दूरीकृत्य क्षणात् इंग्लिशदेशस्य पद्धतिं मार्गं स्फुटीचकार उद्घाटयत् ॥

भा०—अनन्तर राजेश्वरीकी आज्ञासे समझायेहुए उत्तरदेशनिवासीलोगोंने अपने नौसमुदायको दूरकर जल्दीही इंग्लिशदेशकामार्ग खोलदिया ॥ ९ ॥

ततश्च देशान्तरतो यथा पुरा
वणिग्जनैराहृततूलकादिभिः ।
समग्रलोकः परिपूर्णतामगात्
सुभूपतौ शान्तिमुपैति हि प्रजा ॥ १० ॥

टी०—ततइति । ततोऽनन्तरं च वणिग्जनैर्यथापुरा पूर्ववदित्यर्थः देशान्तरतः अन्यदेशेभ्य आहृततूलकादिभिरानीतकार्पासादिभिः सम-

वेषःशृङ्गारो यस्यास्तथा तारुण्येन संशोभिता विराजिता वर्ष्मयष्टिः शरीरयष्टिका यस्या "रोरीति रेफस्यलोपः ढ्रलोपेपूर्वस्यदीर्घोऽणः, इति यष्टिशब्दस्यदीर्घः" एवंविधा रत्याकृतिः प्रेमस्वरूपा यद्वा कामकान्तास्वरूपा एलेकजेण्ड्रा इति अभिधानयुक्ता एतदाख्या सा राजकन्या उर्वशीव रराज शुशुभे अनेन तस्या रूपातिशयत्वं ध्वन्यते अत्रोपमालङ्कारः ॥

भा०—दयायुक्त शान्तस्वरूप शृङ्गारवाली तथा युवति और प्रेमस्वरूपा एलेकजेण्ड्रानाम वह राजकन्या रूपमें उर्वशीके समान सुशोभितहुई ॥ १४ ॥

डेन्मार्कदेशादथ राजकन्या
ययौ पुरे नन्दनसंज्ञके सा।
तत्पितृबन्ध्वादिजनाश्च हर्षात्
सध्र्यञ्च एवात्र बभूवुरस्याः ॥ १५ ॥

टी०—डेन्मार्केति। अथानन्तरं सा राजकन्या डेन्मार्कदेशात् नन्दन संज्ञके पुरे नन्दनाख्ये नगरे ययौ आजगाम अत्र नगरे तत्पिता च बन्धवश्चादयो येषां तथाविधाजनाश्च हर्षात् प्रमदात् अस्या एलेकजेण्ड्रायाः सह अञ्चन्तीति "सहस्यसध्रिः अप्रत्ययान्तेऽञ्चतौपरे" सध्र्यञ्चः सहगमनशीला एव बभूवुरजायन्त ॥

भा०—अनन्तर वह एलेकजेण्ड्रा नन्दननामकनगरमें आगई और उसके पिता, भ्राता वगैरहभी हर्षसे वहां उसके साथही आपहुंचे ॥ १५ ॥

राजेश्वरी राजकुमारिकां तां
श्रुत्वा गतामात्मपुरे स्नुषार्हाम्।
पुरोहितान्बन्धुजनानमात्याँ-
स्तत्स्वागतायाशु समादिदेश ॥ १६ ॥

---

1. Denmark. 2. London.

श्रेष्ठवंशोत्पन्नं करुणार्द्रभावं दयालुं तथा अनन्यवीर्य्यं अतुलितपराक्रमं एवंविधं राजेश्वरीसूनुं तं एडवर्डं कान्ततया पतित्वेन समीपुः आचकाङ्क्षुः अत्र परिकरालङ्कारः उक्तिर्विशेषणैः साभिप्रायैः परिकरोमत इति लक्षणात् ॥

भा०—अनेकराजाओंकी कन्या तरुण श्रेष्ठवंशोत्पन्न तथा दयालु और पराक्रमी श्रीमती विकटोरियाकेपुत्र एडवर्डको पतिभावसे चाहनेलगीं ॥ १२ ॥

डेन्मार्कदेशाधिपतेस्तनूजां
सत्याश्रवोऽसौ परिणेतुकामः ।
इति प्रतिज्ञां हि निशम्य तस्य
नैराश्यमीयुः क्षितिपालकन्याः ॥ १३ ॥

टी०—डेन्मार्केति । हीति निश्चयेन सत्याश्रवः सत्यप्रतिज्ञोऽसौ एडवर्डः डेन्मार्कदेशाधिपतेस्तनूजां तनयां परिणेतुकामः विवाहयितुमनाः "तुम्कामममनसोरपीतिमकारलोपः" अस्तीति शेषः क्षितिपालकन्याः सर्वा भूपानांसुता इतीत्थं तस्यैडवर्डस्य प्रतिज्ञां संकल्पं निशम्य श्रुत्वा नैराश्यं आशाराहित्यं ईयुर्जग्मुः ॥

भा०—यह निश्चयहै कि सत्यप्रतिज्ञ युवराज एडवर्ड डेन्मार्कदेशके राजाकी पुत्रीकेसाथ विवाहकरना चाहताहै सबराजकन्या इसतरह उस युवराजकी प्रतिज्ञाको सुनकर निराशभावको प्राप्तहोगई ॥ १३ ॥

सैलेक्जेण्ड्रेत्यभिधानयुक्ता
दयामयी शान्तसुरूपवेषा ।
तारुण्यसंशोभितवर्ष्मयष्टी
रराज रत्याकृतिरुर्वशीव ॥ १४ ॥

टी०—सेति । दयामयी अनुकम्पायुक्ता अतएव शान्तः सुरूपं एव-

1. Denmark. 2. Alexandra.

पूज्या अभ्यर्चनीया महेशी राजेश्वरी अनलर्तुनागेन्दुमिते त्रयःषष्ट्यधिका-ष्टादशशतमिते ऽस्मिन् क्रैष्टशके सुयौवराज्येन अश्चिताश्लाघ्या कान्ता रमणीया मूर्त्तिर्यस्य तथाविधस्य सुतस्य उपयामं विवाहं [ विवाहोपयमौ समौ तथा परिणयोद्वाहोपयमाः पाणिपीडनमित्यमरः ] प्रममे निशिचकाय ॥

भा०—अनन्तर उससमय विद्वज्जनमान्य राजेश्वरीने १८६३ ईसवीमें युवराज भावसे स्तुत्यमूर्तिविशिष्ट पुत्रके विवाहको निश्चय किया ॥ १८ ॥

अथापि कन्यावरयोर्विवाह-
महोत्सवः श्वो भवितेति पौराः ।
गृहे गृहे मङ्गलतूर्य्यघोषा-
स्तद्दर्शनार्थं नितरामहृष्यन् ॥ १९ ॥

टी०—अथेति । अथानन्तरमपि कन्यावरयोर्विवाहमहोत्सवः श्व आगामिदिवसे भविता 'ण्वुल्तृचौ धातोरेतौस्तः' भविष्यन् इतिहेतोः गृहे गृहे सद्मनि सद्मनि मङ्गलतूर्य्याणां घोषो मङ्गलवाद्यानां नादो येषां ते तथाविधाः पौरास्तयोर्दर्शनार्थं नितरामतिशयेन अहृष्यन् ननन्दुः ॥

भा०—अनन्तर कन्यावरोंका विवाह आगामिदिवसमें होनेवालाहै इसकारण घरघरमें मङ्गलकरनेवाले नगरकेलोग उनदोनोंके दर्शनके लिये अत्यन्त हर्षयुक्त हुए ॥ १९ ॥

ततो द्वितीये ऽह्नि सुराजमार्गे
प्रासादवातायनराजिकासु ।
स्थिताश्च पौराह्युपयामवेश्मा
यान्तावपैक्षन्त वधूवरौ तौ ॥ २० ॥

टी०—ततइति । ततोऽनन्तरं हीति निश्चयेन द्वितीयेऽह्नि तद्द्वितीय-दिवसे सुराजमार्गे घण्टापथे तथा प्रासादानां वातायनानि गवाक्षा

टी०—राजेश्वरीति । राजेश्वरी सार्वभौमी स्नुषार्हां पुत्रवधूयोग्यां तां राजकुमारिकां आत्मपुरे नन्दननगरे आगतां प्राप्तां श्रुत्वाऽऽदरार्थे आशु शीघ्रं पुरोहितान् बन्धुजनान् बान्धवान् अमात्यान्मन्त्रिणः तत्स्वागताय तस्याः प्रत्युद्गमनाय समादिदेश आज्ञापयामास ॥

भा०—महारानीने पुत्रवधूकेयोग्य उसराजकन्यको अपनेनगरमें आईहुई सुनकर पुरोहित ( पादरी ) बान्धव और मन्त्रियोंको उसके आदरके लिये भेजा ॥ १६ ॥

स मान्यलोको हि पतिंवरां तां
सत्कृत्य चान्यद्भवनं निनाय ।
यत्र स्थिता तोयनिधेस्तरङ्गान्
पौरीं श्रियं वीक्ष्य च सा ननन्द ॥ १७ ॥

टी०—स इति । हीति निश्चयेन स मान्यलोकः पुरोहितादिः श्रेष्ठो जनः पतिंवरां "संज्ञायां भृतॄवृजिधारिसहितपिदमः खच् अरुर्द्विषदजन्तस्य मुम्" खरुं तां राजकन्यां सत्कृत्य अन्यद्भवनं अपरं सौधं च निनाय प्रापयाम्बभूव यत्र हर्म्ये स्थिता सा कन्या तोयनिधेः समुद्रस्य तरङ्गान् वीचीः पौरीं नगरसम्बन्धिनीं श्रियं शोभां च वीक्ष्य दृष्ट्वा ननन्द जहर्ष ॥

भा०—यह बात प्रसिद्धहै कि उनपुरोहितादिकोंने उस राजकन्याको सत्कार कर दूसरेभवनमें निवासकराया जहां बैठीहुई वह राजकन्या समुद्रकीतरङ्गोंको तथा नगरकी शोभाको देखकर बड़ीहर्षितहुई ॥ १७ ॥

ततो महेशी विबुधाभिपूज्या-
नलर्तुनागेन्दुमिते शकेऽस्मिन् ।
सुयौवराज्याञ्चितकान्तमूर्ते-
स्तदोपयामं प्रममे सुतस्य ॥ १८ ॥

टी०—तत इति । ततोऽनन्तरं तदा तस्मिन्समये विबुधैर्विद्वद्भिरभि-

राजपुत्री आत्मानुरूपं निजयोग्यं एतं युवराजं चित्रा इन्दुमती भुवनैक-दीपं चन्द्रमिव नितान्तमत्यन्तं लोकस्थितये भुवनपालनार्थं अवाप लेभे अत्रोपमालङ्कारः । पौरवधूभिः पौराङ्गनाभिः इतीत्थं ईरितं कथितं कर्णा-भिरामं श्रोत्रयोरमणीयं आर्य्यं श्रेष्ठं वचो वचनं अनुशृण्वन् आकर्णयन् स युवराजमण्डपेन विवाहवेदिकादिना मण्डितं भूषितं सेण्टजेम्संनाम तत्प्रसिद्धं स्वविवाहसद्म निजपरिणयमन्दिरं समाविशत् प्रविवेश ॥

भा०—यह कुमारी जगत्की एक रत्नहै और यह युवराज दिशारूपस्त्रियों का एकहृदयहै यह निश्चयहै कि जगन्निर्माता ब्रह्माने लोगोंके आनन्दकारण इनदोनोंको जायापती बनाया । रमणीयशृङ्गारवाली इसराजकन्याने अपने योग्य इसयुवराजको चित्राने सारे भुवनके एकदीपक चन्द्रमाको जैसा अत्यन्तलोकस्थिति के लिये पाया । इसतरह नागरिकस्त्रियोंके कहेहुए कानोंको सुखदेनेवाले श्रेष्ठवचनको सुनतेहुए युवराजने मण्डपसे अलंकृत सेण्टजेम्सनामक प्रसिद्ध अपने विवाहमन्दिरको प्रवेशकिया ॥ २१ । २२ । २३ ॥

पुरोधसः कर्म्मविधानदक्षा-
स्तयोर्विवाहं विधिना विधाय ।
तदैव पाणिग्रहणाश्रवांस्ते
वधूवरौ तौ कथयाम्बभूवुः ॥ २४ ॥

टी०—पुरोधसइति । कर्म्मविधाने दक्षाश्चतुरास्ते प्रसिद्धाः पुरोधसः पुरोहितास्तयोरेडवर्डलेक्जेण्ड्र्योर्विवाहं पाणिग्रहणं विधिना स्वमत-विधानेन विधाय कृत्वा तदा तस्मिन्समय एव तौ वधूवरौ पाणिग्रहणा-श्रवान् विवाहनियमान् कथयाम्बभूवुः ॥

भा०—अपने कार्य्यमें कुशल पुरोहितलोगोंने उनदोनों वरकन्याओंका विवाह यथाविधिसे कर उसीसमय उनदोनोंको विवाहके नियम सुनाये ॥ २४ ॥

पौराङ्गनागीतकलाप्रवीणा
स्तयोर्हि पाणिग्रहमङ्गलानि ।

स्तेषां राजिकासु पंक्तिषु च स्थिताः पौरा नागरिकाजना उदयामवेश्म विवाहसद्म आयान्तौ गच्छन्तौ तौ वधूवरौ अवेक्षन्त आलुलोकिरे ॥

भा०——यह बात प्रसिद्धहै कि अनन्तर बाजारमें और झरोखोंमें बैठेहुये नगरके लोगोंने विवाहमन्दिरको जातेहुए वधूवरोंको देखा ॥ २० ॥

## ( विशेषकम् )

इयं कुमारी जगदेकरत्न-
मयंयुवाशालललनैकदृश्यः ।
आनन्दहेतू जगतांविधात्रा
व्यधायिषातां किल दम्पती तौ ॥ २१ ॥
विचित्रवेषावनिपात्मजेय-
मात्मानुरूपं युवराजमेतम् ।
चित्रेव चन्द्रं भुवनैकदीप-
मवाप लोकस्थितये नितान्तम् ॥ २२ ॥
इतीरितं पौरवधूभिराद्यं
कर्णाभिरामं हि वचोऽनुश्रृण्वन् ।
ससेण्टजेम्सं स्वविवाहसद्म-
समाविशन्मण्डपमण्डितं तत् ॥ २३ ॥

टी०—इयमिति । इयं कुमारी कन्यका जगदेकरत्नं लोकैकमणिरस्ति अयं युवा युवराज आशाललनानां दिक्स्त्रीणां एकदृश्य एकलक्ष्योऽस्ति किलेति निश्चयेन जगतांविधात्रा ब्रह्मणा आनन्दहेतू लोकानामितिशेषः तावुभौ दम्पती जायापती व्यधायिषाताम् अक्रियेताम् " कर्म्मणि लुङ् " । विचित्रोऽतिरमणीयो वेषो यस्या एवंविधा इयं अवनिपात्मजा

1. St. James.

टी०—तस्यामिति । तस्यां मङ्गलसम्बन्धिन्यां रजन्यां रात्रौ समन्तादभितः नगरी नन्दनाख्यापुरी अनेके बहवो ये पूर्णेन्दवः पूर्णचन्द्रास्तेषां मरीचिभिः किरणैर्दीप्ता रोचमाना अतएव मन्यक्तदेशा प्रकाशितसर्वस्थाना जगती पृथ्वीव शश्वन्निरन्तरं तडितो विद्युतो या प्रदीपावलिर्दीपपंक्तिस्तया राजिता शोभिता ऽभूत् ॥

भा०—उस वैवाहिक रात्रिमें चारोंतर्फसे नन्दननगरी अनेक पूर्णचन्द्रोंसे देदीप्यमान अतएव प्रकाशित सर्वस्थान पृथ्वीकीतरह बिजुलीकी दीपावलिसे विराजित हुई ॥ २७ ॥

विचित्रभूषावरवारयोषितो
मृदङ्गवीणाध्वनिदत्ततालिकाः ।
सुनूपुराशिञ्जितदृष्टकौशला
मनांसि जह्रुःसुचिरं सभासदाम् ॥ २८ ॥

टी०—विचित्रेति । विचित्रभूषा विचित्रालङ्काराः तथा मृदङ्गवीणाध्वनिषु दत्ता हस्ततालाः याभिस्तथा सुनूपुराणां मञ्जीराणां शिञ्जितेन दृष्टं कौशलं यासां तथाविधा वराः श्रेष्ठा वारयोषितः सुचिरं बहुकालपर्यन्तं सभासदां सभ्यानां मनांसि जह्रुः अहरन् ॥

भा०—विचित्रशृङ्गारयुक्त तथा मृदङ्ग वीणाओंके शब्दोंमें तालदेनेमें प्रवीण तथा नृत्यमें नूपुरोंके वादनमें अपनी कुशलताको दिखलानेवाली श्रेष्ठ वाराङ्गनाओंने चिरकालतक सभासदोंके चित्तोंको हरलिया ॥ २८ ॥

इतीडवर्डो[1] युवराजसंज्ञको
नृपात्मजायाः करपीडनेन सः ।
समीरणाल्या परिवर्द्धितोच्छिखो
यथा कृशानुर्ववृधे दिवानिशम् ॥ २९ ॥

1. Edward.

जगुः सहर्षं जनतासमन्ता-
दुज्जयध्वनिं श्रोत्रसुखं जगाद ॥ २५ ॥

टी०—पौरेति । गीतकलायां प्रवीणाः कुशलाः पौराङ्गनाः पौरवनितास्तयोर्वधूवरयोः पाणिग्रहमङ्गलानि विवाहमङ्गलानि जगुः गायन्तिस्म जनतालोकनिवहः समन्तादभितः श्रोत्रसुखं कर्णयोरानन्ददायकं जयध्वनिं जय जयेतिशब्दं जगाद अवोचत् ॥

भा०—गायनमें निपुण पुरस्त्रियां उन वरकन्याओंके विवाहमङ्गलगानेलगीं तथा जनसमुदायने चारोंतरफसे कानोंको सुखदेनेवाले जयशब्दको किया ॥ २५ ॥

राजेश्वरीं तां प्रथमं प्रणम्य
ततो गुरूँस्तानभिवादनार्हान् ।
तदाशिषस्तावुपलभ्य सम्यक्
स्वमन्दिरं जग्मतुरैश्वरेयम् ॥ २६ ॥

टी०—राजेति । तावुभौ वधूवरौ प्रथमं पूर्वं राजेश्वरीं श्रीमतीं प्रणम्य ततोऽनन्तरं अभिवादनार्हान् वन्दनीयांस्तान् गुरून् पुरोहितादीन् प्रणम्य नमस्कृत्य सम्यक् समीचीनतया तदाशिषस्तद्दत्ताशीर्वादान् उपलभ्य प्राप्य ऐश्वरेयं ईश्वर्या इदं "स्त्रीभ्योढक् इत्यय्" राजेश्वरीसम्बन्धि स्वमन्दिरं निजप्रासादं जग्मतुर्ययतुः ॥

भा०—ये दोनों वधू वर पहिले राजेश्वरीको फिर पुरोहितादि गुरुलोगोंको प्रणाम कर और उनके शुभाशीर्वादोंको पाकर राजेश्वरीसम्बन्धि अपने महलको चलेगये ॥ २६ ॥

तस्यां रजन्यां नगरी समन्तात्
तडित्प्रदीपावलिराजिता ऽभूत् ।
अनेकपूर्णेन्दुमरीचिदीप्ता
प्रव्यक्तदेशा जगतीव शश्वत् ॥ २७ ॥

# त्रयोदशः सर्गः ॥



अश्वर्तुनागेन्दुमिते शके ततो-
मानोद्धताश्चायर्लैण्डवासिनः[1] ।
स्वातन्त्र्यराज्याय कृतात्मनिश्चया
वैमुख्यमापुर्नृपपूरुषेष्वरम् ॥ १ ॥

टी०—अश्वेति । ततोऽनन्तरं अश्वर्तुनागेन्दुमिते सप्तषष्ट्यधिकाष्टादशशतमिते क्रैष्टशके मानोद्धता गर्वोत्कटा अतएव स्वातन्त्र्यराज्याय स्वाधीनताराज्यार्थं कृत आत्मनिश्चयो यैस्तथाविधा आयर्लैण्डवासिनः आयर्लैण्डीयाजनाश्च नृपपूरुषेषु अधिकारिषु अरमत्यर्थं वैमुख्यं पराङ्मुखतां आपुर्जग्मुः । प्रथमतः पद्याष्टके इन्द्रवंशावृत्तम् ॥

भा०—अनन्तर १८६७ ईसवीमें अहङ्कारी अतएव स्वतन्त्रराज्यके लिये कृतनिश्चय आयरलैण्डके रहनेवालेलोग राजपुरुषोंपर अत्यन्तरुष्ट होगये ॥ १ ॥

ग्लैडष्टनो[2]ऽध्यक्षक एव शान्तये
तेषां तदैवायर्लैण्डवासिनाम् ।
प्राबोभवीन्नन्दन[3]पालिकाज्ञया
प्रज्ञावतां दुष्करमस्ति किं भुवि ॥ २ ॥

टी०—ग्लैडेति । तदा तस्मिन्समय एव ग्लैडष्टनो नामाध्यक्षक एव नन्दनपालिकाज्ञया राजेश्वर्य्यनुशासनेन तेषां आयर्लैण्डवासिनां शान्तये शान्तिस्थापनाय प्राबोभवीत् अतिशयेन समर्थो बभूव भुवि पृथिव्यां प्रज्ञावतां बुद्धिविशिष्टानां पुरुषाणां दुष्करं किमस्ति अपितु किमपि नास्तीत्यर्थान्तरेण समर्थ्यते ॥

1. Ireland. 2. Gladstone. 3. London.

टी०—इतीति । युवराजसंज्ञकः स इडवर्ड इतीत्थं नृपात्मजाया एलेकजेण्ड्राया: करपीडनेन पाणिग्रहणेन समीरणाल्या पवनलेखया परिवर्द्धिता उच्छ्रिता यस्यैवंविधः कृशानुर्यथा अग्निरिव दिवानिशं रात्रिंदिवं वृद्धये ऐधत ॥

भा०—युवराज इडवर्ड राजकन्या एलेकजेण्ड्राके साथ विवाहसे वायुपंक्तिसे वृद्धिगत अग्निकी तरह रातदिन वृद्धिको प्राप्तहुआ ॥ २९ ॥

इति सा जगतीभरा नृपेशी
तनयस्योपयमं विधाय सम्यक् ।
विषयेक्षणदत्तमानसा स्वां
प्रकृतिं तां परिपालयाम्बभूव ॥ ३० ॥

टी०—इतीति । जगतीभरा धरापरित्राणक्षमा सा नृपेशी राजेश्वरी इतीत्थं तनयस्येडवर्डस्य उपयमं विवाहं सम्यक् सुष्ठुतरेण विधाय कृत्वा विषये समग्रदेशे ईक्षणमवलोकनं तत्र दत्तं मानसं यया एवंविधा सती स्वामात्मीयां तां प्रकृतिं प्रजां परिपालयाम्बभूव ररक्ष ॥

भा०—जगत्की रक्षाकरनेवाली राजेश्वरीने अपने पुत्र युवराजके विवाहको अच्छीतरहसे करके समग्रदेशावलोकनमें दत्तचित्त हुई महारानी अपनी प्रजाका पालन करनेलगी ॥ ३० ॥

इति उर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये युवराजैडवर्डविवाहोत्सववर्णनन्नाम द्वादशः सर्गः ॥ १२ ॥



भा०—अनन्तर फ्रान्सेश्वरने औष्ट्रियाके लोगोंको जीतनेवाले प्रूशियाके निवासियोंके साथ युद्धकिया उस युद्धमें पराक्रमविशिष्ट शत्रुओंने बहुसैन्ययुक्त फ्रान्सेश्वरको जीतलिया ॥ ४ ॥

ते जर्मनीयाः[1] समयावलोकिन-
श्चक्रुस्तदा पेरिसदेशमात्मसात्[2] ।
हीनौजसः संयति बाहुशालिभिः
स्थाने ऽभिभूयन्त इहारिभिर्भृशम् ॥ ५ ॥

टी०—त इति । तदा तस्मिन्समये समयावलोकिनः कालप्रतीक्षकास्ते प्रसिद्धा जर्मनीया जर्मनिदेशोत्पन्ना लोकाः पेरिसदेशं आत्मसाच्चक्रुः स्वायत्तमकुर्वन् इह जगति संयति संग्रामे बाहुशालिभिर्भुजबलोपेतैः अरिभिः शत्रुभिः हीनौजसो मन्दपराक्रमाः पुरुषा भृशमत्यर्थं अभिभूयन्ते तिरस्क्रियन्ते स्थाने योग्यमस्ति अत्रार्थान्तरेणालङ्कारेण समर्थ्यते ॥

भा०—उससमय कालप्रतीक्षक जर्मनिके लोगोंने पेरिसदेशको अपने अधीन करदिया यह बात ठीकहै कि इस जगत्में संग्राममें पराक्रमशाली शत्रुओंसे हीनबलवाले लोग अत्यन्त तिरस्कारयुक्त कियेजाते हैं ॥ ५ ॥

जन्ये रशीया[3] मनुजाः समन्यवो
जन्येधितास्त्रागमबुद्धयस्तदा ।
जन्येच्छवस्तुर्कि[4]जनान् हतत्विषो
जन्येन लुप्तात्मबलान् विजिग्यिरे ॥ ६ ॥

टी०—जन्येइति । तदा तस्मिन्समये जनेर्जन्मत एधिता वृद्धिं प्रापिता अस्त्रागमेषु अस्त्रविद्यासु बुद्धिर्यैः अतएव जन्यं संग्रामं इच्छन्तीति तथाविधाः समन्यवः सक्रोधा रशीया मनुजा रशीयादेशवासिनः पुरुषा जन्येन संग्रामेण लुप्तं अपगतं आत्मबलं निजपराक्रमो येषां अतएव हत-

1. Germany. 2. Paris. 3. Russia. 4. Turkey.

भा०—उसीसमय ग्लैडस्टननामक राजपुरुषही राजेश्वरीकी आज्ञासे उनआयर्लेण्डवासियोंकी शान्तिके लिये समर्थहुआ क्योंकि पृथ्वीमें बुद्धिविशिष्टपुरुषोंको क्या दुःसाध्य है ॥ २ ॥

राजेश्वरी लोकहितेच्छया ऽञ्जसा
सभ्यानुमत्या प्रतिमण्डलं तदा ।
क्षेत्रेश्वरेष्वेव करं नियोज्य सा
विद्यालयान्भद्रकरानतिष्ठिपत् ॥ ३ ॥

टी०—राजेति । तदा तस्मिन्समये सा राजेश्वरी लोकहितेच्छया सभ्यानुमत्या सभासदां सम्मत्या प्रतिमण्डलं समग्रमण्डलेष्वित्यर्थः क्षेत्रेश्वरेषु क्षमाधिपतिषु एव करं राजग्राह्यभागं नियोज्य स्थापयित्वा अञ्जसा शीघ्रं भद्रकरान् कल्याणविधायकान् विद्यालयान् पाठालयान् अतिष्ठिपत् स्थापयाम्बभूव ॥

भा०—उससमय राजेश्वरीने लोगोंकी भलाईके लिये सभासदोंकी सम्मतिसे हरएक जिलामें किसानोंपर कर लगाकर जल्दीही मङ्गलविधायक पाठशालाओंको स्थापन कराया ॥ ३ ॥

प्रूशीयलोकैर्विजितौष्ट्रियाजनैः
सार्धं ततः फ्रान्सनृपो ऽन्वयुध्यत ।
तत्रैव जन्ये ऽतिबलैर्विपक्षकैः
फ्रान्सेश्वरो ऽनल्पबलो ऽप्यजीयत ॥ ४ ॥

टी०—प्रूशीयेति । ततोऽनन्तरं फ्रान्सनृपः फ्रान्सेश्वरः विजिता औष्ट्रियाजना यैस्तथाविधैः प्रूशीयलोकैः प्रूशीयादेशस्य मानवैः सार्धं अन्वयुध्यत असंग्रामयत् तत्रैव जन्ये तस्मिन्नेव युद्धे अतिबलैर्बहुबलोपेतैः विपक्षकैः प्रूशीयलोकैः अनल्पबलो बहुसैन्ययुक्तोऽपि फ्रान्सेश्वरः अजीयत विजिग्ये " कर्म्मणिलङ् " ॥

1. Prussia. 2. Austria. 3. France.

भूपं आयोधने संग्रामे विजित्य तदा तस्मिन्समये तं विषयं देशं च सुनयेन नीत्या संरक्षणार्थं परित्राणार्थं आत्मसादकरोत् निजाधीनं व्यधात् ॥

भा०—राजेश्वरीने आफ्रीकादेशमें दक्षिणदिशाकी तरफ रहनेवाले जुल्स-नामक राजाको संग्राममें जीतकर उसदेशकोभी नीतिपूर्वक रक्षाकरनेके लिये अपने अधीन करदिया ॥ ८ ॥

अथ सा युवराजगेहलक्ष्मीः
प्रियभक्तिप्रवणैकतानचित्ता ॥
निजगोत्रविवर्धनेच्छयैव
समधाद्गर्भमनल्पसत्त्वसंस्थम् ॥ ९ ॥

टी०—अथेति। अथानन्तरं प्रिये स्वामिनि या भक्तिस्तस्यां प्रवणं आयत्तं एकतानं एकाग्रं चित्तं यस्या एवंविधा युवराजस्य गेहलक्ष्मीः उद्वसितशोभा सा एलेकजेण्ड्रा निजगोत्रस्य या विवर्धनेच्छा वृद्धिस्पृहा तया एव अनल्पसत्त्वस्य संस्था स्थितिर्यस्यैवंविधं गर्भं समधात् दध्रे। अत्र मालभारिणीवृत्तम्, विषमेससजागुरू अनोजे सभरायश्चतु मालभारिणीयमिति लक्षणात् ॥

भा०—अनन्तर पतिभक्तिपरायण युवराजगृहकी शोभास्वरूपिणी एलेकजेण्ड्राने अपने गोत्रवृद्धिकी इच्छासे बड़े सत्त्वविशिष्ट गर्भको धारण किया ॥ ९ ॥

युवराजविनोदनेन साध्वी
बहुदेशाहृतवस्तुदर्शनेन ।
स्वसखीकुतुकादिना नितान्तं
नवमासाँश्च सुखेन सा निनाय ॥ १० ॥

टी०—युवराजेति। साध्वी पतिव्रता सैलेकजेण्ड्रा युवराजस्य पत्युर्विनोदनेन क्रीडनेन तथा बहुदेशेभ्य आहृतानां वस्तूनां दर्शनेनावलोकनेन तथा स्वसखीनां निजवयस्यानां कुतुकादिना कुतूहलादिना च नितान्तं अत्यन्तं नवमासान् सुखेनानन्देन निनाय व्यतीयाय ॥

त्विषो नष्टतेजसः टर्किजनान् टर्किनिवासिलोकान् जन्ये युद्धे विजिग्यिरे व्यजेषत । अत्र यमककाव्यलिङ्गालङ्कारयोः संसृष्टिरलङ्कारः ॥

भा०—उससमय जन्महीसे अस्त्रविद्याको पढेहुये अतएव संग्रामको चाहनेवाले क्रोधयुक्त रशियाके लोगोंने युद्धकरनेसे नष्ट पराक्रमवाले अतएव विषादयुक्त टर्किके लोगोंको संग्राममें जीतलिया ॥ ६ ॥

यूरूपदेशाधिनिवासिमानवा[1]
बर्लिन्स्थले[2] ऽकार्षुरथो सभां नवाम् ।
या रोमनीयासरभीयपूरुषान्[3][4]
स्वातन्त्र्यवृत्तीन् विदधे जनप्रिया ॥ ७ ॥

टी०—यूरूपेति । अथो ऽनन्तरं यूरूपदेशे ऽधिवसन्तीति ते मानवाः बर्लिन्नामके स्थलविशेषे नवामभिजातां सभां अकार्षुर्व्यधुः । जनप्रिया लोकसंमता या सभा रोमनीयासरभीययोर्देशयोः पूरुषान् स्वातन्त्र्ये वृत्तिर्येषां तथाविधान् विदधे चकार ॥

भा०—अनन्तर यूरूपदेशके रहनेवाले लोगोंने बर्लिन्नामक स्थानपर एक नूतन सभा स्थापनकी जिस लोकसंमत सभाने रोमनीया और सरभीयके लोगोंको स्वतन्त्र बनादिया ॥ ७ ॥

आफ्रीकदेशे[5] यमदिक्समाश्रित-
मायोधने जुलसनृपं[6] विजित्य सा ।
राजेश्वरी तं विषयं तदात्मसा-
त्संरक्षणार्थं सुनयेन चाकरोत् ॥ ८ ॥

टी०—आफ्रीकेति । सा राजेश्वरी आफ्रीकदेशे आफ्रीकाख्ये देशविशेषे यमदिक्समाश्रितं दक्षिणदिङ्निवासिनं जुलसनृपं जुलसनामकं

1. Europe. 2. Berlin. 3. Rome. 4. Servia.
5. Africa. 6. The King of the Zulus.

सा सार्वभौमी कुलजान्पुरोधस
आकार्य्य भूपाँश्च महोत्सवे तदा ।
पौत्रं हि नाम्नाऽखिलमङ्गलास्पदं
ज्यार्जं चकार स्वजनाभिसंमतम् ॥ १३ ॥

टी०—सेति । हीति निश्चयेन तदा तस्मिन्समये सार्वभौमी राजेश्वरी सा विक्टोरिया महोत्सवे अस्मिन्महे कुलजान् सुवंशोत्पन्नान् पुरोधसः पुरोहितान् भूपान् राज्ञश्चाकार्य्य आहूय अखिलमङ्गलास्पदं अशेषमङ्गलस्थानं पौत्रं नाम्नाऽभिधानेन स्वजनानां आत्मीयानां अभिसंमतं इष्टं ज्यार्जं चकार विदधे ॥

भा०—यह बात प्रसिद्धहै कि उससमय राजेश्वरीने सुवंशोत्पन्न पुरोहितोंको और राजालोगोंको बुलाकर समग्रमङ्गलस्थानरूप पौत्रको आत्मीयलोगोंका संमत ज्यार्ज नामसे प्रसिद्धकिया ॥ १३ ॥

ततः कुमारः कमलायतेक्षणो
दिने दिने स्वावयवैरवर्धत ।
सुधाभिपूरैः परिवर्धिताङ्गकः
क्रमाद्यथा सौख्यदबालचन्द्रमाः ॥ १४ ॥

टी०—तत इति । ततोऽनन्तरं कमलवत् आयते ईक्षणे यस्यैवंविधः कुमारः दिनेदिने "वीप्सायां द्विर्वचनम्" स्वावयवैर्निजावयवैः सुधाभिपूरैरमृतभरणैः क्रमात् क्रमशः परिवर्धितानि अङ्गानि यस्यैवंविधः सौख्यदबालचन्द्रमा यथा आनन्दप्रदेन्दुरिव अवर्धत एधाञ्चक्रे ॥

भा०—अनन्तर कमलके समान नेत्रवाला कुमार ज्यार्ज प्रतिदिन अपने अङ्गोंसे अमृतपरिपूर्तिसे क्रमपूर्वक वृद्धिंगत अतएव सुखप्रद बालेन्दु की तरह बढ़ा ॥ १४ ॥

---

1. George.

भा०—उस पतिव्रता एलेकजेण्ड्राने युवराजके विनोदनसे तथा अनेकदेशोंसे मँगायेहुये नानाप्रकारके वस्तुओंके देखनेसे तथा अपनी सखियोंके कौतुकादिसेभी नवमास आनन्दसे बिताये ॥ १० ॥

समये युवराजसुन्दरी सा
प्रकृतेर्गोपनकाङ्क्षयेव नूनम् ।
ग्रहसूचितदिष्टवैभवन्तं
सुषुवे दीप्तमुखाम्बुजं कुमारम् ॥ ११ ॥

टी०—समयइति । नूनमिति निश्चयेन सा युवराजसुन्दरी युवराजगेहिनी प्रकृतेः प्रजाया गोपनकांक्षया रक्षणेच्छया इव ग्रहैः सूर्य्यादिभिः सूचितं दिष्टस्य भाग्यस्य [ दैवं दिष्टं भागधेयं भाग्यमित्यमरः ] वैभवं विभूतिर्यस्यैवंविधं दीप्तमुखाम्बुजं प्रकाशितमुखकमलं तं प्रसिद्धं कुमारं समये दशमे मासि सुषुवे अजनयत् ॥

भा०—यह निश्चयहै कि युवराजगेहिनी एलेकजेण्ड्राने प्रजाकी रक्षणेच्छासे जैसा ग्रहोंसे बोधित भाग्यैश्वर्य्यवाले तथा विकसितमुखकमलविशिष्ट पुत्रको गर्भके दशममासमें पैदाकिया ॥ ११ ॥

श्रुतमङ्गलवार्तया नृपेश्या
प्रमदोद्भासितनेत्रया समन्तात् ।
सकलेऽपि धरातले नृपाणां
शिववृत्तं तदनाय्यताचिरेण ॥ १२ ॥

टी०—श्रुतेति । श्रुता मङ्गलस्य पौत्रजन्मोत्सवस्य वार्ता यया अतएव प्रमदोद्भासितनेत्रया हर्षोत्फुल्ललोचनया नृपेश्या राजेश्वर्य्या समन्तादभितः सकले धरातले ऽपि नृपाणां राज्ञां पार्श्वे इति शेषः तच्छिववृत्तं मङ्गलवृत्तं अचिरेण सहसैव अनाय्यत प्राप्यत ॥

भा०—पौत्रोत्सवसुनकर प्रसन्नचित्तहुई राजेश्वरीने सारेधरातलमें सबजगह राजाओंकेपास उस पुत्रोत्सव मङ्गलवार्ताको जल्दीही पहुँचाया ॥ १२ ॥

युग्मनागगजभूमिते शके-
ऽरैविणी मतिमतात्मपौरुषात् ।
सर्व्वमिश्रविषयस्य शासन-
मात्मसंमतनयैर्व्यधीयत ॥ १७ ॥

टी०—युग्मेति । युग्मनागगजभूमिते द्व्यशीत्यधिकाष्टादशशतमिते क्रैष्टशके मतिमता बुद्धिविशिष्टेन अरैविणा पुरुषेण आत्मपौरुषात् स्वपराक्रमात् सर्वः समग्रो यो मिश्रविषयो मिश्रदेशस्तस्य शासनं राज्यशासनं आत्मसम्मतनयैः स्वाभिमतनीतिभिः व्यधीयत अक्रियत "कर्मणि लङ्"॥

भा०—१८८२ ईसवीमें बुद्धियुक्त अरैवीनामक पुरुषने अपने पराक्रमसे सारे मिश्रदेशका राज्यशासन अपनीही अभिमतनीतियोंसे किया ॥ १७ ॥

ऐंग्लिशाः समितिवैरिणं तदा-
ऽरैविणं प्रकृतिदुःखकारणम् ।
संविजित्य विषयं यदृच्छया
तं खदीवनरपाय संददुः ॥ १८ ॥

टी०—ऐंग्लिशा इति । तदा तस्मिन्समये ऐंग्लिशाः पुरुषाः प्रकृतेः प्रजाया दुःखस्य कारणं बीजं अरैविणं नाम वैरिणं शत्रुं समिति संग्रामे संविजित्य परास्य यदृच्छया स्वेच्छया तं विषयं मिश्रदेशं खदीवश्चासौ नरपस्तस्मै खदीवोपाधिविशिष्टाय भूपाय संददुः प्रायच्छन् अत्रोदात्तालङ्कारः महतां चोपलक्षणमित्येकदेशलक्षणात् ॥

भा०—उससमय ऐंग्लिशलोगोंने प्रजाके दुःखहेतु उस अरैवीनामक शत्रुको संग्राममें जीतकर स्वेच्छासे उस मिश्रदेशको खदीवकरके राजोपाधिविशिष्ट वहांके भूपतिको देदिया ॥ १८ ॥

1. Arabi Pasha. 2. Egypt. 3. Khedive.

राजेश्वरी शिक्षितसर्वविद्यं
ज्योर्ज हि यार्काधिपतिं व्यधत्त ।
स नीतिवेत्ता विषयं स्वकीय-
मपूपुषत्तात इवात्मसूनुम् ॥ १५ ॥

टी०--राजेति । राजेश्वरी शिक्षितसर्वविद्यं अधीतानेकशास्त्रं ज्यार्जं यार्काधिपतिं यार्कदेशाधिपं व्यधत्त अकरोत् नीतिवेत्ता नयशास्त्रवित् स ज्यार्जः स्वकीयं विषयं देशं तातः पिता आत्मसूनुं स्वतनुजं इव अपूपुषत् अपालयत् अत्रोपमालङ्कारः ॥

भा०—महारानीने अनेकशास्त्रज्ञ ज्यार्जको यार्कदेशाधिपति ( ड्यूक आफ् यार्क ) बनाया नीतिशास्त्रज्ञ तथा पितृसम उस ज्यार्जने अपने उस देशको पुत्रवत् रक्षितकिया ॥ १५ ॥

नभेभनागेन्दुमिते शके पुन-
स्तदारलैण्डे नयमार्गकाङ्क्षिणि ।
सदःपतिः पारनेलो विचक्षणो
जनान्सकोपान् समनन्दयत्सुधीः ॥ १६ ॥

टी०—नभेति । पुनर्भूयः तदा तस्मिन्समये नभेभनागेन्दुमिते अशीत्यधिकाष्टादशशतमिते क्रैष्टशके सुधीः विचारशीलो विचक्षणो विद्वान् पारनलो नाम सदःपतिः सभापतिः नयमार्गं काङ्क्षति इच्छतीति तथाविधे आरलैण्डे देशे सकोपान् सरोषान् जनान् समनन्दयत् प्रसन्नानकरोत् ॥

भा०—अनन्तर उससमय १८८० ईसवीमें विचारशील तथा विद्वान् पारनलनामक सभापतिने नीतिमार्गको चाहनेवाले आरलैण्डदेशमें कोपयुक्तलोगोंको प्रसन्नकिया ॥ १६ ॥

1. George. 2. Duke of York. 3. Ireland. 4. Parnell.

( युग्मकम् )

मण्डलीयसमितिः स्वमण्डले
ह्यात्मकार्य्यकरणक्षमा भवेत् ।
मण्डलेषु नरपाऽव्ययान्मुदा-
ऽध्यापयन्तु च शिशून् विपश्चितः ॥ २१ ॥
एवमत्र नियमौ नृपेश्वरी
लोकसंस्थितिविधानदीक्षिता ।
स्वीचकार महतां हि मानसे
नैव याति विकृतिः कथंचन ॥ २२ ॥

टी०—मण्डलीति । हि यस्मात् कारणात् मण्डलीयसमितिर्मण्डलसंबन्धिनी सभा आत्मनस्तन्मण्डलस्य कार्य्यं राजनैतिकं कार्य्यं तस्य करणे विधाने क्षमा समर्था भवेत् जायेत तथा मण्डलेषु विपश्चितो विद्वांसश्च नरपाव्ययात् राजेश्वरीदत्तवेतनद्रव्येः मुदा हर्षेण शिशून् बालान् अध्यापयन्तु पाठयन्तु ॥ लोकानां संस्थितिः पालनादि तद्विधाने दीक्षिता कृतसंकल्पा नृपेश्वरी राजेश्वरी अत्रायरलैण्डे एवमित्थं नियमौ पूर्वोक्तौ संश्रवौ स्वीचकार सममन्यत हीति निश्चयेन महतां श्रेष्ठानां मानसे चेतसि विकृतिर्विकारः कथंचन केनापि प्रकारेण न एव याति नैव प्राप्नोति इत्यर्थान्तरेण समर्थ्यते ॥

भा०—जिसकारणसे कि प्रत्येक जिलामें स्थापितसभा अपने जिलाके सब राज्यविषयक कार्य्यको करनेमें समर्थहोजाय तथा पण्डितलोग हरएक जिलाओंमें महारानीके व्ययसे हर्षपूर्वक बालकोंको पढ़ावें ॥ लोगोंके पालनमें कटिबद्ध राजेश्वरीने इस आयरलैण्डमें इसतरहके नियमोंको स्वीकारकिया यह बात ठीकहै कि महात्माओंके चित्तमें किसीतरहभी विकार नहीं होता ॥ २१ । २२ ॥

ये पुरा जनतया षडाश्रवा
आत्मभूपसविधं निवेदिताः ।
तद्द्वितीयनियमेन सेश्वरी
मण्डलेषु विषयं व्यभाजयत् ॥ १९ ॥

टी०—यइति । पुरा पूर्वं जनतया लोकनिवहेन ये षट् आश्रवा नियमा आत्मभूपसविधं निजराजसंनिधिं निवेदिताः समर्प्यन्तेस्म सा ईश्वरी तेषां नियमानां द्वितीयो यो नियमस्तेन करणभूतेन मण्डलेषु पृथक्पृथक् देशविभागेषु विषयं देशं व्यभाजयत् विभक्तमकरोत् ॥

भा०—पहिले प्रजाकेलोगोंने जो छः नियम अपनी स्वामिनीके पास निवेदन कियेथे महारानीने ( जिनके तीसरे पांचवें नियम उस निवेदन समयपर मानेगये थे ) उन नियमोंके दूसरे नियमसे सारेदेशको पृथक् पृथक् जिलाओंमें बांट दिया ॥ १९ ॥

षड्द्विपेभधरणीमिते शके
चायरे प्रकृतिरञ्जने ततः ।
ऐंग्लिशैर्हि समयाधिकव्ययात्
प्रादुरासतुरुभौ नवाश्रवौ ॥ २० ॥

टी०—षडिति । हीति निश्चयेन ततोऽनन्तरं षड्द्विपेभधरणीमिते षडशीत्यधिकाष्टादशशतमिते क्रैस्तशके ऐंग्लिशैः पुरुषैः आयरे आयरलैण्डे[1] च प्रकृतिरञ्जने प्रजाऽनुनयविषये समयाधिकव्ययात् कालातियापनात् उभौ द्वौ नवाश्रवौ नूतननियमौ प्रादुरासतुः प्रकटीबभूवतुः ॥

भा०—यह बात प्रसिद्धहै कि अनन्तर १८८६ ईसवीमें ऐंग्लिशलोगों से आयरलैण्डमें प्रजाकी शान्तिस्थापन विषयमें अधिकसमयके व्ययहोने से दो नवीन नियम प्रकटहुए ॥ २० ॥

---

1. Ireland.

राजेश्वरी साऽथ विवाहयोग्यां
दशामितं पौत्रमवेक्ष्य तावत्।
सार्धं महीपात्मजयाकयाचि-
ट्टेकाख्ययोद्वाहममंस्त नप्तुः॥ २५॥

टी०—राजेति। अथानन्तरं सा राजेश्वरी श्रीमती तावत्कालपर्य्यन्तं विवाहयोग्यां परिणयानुरूपां दशामवस्थां इतं प्राप्तं पौत्रं ज्यार्जं अवेक्ष्यावलोक्य टेकाख्यया कयाचिन्महीपात्मजया राजकन्यया सार्धं नप्तुर्यार्काधिपतेरुद्वाहं उपयामं अमंस्त मेने स्थिरीचकारेति भावः॥

भा०—अनन्तर महारानीने विवाहयोग्य अवस्थाको प्राप्त पौत्र ज्यार्जको देखकर टेकानाम किसी राजकन्याके साथ उस पौत्र यार्काधिपका विवाह ठहराया॥ २५॥

वह्न्यङ्कनागेन्दुमिते शकेऽस्मि-
ञ्ज्यार्जेन नप्त्रा सह राजपुत्र्याः।
अशेषदेशागतभूपशोभ-
मकारयत्सोपयमं महेशी॥ २६॥

टी०—वह्नीति। सा महेशी राजेश्वरी वह्न्यङ्कनागेन्दुमिते त्रिनवत्यधिकाष्टदशशतमिते ऽस्मिन्क्रैस्टशके नप्त्रा पौत्रेण ज्यार्जेन सह राजपुत्र्याष्टेकाया अशेषदेशेभ्य आगता ये भूपा राजानस्तेषां शोभा यस्मिन् तथाविधं उपयमं विवाहं अकारयत्॥

भा०—महारानीने १८९३ ईसवीमें अपने पौत्र ज्यार्जके साथ राजपुत्री टेकाका अनेकदेशोंसे आयेहुए राजाओंकी शोभाविशिष्ट विवाहको किया॥ २६॥

महोत्सवेऽस्मिन्नगरस्य शोभा
सुमङ्गलैर्वैद्युतदीपिकाभिः।

1. Teck. 2. George.

वत्सरेऽयननवेभभूमिते
ग्लाईडष्टन इति प्रजाप्रियः।
पौरजानपदमान्यपूरुषै-
र्बोधितोऽभवदमात्यशब्दभाक् ॥ २३ ॥

टी०—वत्सरइति। अयननवेभभूमिते द्विनवत्यधिकाष्टादशशतमिते वत्सरे क्रैस्तशके प्रजाप्रियो जनाभीष्टो ग्लाईडष्टन इति प्रसिद्धः पुरुषः पौरजानपदमान्यपूरुषैर्नागारिकदैशिकश्रेष्ठजनैर्बोधितो विज्ञापितः सन् अमात्यशब्दभाक् मन्त्रिपदस्थोऽभवत् प्रजायत ॥

भा०—१८९२ ईसवीमें सबलोगोंका प्रिय ग्लाइडष्टननामक पूर्वमन्त्री नगर और देशके श्रेष्ठ पुरुषोंके समझानेसे फिर मन्त्रिपदमें स्थितहुआ ॥ २३ ॥

कतिपयदिनेष्वेवं यातेष्वमात्यपदे पुनः
सकलमनुजैरार्यै रोजेवरी प्रकृतिप्रियः।
अविकलनयाभिज्ञो निःश्रेयसाय नृपाज्ञयाऽ-
नवरतसुखोद्रेके लोकाञ्चिते समधार्य्यत ॥ २४ ॥

टी०—कतीति। कतिपयदिनेषु कियत्स्वपि दिवसेषु एवमित्थं यातेषु सत्सु पुनर्भूय आर्य्यैः श्रेष्ठैः सकलमनुजैर्निःशेषलोकैर्नृपाज्ञया भूपानुमत्या अविकलः सम्पूर्णो नयो नीतिस्तस्य अभिज्ञो बोद्धा प्रकृतिप्रियो जनहृद्यो रोजेवरी एतन्नामकः पुरुषः लोकाञ्चिते जनपूजिते अनवरतसुखोद्रेके सन्ततानन्दाधिके अमात्यपदे सचिवस्थाने निःश्रेयसाय कल्याणाय "अचतुरविचतुरेति सूत्रेण निःश्रेयस् शब्दस्य अकारान्तत्वं निपात्यते" समधार्य्यत अस्थाप्यत "णिजन्तात्कर्म्मणि लङ्" ॥

भा०—कितनेही दिन बीतजानेपर फिर सम्पूर्ण मान्यलोगोंने श्रीमतीकी आज्ञासे अत्यन्त नीतिशास्त्रज्ञ तथा लोकप्रिय रोजेवरीनामक पुरुष लोकपूजित निरन्तर सुखयुक्त मन्त्रिपदमें कल्याणके लिये स्थापनकिया ॥ २४ ॥

---

1. Gladstone. 2. Rosebery.

टी०—युगेति । ततोऽनन्तरं सा टेका युगाङ्कनागेन्दुमिते चतुरशीत्य-धिकाष्टादशशतमिते क्रैष्टशके समये गर्भस्य दशमे मासि शुभेऽह्नि सुदिवसे नृपार्चिताया राजेश्वर्य्याः प्रमदस्य हर्षस्यैककारणं मुख्यबीजं अशेषाणि सुलक्षणानि तैरञ्चितं श्लाघ्यं तथा सुखप्रदं आनन्ददायकं सूनुं तनयं असूत उदपादयत् ॥

भा०—अनन्तर १८८४ ईसवीमें टेकाने गर्भके दशममासमें शुभदिनमें सम्पूर्ण सुलक्षणोंसे युक्त महारानीके हर्षका कारण तथा आनन्ददायक पुत्रको पैदा किया ॥ २९ ॥

नृपेश्वरी बन्धुजनैः पुरोहितैः
समं तदा भूपतिभिश्च वंशजैः ।
प्रपौत्रमेतं कुसुमायुधाकृतिं
मुदैलबर्ट[1] विदधे हि नामतः ॥ ३० ॥

टी०—नृपेति । तदा तस्मिन्समये नृपेश्वरी राजेश्वरी बन्धुजनैर्बा-न्धवैः पुरोहितैः तथा वंशजैः सुकुलोत्पन्नैर्भूपतिभिश्च समं सार्धं मुदा ह-र्षेण कुसुमायुधाकृतिं कन्दर्पस्वरूपं एतं प्रपौत्रं नामतो नाम्ना "सार्ववि-भक्तिकस्तसिल् प्रत्ययः" एलबर्टं विदधे चक्रे ॥

भा०—उससमय राजेश्वरीने बन्धुजनोंके तथा पुरोहित ( पादरी ) लोगोंके और सुकुलोत्पन्न राजा लोगोंके साथ हर्षसे काम स्वरूप इस प्रपौत्रका एलबर्ट नाम करके रक्खा ॥ ३० ॥

ततो धरेशी पृथुकस्य लीलया
तथा स्खलन्मञ्जुलजल्पनादिभिः ।
प्रणामवाग्भिर्विनयैश्च नित्यशः
कियन्त्यहानि प्रणिनाय शर्म्मणा ॥ ३१ ॥

---

1. Albert.

वाराङ्गनानृत्यकलादिभिश्चा-

मरावतीं ह्रेपयतिस्म मन्ये ॥ २७ ॥

टी०—महोत्सवइति । अस्मिन् विवाहमहोत्सवे नगरस्य नन्दनस्य शोभा सुषमा सुमङ्गलैर्मङ्गलाचरणैः तथा वैद्युता विद्युत्सम्बन्धिन्यो या-दीपिकास्ताभिः तथा वाराङ्गनानां गणिकानां नृत्यकलादिभिर्नर्तनगाना-दिभिश्च अमरावतीं इन्द्रपुरीं ह्रेपयतिस्म सलज्जामकरोदिति भावः इत्यहं मन्ये जानामि । अत्रोत्प्रेक्षालङ्कारः ॥

भा०—इस विवाहोत्सवमें मैं समझताहूँ कि नन्दननगरकी शोभाने मङ्गला-चरणोंसे तथा बिजुलीकी दीपमालासे और गणिकाओंके नृत्यगीतादिकोंसेभी इन्द्र-पुरीको लज्जायुक्त करदिया ॥ २७ ॥

टेकाह्वया ज्यार्जवधूः सुशीला

रूपेण संतर्जितकामकान्ता ।

स्वगोत्रसंवर्धनवाञ्छया सा

गर्भं समाधत्त विनोदहेतुम् ॥ २८ ॥

टी०—टेकेति । सुशीला शोभनस्वभावोपेता तथा रूपेणाकृत्या संत-र्जिता भर्त्सिता कामस्य मदनस्य कान्ता यया एवंविधा सा टेकाह्वया टेका-भिधाना ज्यार्जवधूः स्वगोत्रसंवर्धने या वाञ्छा अभिलाषा तया करण-भूतया विनोदहेतुं आनन्दकारणं गर्भं समाधत्त दध्रे ॥

भा०—सुशील तथा आकृतिसे रतिके गर्वको हरनेवाली टेकानामिका ज्या-र्जकी स्त्रीने अपने वंशवृद्धिकी इच्छासे आनन्दके कारण गर्भको धारणकिया ॥ २८ ॥

युगाङ्कनागेन्दुमिते शके ततो

नृपार्चितायाः प्रमदैककारणम् ।

शुभेऽह्नि साऽशेषसुलक्षणाञ्चित-

मसूत सूनुं समये सुखप्रदम् ॥ २९ ॥

1. Teck. 2. George.

इति धरणिधरेशी नीतिशास्त्रानुमत्या
प्रकृतिमनुदिनं सा पालयन्तीतिभीतेः ।
निजकुलपरिवारं पुत्रपौत्राद्युपेत-
मतिधृतिरवलोक्य प्रीतियुक्ता ननन्द ॥ ३३ ॥

टी०—इतीति । नीतिशास्त्रानुमत्या न्यायानुकूलतया अनुदिनं अहरहः ईतिभीतेर्दुर्भिक्षभयात् प्रकृतिं प्रजां पालयन्ती रक्षन्ती अतिधृतिर्धैर्यो-पेता धरणिधरेशी राजेश्वरी इतीत्थं पूर्वोक्तं पुत्रपौत्राद्युपेतं निजकुलपरिवारं स्वकुटुम्बं अवलोक्य दृष्ट्वा प्रीतियुक्ता प्रसन्ना सती ननन्द जहर्ष ॥

भा०—न्यायानुकूल प्रतिदिन दुर्भिक्षादिभयसे प्रजाका पालनकरतीहुई धैर्ययुक्त महारानी पूर्वोक्त पुत्र पौत्रादियुक्त अपने परिवारको देखकर प्रेमपूर्वक हर्षयुक्तहुई ॥ ३३ ॥

इति उर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये राजेश्वरीपौत्रप्रपौत्रजन्मोत्सवादिवर्णनन्नाम त्रयोदशः सर्गः ॥ १३ ॥



टी०—तत इति । ततोऽनन्तरं धरेशी राजेश्वरी पृथुकस्य बालकस्य [पृथुकः शावकः शिशुरित्यमरः] लीलया क्रीडया तथा स्खलन्ति अविस्पष्टानि मञ्जुलानि मनोहराणि यानि जल्पनादीनि भाषितादीनि तैः तथा प्रणामवाग्भिः प्रणतिगीर्भिः विनयैरार्जवैश्च करणभूतैर्नित्यशः सततं शर्म्मणा सुखेन कियन्ति कतिचित् अहानि दिवसान् प्रणिनाय व्यतीयाय "उपसर्गादसमासेपीत्यादिना णत्वम्" । केचिच्चमत्कारितया वत्सलं च रसं विदुरिति नियमात् अत्र बाल आलम्बनविभावः तल्लीलासमय उद्दीपनविभावः प्रणामादयोऽनुभावाः चापल्यादयो व्यभिचारिभावाः रसः स्थायिभावः तज्ज्ञे सामाजिके वत्सलरसनिष्पत्तिः ॥

भा०—अनन्तर राजेश्वरीने बालककी क्रीड़ासे तथा मनोहर तोतले वचनोंसे तथा प्रणमवचनोंसे सरलस्वभावसेभी निरन्तर कितनेही दिन सुखसे व्यतीत किये ॥ ३१ ॥

अथैलवर्टं[1] धरणीधरार्चिता
प्रयत्नतो नीतिमशिक्षयद् बुधैः ।
तथान्यविद्यानियमेन तद्विदा-
मबोधयत्तं सुधियं जगद्धिता ॥ ३२ ॥

टी०—अथेति । अथानन्तरं धरणीधरार्चिता राजपूजिता महेशी प्रयत्नतो महद्यत्नात् बुधैर्विद्वद्भिरेलवर्टं अशिक्षयत् अपाठयत् तथा जगद्धिता प्रकृतिसुखदा सा ता विद्या विदन्ति जानन्तीति तद्विदस्तेषां नियमेन संश्रवेण सुधियं सुबुद्धिं तं प्रपौत्रं अन्यविद्याः शिल्पविद्याः अबोधयत् ज्ञापयामास ॥

भा०—अनन्तर राजेश्वरीने प्रयत्नके साथ पण्डितद्वारा एलवर्टको नीतिशास्त्र पढ़वाया इसीतरह महारानीने उन विद्याओंके जाननेवालोंके नियमसे बुद्धिविशिष्ट एलवर्टको और और शिल्पविद्या पढ़ाई ॥ ३२ ॥

---

1. Albert.

भा०—इस युद्धमें कलहके निवारण विषयमें बड़े उद्योगको करनेवाले मन्त्रिश्रेष्ठ सेलिस्बरी कृतापराध यूरूपदेशके रहनेवाले यवनलोगोंको यथायोग्य दण्डदेने में समर्थ न होसका ॥ २ ॥

ततश्च ते क्रैष्टजनाः क्रिटस्थिता
विरोधिनष्टर्किजनानन्यपीडयन् ।
परापकारैकरसाञ्जनान्ध्रुवं
विबर्हयन्तीह सुबाहुशालिनः ॥ ३ ॥

टी०—ततोऽनन्तरं क्रिटस्थिताः क्रिटदेशवर्तिनस्ते प्रसिद्धाः क्रैष्टजना विरोधिनो द्वेषपरान् टर्किजनान् टर्किनिवासिनो लोकान् न्यपीडयन् अदुःखयन् ध्रुवमिति निश्चयेन इह जगति सुबाहुशालिनो बाहुबलोपेता जनाः परापकारैकरसान् अन्यापकृतिविधानोद्यतान् जनान् विबर्हयन्ति विनाशयन्तीत्यर्थः "बर्हधातोर्हिंसार्थत्व णिणचि लटि रूपम्" अत्रार्थान्तरन्यासालङ्कारः ॥

भा०—अनन्तर क्रिटदेशके रहनेवाले क्रैष्टलोगोंने विरोधी टर्किदेशीयलोगोंको पीड़ितकिया यह बात प्रसिद्धहै कि पराक्रमीलोग दूसरोंकी बुराईमें उद्युक्तलोगोंको विनाश करते हैं ॥ ३ ॥

अथैंग्लिशीजिप्शियनाः पताकिनीः
पताकिनीशः किचनर्सुडानके ।
नियोजयँस्तत्र च दक्षिणां दिशं
वगाहते स्माखिलदेशमञ्जसा ॥ ४ ॥

टी०—अथेति । अथानन्तरं तत्र सुडानके देशविशेषे च किचनर् एतदाख्यः पताकिनीशः सेनापतिः एंग्लिश्यश्च इजिप्शियनाश्च ताः पताकिनीर्वाहिनीः दक्षिणां दिशं नियोजयन् प्रेरयन् सन् अञ्जसा शीघ्रं अखिलदेशं समग्रं विषयं वगाहते स्म अवलोडयाञ्चकार ॥

1. Christian. 2. Crete. 3. Turkey. 4. English and Egyptian. 5. Lord Kitchener. 6. Soudan.

# चतुर्दशः सर्गः ॥



अब्ध्यङ्कनागेन्दुमिते शके तत
आर्मेनियास्थानविशेषके प्रजाः ।
अन्योन्यवैमुख्यगता मदोद्धता-
श्चक्रुस्तदा जन्यमनल्पमासिकम् ॥ १ ॥

टी०—अब्धीति । ततोऽनन्तरं तदा तस्मिन्समये अब्ध्यङ्कनागेन्दुमिते चतुर्नवत्यधिकाष्टादशशतमिते क्रैष्टशके आर्मेनियास्थानविशेषके अन्योऽन्यं परस्परं वैमुख्यं पराङ्मुखतां गता मदोद्धता उन्मादयुक्ताः प्रजाः प्रकृतयः असिः प्रहरणं यस्येत्यासिकं "प्रहरणमिति ठक्प्रत्ययः" अनल्पं बृहत् जन्यं युद्धं चक्रुर्व्यधुः ॥

भा०—अनन्तर उससमय १८९४ ईसवीमें आर्मेनिया स्थानविशेषमें परस्पर विमुखभावको प्राप्त मदोद्धत प्रजाके लोगोंने तरवारसम्बन्धी घोरसंग्राम किया ॥ १ ॥

सेलिस्बरी मन्त्रिवरः कृतागसो
यूरूपनीवृद्यवनानमर्षितान् ।
दीर्घप्रयत्नोऽत्र विवादवारणे
नैवाशकद्दण्डयितुं यथार्थतः ॥ २ ॥

टी०—सेलिस्बरीति । अत्र युद्धे विवादवारणे कलहनिवारणविषये दीर्घप्रयत्नः कृतविशेषोद्योगो मन्त्रिवरोऽमात्यमुख्यः सेलिस्बरी एतन्नामकः पुरुषः कृतागसो विहितापराधान् यूरूपनीवृति यूरूपदेशे ये यवनास्तान् यथार्थतो योग्यतया दण्डयितुं शासयितुं न एवाशकत् समर्थो न बभूव ॥

---

1. Armania. 2. Salisbury. 3. Europe.

भा०—पहिले औष्ट्रिलीयादेश राजाओंसे अनेक हिस्सोंमें बँटाहुआ था फिर १९०१ ईसवीमें महारानीसे वह देश एकप्रभुवाला होगया ॥ ६ ॥

अथाफ्रिकादक्षिणदिग्विभागके
विना डचैरैंग्लिशपूरुषैरपि ॥
अशेषलोका मदघूर्णितेक्षणाः
स्वभावतः क्रोधरया अबोभवुः ॥ ७ ॥

टी०—अथेति । अथानन्तरं आफ्रिकाया यो दक्षिणदिग्विभागस्तस्मिन् डचैर्डचजातीयैरैंग्लिशैः पूरुषैरपि " अत्र अपिशब्दश्चकारार्थः " विना " पृथग्विनानानाभिस्तृतीयेति तृतीया " मदेन घूर्णितानि ईक्षणानि येषां तथाविधा अशेषलोकाः समग्रजनाः स्वभावतः प्रकृत्या क्रोधरया अमर्षोत्कटा अबोभवुः अतिशयेनाभूवन् ॥

भा०—अनन्तर उससमय दक्षिण आफ्रिकाकी तर्फ डच और ऐंग्लिशलोगोंके बगैर सबलोग मदोन्मत्त और स्वभावहीसे क्रोधयुक्त थे ॥ ७ ॥

ब्रीटिस्जना बोर्नरान्मुधा पुरा
दुःखार्दितांस्तान्व्यदधुर्दिवानिशम् ।
नैटालकं देशमथोत्तराश्रितं
जग्मुस्तदा ते व्यथिताः पदे पदे ॥ ८ ॥

टी०—ब्रीटिसिति । पुरा पूर्वं ब्रीटिस्संज्ञका जनास्तान्प्रसिद्धान् बोरनरान् बोरलोकान् दिवानिशं अहरहः दुःखार्दितान् व्यदधुः चक्रुः अथानन्तरं तदा तस्मिन्समये पदे पदे व्यथिताः पीडितास्ते बोरजना उत्तराश्रितं उत्तरस्यां दिशि वर्तमानं नैटालकं नाम देशं जग्मुर्ययुः ॥

भा०—पहिले ब्रीटिस्लोगोंने बोरजनोंको रातदिन बड़ादुःखदिया अनन्तर

1. Africa. 2. Dutch. 3. British. 4. Boer. 5. Natal.

भा०—अनन्तर किचनर् सेनापतिने सुडानमें ऐंग्लिशी और इजिप्शियना ( मिश्रदेशीय ) सेनाओंको दक्षिणकी तर्फ भेजकर सारेदेशको अवलोडन करदिया ॥ ४ ॥

ततः खलीफाह्वयमाहवेक्षणा-
न्निहत्य सेनाधिपतिर्बलोच्छ्रितः ।
विनेजुलाब्रीटिसगायनस्थले
स सीम्नि जन्यं विदधेऽरिभिः समम् ॥ ५ ॥

टी०—तत इति । ततोऽनन्तरं बलोच्छ्रितः पराक्रमोपेतः स किचनर् सेनापतिः आहवे संग्रामे क्षणात् खलीफाह्वयं खलीफोपाधिविशिष्टं भूपं निहत्य विनेजुला च ब्रीटिसगायनश्च यौ देशविशेषौ तयोः स्थले सीम्नि "मनः इति न ङीप्" सीमायां "डाबुभाभ्यामिति डाप्" अरिभिः शत्रुभिः समं जन्यं युद्धं विदधे चक्रे ॥

भा०—अनन्तर बलवान् किचनर्नामक सेनापतिने संग्राममें जल्दीही खलीफोपनामक राजाको मारकर विनेजुला और ब्रीटिसगायन स्थलमें सरहदपर शत्रुओंकेसाथ बड़ायुद्ध किया ॥ ५ ॥

पुरौष्ट्रिलीयाविषयो धराधिपै-
रनेकभागेषु विभाजितोऽभवत् ।
शके धराभ्राङ्कमहीमिते पुन-
र्धराधरेश्यैकपतिर्बभूव सः ॥ ६ ॥

टी०—पुरेति । पुरा पूर्वं औष्ट्रिलीयानामको विषयो देशो धराधिपै राजभिः अनेकभागेषु बहुखण्डकेषु विभाजितः पृथग्भागं प्राप्तोऽभवत् पुनर्भूयो धराभ्राङ्कमहीमिते एकाधिकोनविंशतिशतमिते क्रैस्तशके स देशो धराधरेश्या राजेश्वर्या एकपतिरेकस्वामियुक्तो बभूव सैव तद्देशस्वामिनी बभूवेति भावः ॥

1. Khalifa. 2. Venezuela 3. British. 4. Australia.

भा०—१८४० ईसवीमें वे सम्पूर्ण बोरलोग नैटालकदेशको छोड़कर उस प्रसिद्ध ट्रून्सवालदेशको चलगये क्योंकि जहां सुख होताहै जन वहीं जाताहै ॥ १० ॥

**अथैंग्लिशा वीररसैकसंश्रयाः**
**शके ऽनलाब्धिद्विपभूमिते तदा ।**
**विजित्य नैटालकदेशमात्मसा-**
**दकार्षुरुच्चैः कृतशत्रुतर्दनाः ॥ ११ ॥**

टी०—अथेति । अथानन्तरं तदा तस्मिन्समये अनलाब्धिद्विपभूमिते त्रयश्चत्वारिंशदधिकाष्टादशशतमिते क्रैष्टशके वीररसे एकसंश्रय आश्रयो येषां अतएव उच्चैरतिशयेन कृतं शत्रूणां तर्दनं विनाशो यैस्तादृशा ऐंग्लिशाः नैटालकं देशं विजित्य आत्मसादकार्षुः स्वायत्तमकुर्वन् ॥

भा०—अनन्तर उससमय १८४३ ईसवीमें वीररसोपेत ऐंग्लिशलोगोंने शत्रुओं को मारकर उन ब्रीटिस्लोगोंसे नैटालकदेशको लेकर अपने अधीन करलिया ॥ ११ ॥

**अब्धीषुस्तम्भेरमोर्वीमिते ऽब्दे**
**ते बोराख्यास्तत्र चात्मानुमत्या ।**
**औरेञ्जफ्रीमण्डलं संविधाय**
**शान्त्या सौख्येनैव कालं ह्यनैषुः ॥ १२ ॥**

टी०—अब्धीति । हीति निश्चयेन अब्धीषुस्तम्भेरमोर्वीमिते चतुःपञ्चाशदधिकाष्टादशशतमितेऽब्दे क्रैष्टशके ते पूर्वोक्ता बोराख्या बोराभिधानास्तत्र च ट्रून्सवालदेशे आत्मानुमत्या निजेच्छया औरेञ्जफ्री एतन्नामकं मण्डलं संविधाय कृत्वा शान्त्या उपद्रवराहित्येन सौख्येन आनन्देनैव कालं समयं अनैषुः व्यतीयुः । पद्ये ऽस्मिञ्छालिनीवृत्तम् ॥

भा०—यह निश्चयहै कि १८५४ ईसवीमें वे बोरलोग उस ट्रूंसवालदेशमें

1. Natal. 2. Boer. 3. Orange Free State.

उससमय पदपदमें दुःखित वे बोरलोग उत्तरदिशाकी तर्फ नैटालदेशको चलेगये ॥ ८ ॥

ब्रीटिस्जनास्तत्र च ताञ्छमस्थितान्
नानाविधक्लेशविधित्सया पुनः ।
चारेक्षणैस्तद्विषयं तदिङ्गितं
जज्ञुस्ततो मत्सरतामगुर्हि ते ॥ ९ ॥

टी०—ब्रीटिसिति । ब्रीटिस्जनाः तत्र च नैटालके देशे ऽपि शमस्थितान् शान्तियुक्ताँस्तान् बोरजनान् पुनर्भूयो नानाविधा ये क्लेशास्तेषां या विधातुमिच्छा तया चारेक्षणैर्गूढपुरुषनेत्रैः तद्विषयं बोरजनदेशं तदिङ्गितं बोरजनचेष्टितं जज्ञुर्बुबुधिरे ततोऽनन्तरं ते ब्रीटिस्जनाः मत्सरतां मात्सर्यं उपधिविशिष्टं कोपं अगुः प्रापन् ॥

भा०—ब्रीटिस्लोगोंने उस नैटालकदेशमेंभी शान्तियुक्त उन बोरलोगोंको अनेकप्रकारके दुःखदेनेकी इच्छासे गुप्तपुरुषरूप नेत्रोंसे उनका देश और कामको जानलिया अनन्तर वे ब्रीटिस्लोग छलविशिष्ट कोपको प्राप्तहुये ॥ ९ ॥

अभ्राब्धिनागेन्दुमिते शके ऽखिला-
स्ते बोरलोकास्त्वपहाय तत्स्थलम् ।
तं ट्रून्सभोलं[1] विषयं समाययु-
र्यत्रास्ति शान्तिर्न्ययते पुमाँस्ततः ॥ १० ॥

टी०—अभ्रेति । अभ्राब्धिनागेन्दुमिते चत्वारिंशदधिकाष्टादशशतमिते क्रैष्टशके तेऽखिलाः समग्रा बोरलोकास्तु तन्नैटालकं नैटालं नाम स्थलं अपहाय त्यक्त्वा तं प्रसिद्धं ट्रून्सभालं विषयं देशं समाययुर्जग्मुः यत्र देशे शान्तिरस्ति जनस्ततस्तत्र "सार्वविभक्तिकस्तसिल् प्रत्ययः" न्ययते निःशेषेण गच्छतीत्यर्थान्तरन्यासेन समर्थ्यते ॥

---

1. Transvaal.

अथैंग्लिशा बोरजनान् मिताश्रवैः
स्वतन्त्रवृत्तीनभिचक्रिरे तदा ।
तथैव तैर्बोरनराः प्रबोधिता
व्यधुर्न सन्धिं सह ते ऽपरैर्यथा ॥ १५ ॥

टी०—अथेति । अथानन्तरं तदा तस्मिन्समये ऐंग्लिशा लोका बोरजनान् मिताश्रवैः परिमितनियमैः स्वतन्त्रा वृत्तिर्येषां तथाविधान् अभिचक्रिरे व्यधुः तैरैंग्लिशैर्बोरनरास्तथा एव प्रबोधिता ज्ञापिता बभूवुरिति शेषः यथा येन प्रकारेण ते बोरा अपरैरन्यैः सह सार्धं सन्धिं मैत्रीं न व्यधुर्नाकार्षुः ॥

भा०—अनन्तर उससमय ऐंग्लिशोंने बोरलोगोंको परिमितनियमोंसे स्वतन्त्र वृत्तिवाले बनादिया ऐंग्लिशोंने बोरलोग इसतरह समझाये जिसतरह कि वे और राजाओंके साथ मैत्री न करसके ॥ १५ ॥

जोनेसवर्गान्तिकभूप्रदेशे
बोराः सुवर्णाकरमालभन्त ।
तदैंग्लिशास्तां हि निशम्य वार्ता-
मयासिषुस्तत्र धनाभिलाषात् ॥ १६ ॥

टी०—जोनेसेति । हीति निश्चयेन बोरा बोरजना जोनेसवर्गस्यान्तिके समीपे यो भूप्रदेशो भूभागस्तस्मिन् सुवर्णाकरं काञ्चनखनिं आलभन्त प्राप्नुवन् तदा तस्मिन्समये ऐंग्लिशा लोकास्तां वार्तां निशम्य श्रुत्वा तत्र खनिसन्निधौ धनाभिलाषाद् अयासिषुरगमन् "यातेर्लुङि यमरमेति सगिटौ" ॥

भा०—यह बात प्रसिद्ध है कि बोरलोगों ने जोनेसवर्गके नजदीक सोनेकी खान पाई उसीसमय ऐंग्लिशलोग उस बातको सुनकर धनकी इच्छासे उसी जगह आ पहुँचे ॥ १६ ॥

---

1. Johannesburg. 2. Boer.

आपनी इच्छासे ऑरेञ्ज फ्रीनामक रियासत बनाकर शान्ति और सुखसे समय बिताने लगे ॥ १२ ॥

नगाद्रिनागेन्दुमिते शके ततो
विजिग्यिरे बोरजनाँश्च ये नराः ।
तदन्तिकादैंग्लिशपूरुषा पुन-
स्तदाग्रहीषुः किल बोरमण्डलम् ॥ १३ ॥

टी०—नगेति । ततो ऽनन्तरं नगाद्रिनागेन्दुमिते सप्तसप्तत्यधिकाष्टादशशतमिते क्रैष्टशके ये तद्देशीया नराश्च बोरजनान् विजिग्यिरे व्यजयन्त किलेति निश्चयेन पुनर्भूय ऐंग्लिशपूरुषास्तदन्तिकात् तेषामधिकारादिति भावः तद् बोरमण्डलं आग्रहीषुः निजाधीनं चक्रुः ॥

भा०—अनन्तर १८७७ ईसवीमें जिन तद्देशीयलोगोंने बोरलोगोंको जीताथा फिर ऐंग्लिशोंने उनके अधिकारसे उस ऑरेञ्जफ्रीनामक बोरमण्डलको बोरोंको देनेके लिये छीनलिया ॥ १३ ॥

ततो ऽभ्रनागेभमहीमिते शके
हृतश्रियो बोरजनाः पराङ्मुखाः ।
महीधरे माजुबसंज्ञके मुधा
विजिग्यिरे ह्यैंग्लिशमानवान् रणे ॥ १४ ॥

टी०—तत इति । हीति निश्चयेन ततो ऽनन्तरं अभ्रनागेभमहीमिते अशीत्यधिकाष्टादशशतमिते क्रैष्टशके हृतश्रियो ऽपध्वस्तशोभाः पराङ्मुखा विमुखा बोरजना माजुबसंज्ञके महीधरे पर्वते रणे संग्रामे मुधा व्यर्थं ऐंग्लिशमानवान् विजिग्यिरे व्यजेषत । उपकारिणामैंग्लिशानामपकारविधानाद् बोरजनस्य कृतघ्नत्वं सूच्यते इति ॥

भा०—अनन्तर १८८० ईसवीमें हारेहुये विमुख बोरलोगोंने माजुबनामक पर्वतमें संग्राममें व्यर्थही उपकारी ऐंग्लिशोंको जीतलिया ॥ १४ ॥

1. Majuba.

स जेम्सनो बोरजनाभियोगं
प्राप्याशु तैस्तत्र जितः ससैन्यः ।
अनल्पवाग्जालविधानदक्षो
निचिक्षिपे बन्दिगृहे मदान्धैः ॥ १९ ॥

टी०—स इति । अनल्पं बृहद् यद्वाग्जालं तद्विधाने दक्षश्चतुरः ससैन्यो वरूथिनीयुक्तः स जेम्सनः पुरुषः बोरजनाभियोगं बोरजनयुद्धसंपर्कं प्राप्योपगम्य तत्र युद्धे आशु शीघ्रं मदान्धैस्तैर्बोरैर्जितः सन् बन्दिगृहे बन्धनालये निचिक्षिपे न्ययोजि ॥

भा०—कहनेमें बड़ा युक्तिपटु जेम्सननामक सेनापति बोरलोगोंके युद्धको प्राप्त होकर जल्दीही उन मदान्ध बोरोंसे पराजित होकर उनसे कारागारमें रक्खा गया ॥ १९ ॥

सभापतिः क्रूगरकः कठोर-
स्तदान्यदेशागतलोकजातम् ।
शस्त्रक्रयार्थं समराध्वराय
निपीडयामास करातिभारैः ॥ २० ॥

टी०—सभेति । तदा तस्मिन्समये कठोरः क्रूरः क्रूगरकः सभापतिः अन्यदेशेभ्य आगतो यो लोकजातो जननिवहस्तं समराध्वराय युद्धयज्ञाय शस्त्रक्रयार्थं मूल्येन शस्त्रग्रहणार्थं करातिभारै राजग्राह्यांशैर्निपीडयामास बबाधे ॥

भा०—उससमय क्रूरस्वभाव क्रूगरनामक बोरलोगोंके सभापतिने और देशोंसे आयेहुये लोगोंको संग्रामकेलिये शस्त्र मोललेनेके अर्थ अधिक कर लगानेसे दुःखित किया ॥ २० ॥

वैदेशिको ऽप्यत्र सभासदस्तु
नोचेद्विवादो भवितेति पूर्वम् ।

---

1. Kruger.

सभापतिः क्रूगरनामधेयो
दृष्ट्वांग्लिशान् बुद्धिबलैर्वरिष्ठान् ।
तद्विक्रमं सोढुमशक्नुवानः
क्रूरैर्नयैस्तान् व्यथयाञ्चकार ॥ १७ ॥

टी०—सभेति । क्रूगरनामधेयः सभापतिर्बोरजनसभेशो बुद्धिबलैर्बुद्धिपराक्रमैः वरिष्ठान् श्रेष्ठान् ऐंग्लिशान् दृष्ट्वावलोक्य तद्विक्रमं तेषां पराक्रमं सोढुं मर्षितुं अशक्नुवानः "शक्नोतेः परस्मैपदित्वात् शानजभावे ताच्छील्यवयोवचनेति चानश् श्नुप्रत्ययस्योकारस्य अचिश्नुधातुभ्रुवामित्युवङ्" असहमानः सन् क्रूरैः कठोरैर्नयैर्नीतिविशेषैस्तानैंग्लिशान् व्यथयाञ्चकार व्यथेः ॥

भा०—क्रूगरनामक सभापति बुद्धिबलसे श्रेष्ठ ऐंग्लिशोंको देखकर उनके पराक्रमको नहीं सहारताहुआ उन ऐंग्लिशोंको कठोरनीतियोंसे दुःखदेनेलगा ॥ १७ ॥

बाणाङ्कनागेन्दुमिते शकेऽस्मि-
स्तदैंग्लिशो जेम्सननामधेयः ।
समं विचेयाल्पवरूथिनीभि-
स्तं ट्रून्सवालं विषयं जगाम ॥ १८ ॥

टी०—बाणेति । तदा तस्मिन्समये बाणाङ्कनागेन्दुमिते पञ्चनवत्यधिकाष्टादशशतमिते ऽस्मिन् क्रैष्टशके जेम्सननामधेय ऐंग्लिशः पुरुषः विचेयाः परिमिता या वरूथिन्यः सेनास्ताभिः समं सह तं ट्रून्सवालं नाम विषयं देशं जगाम ॥

भा०—उससमय १८९५ ईसवीमें जेम्सननामक ऐंग्लिशपुरुष थोड़ी सेनाओंको लेकर उस ट्रून्सवालनामक देशको पहुँचा ॥ १८ ॥

---

1. President Kruger. 2. Jameson. 3. Transvaal.

टी०—अथेति । अथानन्तरं रणोद्धता युद्धनिपुणा ऐंग्लिशवीराणां सेना अनीकिनी आफ्रिकायां तन्नामके देशे यमदिग्विभागे दक्षिणस्यां दिशि समेत्योपगत्य बोरैर्बोरजनैः सह युध्यमाना संग्रामं कुर्वाणा सती शत्रून् वैरिणः सुवीरघातं सुवीरैर्हन्ति यथातथा "करणे हनः णमुल् । हनस्तोऽचिण्णलोरिति हन्तेस्तकारः । कषादिषु यथाविध्यनुप्रयोग इति तस्यैव धातोरनुप्रयोगः" निजघान व्यनाशयत् ॥

भा०—अनन्तर संग्राममें प्रवीण ऐंग्लिशवीरोंकी सेनाने आफ्रिकाके दक्षिणतरफ जाकर बोरलोगोंकेसाथ युद्धकर उन वीरशत्रुओंको बड़ेबड़े वीरोंसे नाश करादिया ॥ २३ ॥

सभापतिः क्रूगरकोऽपि पश्चा-
न्निशम्य विद्वेषिजनाहितं तत् ।
अनेकसेनावृतदिग्विभागो
ह्युपाद्रवत्तत्र कृपाणपाणिः ॥ २४ ॥

टी०—सभेति । हीति निश्चयेन पश्चादनन्तरं क्रूगरकः सभापतिरपि विद्वेषिजनैर्वैरिभिराहितं कृतं तद्युद्धकर्म्म निशम्य श्रुत्वा अनेकसेनाभिः आवृत आच्छादितो दिग्विभागो येन तथाविधः कृपाणः करवालः पाणौ हस्ते यस्यैवंविधः सन् तत्र युद्धे उपाद्रवत् सत्वरमगच्छत् ॥

भा०—यह बात प्रसिद्धहै कि पीछे क्रूगरनामक सभापति भी शत्रुओंके किये हुये उस घोरयुद्धके वृत्तान्तको सुनकर बहुतसेनाओंकेसाथ खड्ग हाथमें लियेहुये उस संग्राममें शीघ्र जापहुँचा ॥ २४ ॥

सुभूप्ररोहा दृढवर्ष्मसाराः
पीना बृहद्दोर्विटपाः सुसान्द्राः ।
ते बोरवृक्षा हि कुधीफलाढ्या
बभुः प्रचण्डैंग्लिशवायुरुग्णाः ॥ २५ ॥

1. Boer.

तदैंग्लिशाः क्रूगरकं सभेश-
मनेकवारं विनयादवोचन् ॥ २१ ॥

टी०—वैदेशिक इति । अत्र सभायां वैदेशिकः परदेशीयो ऽपि जनः सभासन् सभ्यो ऽस्तु भवतु नोचेद्विवादः कलहो भविता भविष्यति तदा तस्मिन्समये ऐंग्लिशा जनाः पूर्वं प्रथमं इतीत्थं क्रूगरकं सभेशं विनयात् नम्रभावात् अनेकवारं वहुवारं अवोचन् अकथयन् ॥

भा०—यहां परदेशी आदमीभी सभासद् होनाचाहिये नहीं तो कलह होवेगा उससमय ऐंग्लिशलोगोंने पहिले इसतरह सभापति क्रूगरको विनयपूर्वक कईवार कहा ॥ २१ ॥

तथाप्यसौ क्रूगरकः प्रमादा-
दमंस्त नो तद्वचनं हितान्तम् ।
नूनं विपर्य्यासतया नियत्या
जनो ऽल्पसारां मनुते सदुक्तिम् ॥ २२ ॥

टी०—तथेति । तथा ऽपि क्रूगरकः प्रमादात् विचाराभावात् हितान्तं शुभावसानं तेषामैंग्लिशानां वचनं नो ऽमंस्त न मेने नूनमिति निश्चयेन जनो लोको नियत्या भाग्यस्य विपर्य्यासतया वैपरीत्येन सदुक्तिं सत्पुरुषवाणीं अल्पसारां न्यूनवलां मनुते जानातीत्यर्थान्तरेण समर्थ्यते ॥

भा०—तोभी उस क्रूगरने प्रमादसे परिणाममें सुखदेनेवाले उन ऐंग्लिशों के वचनको न माना यह वात ठीकहै कि मनुष्य भाग्यके उलटे फिरजानेसे सत्पुरुषों की कहीहुई वातको तुच्छ मानताहै ॥ २२ ॥

अथाफ्रिकायां[2] यमदिग्विभागे
रणोद्धता चैंग्लिशवीरसेना ।
समेत्य वोरैः[3] सह युध्यमाना
सुवीरघातं निजघान शत्रून् ॥ २३ ॥

1. Kruger. 2. Africa. 3. Boers.

एते स्वदोर्द्दण्डबलेन तत्र

समाग्रहीद्वैरिजनाधिकारात् ॥ २७ ॥

टी०—विजित्येति । स रौवर्ट्सश्च अस्मिन्संगरे संग्रामे बोरान् बोरजनान् विजित्य परास्य तत्र देशे एते निगद्यमाने ब्लूम्फोण्टिनश्च प्रीटुरिया च ते नगर्यौ पुरौ स्वस्य यौ दोर्दण्डौ भुजदण्डौ तयोर्बलेन पराक्रमेण वैरिजनाधिकारात् बोरजनहस्तात् समाग्रहीत् स्वायत्तीचकार ॥

भा०—उस रौवर्ट्सने संग्राममें बोरलोगोंको जीतकर वहां ब्लूम्फोण्टिन और प्रीटुरियानामक इनदो नगरियोंको शत्रुओंके हाथसे लेलिया ॥ २७ ॥

रौवर्ट्सनामा स च वाहिनीपतिः

सेनाधिनाथं किचनर्[1]महाभटम् ।

विष्टम्भितुं बोरजनान् नियोज्य तं

स्वं नन्दनाख्यं नगरं न्यवर्तत ॥ २८ ॥

टी०—रौवर्ट्सेति । सरौवर्ट्सनामा वाहिनीपतिश्च तं प्रसिद्धं किचनर्नामासौमहाभटस्तं किचनर्नामकं महावीरं सेनाधिनाथं सेनापतिं बोरजनान् विष्टम्भितुं अवरोद्धुं नियोज्य स्थापयित्वा नन्दनाख्यं स्वं निजं नगरं न्यवर्तत प्रतिययौ ॥

भा०—वह रौवर्ट्सनामक सेनापति दूसरे उसकिचनर्नामक महावीरसेनापतिको बोरलोगोंको स्तम्भनकरनेकेलिये नियुक्तकर अपने नन्दननगरको लौटआया ॥ २८ ॥

ततः कनाडौ[3]ष्ट्रिलिया[4]दिवासिनां

तदा नृणामैंग्लिशपूरुषाःक्षणात् ।

अवाप्य साहाय्यमनीहितं पुन-

र्नियोद्धुमायन्सह बोरमानवैः ॥ २९ ॥

1. Kitchener. 2. London. 3. Canada. 4. Australia.

टी०—स्विति । हीति निश्चयेन सुभूरुहाः सुभूमिसमुत्पन्नाः सुघर्षोगताश्च दृढदर्पसाराः प्रगाढशरीरबलाश्च इत्यादावुभयत्र संबन्धः । पीनाः पुष्टास्तथा बृहद्दोर्विटपाः दीर्घबाहुशाखास्तथा सुसान्द्राः सघना संमेलिताश्च तथा कुधीफलाढ्याः कुत्सितबुद्धिरूपफलयुक्तास्ते पूर्वोक्ता वोरवृक्षा वोररूपा वोरसंज्ञकाश्च वृक्षाः प्रचण्डा अत्युत्कटा ये ऐंग्लिशास्त एव वायवो मारुतास्तैरुग्णा उत्खाता दुःखिताश्च सन्तो बभुः शुशुभिरे । शत्रूणां विनाश एव तत्प्रत्यर्थिनां आह्लादोदये शोभाभायको हेतुरिति काव्यलिङ्गालङ्कारः विशेषेण चात्र रूपकालङ्कारः ॥

भा०—यह बात प्रसिद्ध है कि अच्छी भूमिमें प्राप्त बड़े दृढ बलविशिष्ट तथा पुष्ट और बड़े बाहुरूप शाखायुक्त तथा सघने अथवा मिलेहुये दुष्ट बुद्धिरूप फलोपेत वोरजनरूपी वृक्ष बड़े उत्कट ऐंग्लिशजनरूपी वायुसे उखड़ेहुये वा दुःखितहुये शोभायमानहुये ॥ २५ ॥

खाभ्राङ्कभूमिप्रमिते शके ऽस्मिन्
रौबर्ट्[1]सनामा सह सैन्यवर्गैः ।
श्रीनन्दनेश्या प्रहितोऽन्तकाभ-
स्तं ट्रन्सवालं[2] सहसा जगाम ॥ २६ ॥

टी०—खाभ्राङ्केति । खाभ्राङ्कभूमिप्रमिते एकोनविंशतिशतमिते ऽस्मिन् क्रैष्टशके अन्तकाभः शत्रूणां यमस्वरूपः श्रीनन्दनेश्या राजेश्वर्या प्रहितोऽनुयुक्तो रौबर्ट्सनामा कश्चित्पुरुषः सैन्यवर्गैः सह तं ट्रन्सवालं देशं सहसा शीघ्रं जगाम प्राप ॥

भा०—१९०० ईसवीमें शत्रुओंकेलिये यमस्वरूप महारानीका भेजाहुआ रौबर्ट्सनामक पुरुष बहुतसेनाओंके साथ उस ट्रन्सवाल देशको जापहुँचा ॥२६॥

विजित्य वोरान्[3] स च संगरे ऽस्मिन्
ब्लूम्फोण्टिन[4]प्रीटुरिया[5]नगर्यौ ।

---

1. Lord Roberts. 2. Transvaal. 3. Boer.
4. Bloemfontein. 5. Pretoria.

टी०—तत्रेति। हीति निश्चयेन तत्र युद्धे मांसार्थिनी आमिषाभिलाषिणी अतएव शवप्रविष्टा प्रेतपञ्जरान्तर्हिता अतो डयितुं उड्डयनं अशक्ता सामर्थ्यरहिता कौशिका उल्लूकाः गृध्रादाक्षाक्ष्यास्तेषां पङ्क्तिः श्रेणी रुतायमाना आर्तनादं कुर्वाणा सती सपदि तत्काले अश्वाश्च वीराश्च तेषां क्षतजाम्बुराशौ रुधिरपयोधौ न्यमाङ्क्षीत् निमग्नाबभूव ॥

भा०—उसयुद्धमें मांसको चाहनेवाली उल्लूक और गृध्रोंकी पङ्क्ति प्रेतपञ्जरोंके भीतर बैठीहुई अतएव उड़नेको अशक्तहोकर शब्दकरतीहुई घोड़े और वीरलोगोंके रुधिरप्रवाहमें डूबनेलगी ॥ ३१ ॥

अथान्यतः फेरवसंहतिर्द्राग्-
निपीय कोष्णासृगतीव हृष्टा ।
प्रेतान्समादाय तदार्त्तनादा
संस्कर्तुकामेव वनं जगाम ॥ ३२ ॥

टी०—अथेति। अथानन्तरं अन्यतो द्राक् शीघ्रं कोष्णासृग् मन्दोष्णरुधिरं निपीय आस्वाद्य अतएव अतीव अत्यर्थं हृष्टा प्रसन्ना तथा आर्त्तनादा अशिवशब्दपरा फेरवसंहतिः शृगालपङ्क्तिः प्रेतान् शवान् समादाय गृहीत्वा संस्कर्तुं कामो यस्याः "तुम्काममनसोरपीतिमकारलोपः" एवंविधा इव वनं विपिनं जगाम अयासीत्। अत्रोपमालङ्कारः ॥

भा०—अनन्तर दूसरीतरफसे जल्दीही गरमरुधिरको पीकर प्रसन्नचित्तवाली तथा अमङ्गलशब्दको करतीहुई शृगालोंकी श्रेणी प्रेतोंको उठाकर संस्कारकरनेकी इच्छावाली जैसी वनको चलीगई ॥ ३२ ॥

तत्रैकतो वायससारमेया-
स्तथान्यतो भूतपिशाचसङ्घाः ।
लब्ध्वान्त्रमज्जापललानि दूताः
कातान्तिकाश्रेमुरिवोच्छलन्तः ॥ ३३ ॥

टी०—तत इति । ततोऽनन्तरं तदा तस्मिन्समये ऐंग्लिशपूरुषाः क्षणात् कनाडाच औष्ट्रिलियाच ते आदौ येषां तेषु देशेषु वसन्ति ये जनास्तेषां नृणां सम्बन्धि अनीहितं अप्रार्थितं ( तत्रत्यैर्जनैःस्वेच्छया कृतमितिभावः ) एवं विधं साहाय्यं सहायतां प्राप्य लब्ध्वा पुनर्भूयो वीरमानवैः सह नियोद्धुं संग्रामयितुं आयन् जग्मुः ॥

भा०—अनन्तर ऐंग्लिशलोग जल्दीही कनाडा औष्ट्रिलिया वगैरहदेशोंके रहनेवाले लोगोंकी बगैर चाहीहुई सहायताको पाकर फिर वीरलोगोंके साथ लडनेको आपहुंचे ॥ २९ ॥

अथैंग्लिशा युद्धमखेषु पण्डिताः
पराभियोगैकसुमन्त्रजल्पकाः ।
रणाध्वरे वीरपशून्मदोच्छ्रिता-
न्निजघ्नुरेतान्प्रतिरुद्धवर्त्मनः ॥ ३० ॥

टी०—अथेति । अथानन्तरं युद्धमखेषु रणयज्ञेषु पण्डिता विचक्षणाः अतएव परेषां योऽभियोगो युद्धव्यवहारस्तत्रैकसुमन्त्रान्मुख्यपरोच्छेदविधानानि जल्पन्तीति तादृशा ऐंग्लिशा रणाध्वरे युद्धयज्ञे प्रतिरुद्धानि वर्त्मानि येषां तथा मदोच्छ्रितान् उन्मत्तान् एतान् वीरावीरजना-स्तएवपशवस्तान् निजघ्नुरवधिषुः अत्र रूपकालङ्कारः ॥

भा०—रणयज्ञमें पण्डित अतएव शत्रुओंके युद्धव्यवहारमें अच्छीतरह मुख्य मन्त्रणाको करनेवाले ऐंग्लिशलोगोंने युद्धयज्ञमें सब रास्ताओंको रोककर मदोन्मत्त वीरपशुओंको मारदिया ॥ ३० ॥

तत्राश्ववीरक्षतजाम्बुराशौ
मांसार्थिनी कौशिकगृध्रपङ्क्तिः ।
शवप्रविष्टा डयितुं ह्यशक्ता
स्तायमाना सपदि न्यमाङ्क्षीत् ॥ ३१ ॥

टी०—शेषा इति। शिथिलप्रयत्ना मन्दोद्योगाः शेषा हतशेषा वीरमनुजाः शरण्यान् रक्षितुभावोपयुक्तान् ऐंग्लिशजनान् शरणं रक्षितव्यभावं। [शरणंगृहरक्षित्रोर्वधरक्षणयोरपीति मेदिनी] आजग्मुः उपययुः हीति निश्चयेन सत्कुलानां सुवंशोत्पन्नानां जनानां क्रोधाभिपूरितानि कोपपूर्णानि मनांसि चेतांसि प्रणामे प्रवणास्तत्परा ये ऽञ्जलयस्तैः शान्ति क्रोधाभावं प्रयान्ति गच्छन्तीत्यर्थान्तरेण समर्थ्यते॥

भा०—मन्दोद्योगवाले मरनेसे बचेहुए सब वीरलोग रक्षाकरनेमें दत्तचित्त ऐंग्लिशलोगोंके शरण आगये यह बात ठीक है कि सुवंशोत्पन्नपुरुषोंके क्रोधयुक्तचित्त प्रणामाञ्जलियोंसे शान्तिको प्राप्तहोते हैं॥ ३५॥

अथ सेक्सकुवर्गभूमिपालः
सुचिरादामयपीड्यमानदेहः।
जननीसहजादिदुःखबीजं
निधनं प्राप सहात्मबन्धुबाष्पैः॥ ३६॥

टी०—अथेति। अथानन्तरं सेक्सकुवर्गस्य तद्देशविशेषस्य भूमिपालो गोथाधिपतिः सुचिरात् बहुकालात् आमयेन रोगेण पीड्यमानो देहो यस्यैवंविधः सन् आत्मनो ये बन्धवस्तेषां बाष्पैरश्रुभिः सह जनन्या राजेश्वर्याः सहजादीनां भ्रात्रादीनां दुःखबीजं दुःखकारणं निधनं मरणं प्राप अयात्। अस्मिन्पद्ये मालभारिणीवृत्तम्॥

भा०—अनन्तर सेक्सकुवर्गका और गोथाका (ड्यूक) राजा एडिन्बरानामक राजेश्वरीपुत्र बहुतदिनोंसे बीमारहोकर अपने बान्धवोंके आंसुओंके साथ अपनी माता और भाइयोंके दुःखकेकारणभूत मरणको प्राप्तहुआ॥ ३६॥

अथ सा नरराजपालिका
प्रकृते रक्षणचिन्तयानिशम्।
तनयादिवियोगकारणात्
सगदाभूत्किल वार्धकेन च॥ ३७॥

---

1. Saxecoburg.

टी०—तत्रेति । तत्र युद्धे एकत एकस्मात्स्थानाद् वायससारमेयाः काककुक्कुराः तथा तादृशं अन्यतो द्वितीयस्मात्स्थानाद् भूतपिशाचानां सङ्घा निवहा अन्त्रमज्जापललानि पुरीतदस्थ्यन्तर्गतद्रव्यामिषाणि जग्ध्वा "अदो जग्धिर्ल्यप्तिकिति इत्यद्धातोर्जग्ध्यादेशः" भक्षयित्वा अतएव उच्छलन्त उत्प्लवन्तः कार्तान्तिका यमसम्बन्धिनो दूता इव भ्रेमुर्विचेरुः । अत्राप्युपमालङ्कारः ॥

भा०—उसयुद्धमें एकतरफ़ काक और कुत्ते और दूसरीतरफ़ भूत पिशाचादिगण प्रेतोंके आंतमज्जा और मांसको खाकर उछलतेहुए यमदूतोंकी तरह घूमने लगे ॥ ३३ ॥

कलेवरं कुत्रचिदुत्तमाङ्गं
क्वचिद्गतं वीरजनस्य युद्धे ।
रणक्षितिर्भूतबलिक्रियाभिः
सुपूरितेवाशुशुभे तदानीम् ॥ ३४ ॥

टी०—कलेवरमिति । युद्धे तस्मिन्संग्रामे कुत्रचित् वीरजनस्य कलेवरं शरीरं तथा क्वचित् उत्तमाङ्गं शिरो गतं प्राप्तमासीदिति शेषः तदानीं तस्मिन्समये रणक्षितिः संग्रामभूमिः भूतेभ्यः पिशाचादिभ्यो या बलिक्रिया बलिसमर्पणक्रियास्ताभिः सुपूरिताइव परिपूर्णाइव आशुशुभे रराज । अत्राप्युपमालङ्कारः ॥

भा०—उसयुद्धमें वीरजनका कहीं शरीर और कहीं शिर पड़ाथा उससमय रणभूमि भूतपिशाचोंके लिये बलिक्रियाओंसे परिपूर्णहुई जैसी शोभायमानहुई ॥ ३४ ॥

शेषाश्च वोर[1]मनुजाः शिथिलप्रयत्ना–
आजग्मुरैंग्लिशजनाञ्छरणं शरण्यान् ।
क्रोधाभिपूरितमनांसि हि सत्कुलानां
शान्तिं प्रणामप्रवणाञ्जलिभिः प्रयान्ति ॥ ३५ ॥

---

1. Boer.

जानि औषधानि धरणीश्वर्यां राजेश्वर्यां । अत्र विषयसप्तमी । विफलानि व्यर्थानि अबोभवुः अतिशयेनाजायन्त इह जगति संसारे कोजनो गतायुषं समाप्तजीवितं नरं सुपरित्रातुं रक्षितुं प्रभुः समर्थोऽस्ति अपितु नकोऽपीत्यर्थान्तरेण समर्थ्यते ॥

भा०—अनन्तर सम्पूर्ण ओषधियां महारानी के विषयमें निष्फल होगई क्योंकि इससंसारमें कौन मनुष्य समाप्तआयुवाले मनुष्यकी रक्षाकरनेको समर्थ है ॥ ३९ ॥

अवलोक्य निजायुषः क्षयं
क्षितिखाङ्केन्दुमिते शके हि सा ।
नृपपीठमनन्यशासनं
युवराजाय च सूनवेऽददात् ॥ ४० ॥

टी०—अवेति । हि यस्मात्कारणात् सा राजेश्वरी क्षितिखाङ्केन्दुमिते एकाधिकोनविंशतिशतमिते क्रैष्टशके निजायुषः स्वजीवितस्य क्षयमवसानं अवलोक्य दृष्ट्वा नविद्यते अन्यस्य शासनं यस्मिन् तथाविधं नृपपीठं राज्यासनं सूनवे पुत्राय युवराजाय अददात् प्रायच्छत् ॥

भा०—जिसकारणसे कि महारानीने १९०१ ईसवीमें अपनी आयुको समाप्तहोतेदेखकर अतुलित राज्यसिंहासनको अपने पुत्र युवराज एडवर्डको देदिया ॥ ४० ॥

इति सकलधरायारक्षणैकातपत्रं
कृतिसरिदभिपूरोत्तारणैकाग्र्यसेतुः ।
अवनिपतिसुपूज्या स्वर्गराज्याधिसौख्य-
मनुभवितुमजस्रं जीवलोकं ह्यहासीत् ॥ ४१ ॥

टी०—इतीति । हीति निश्चयेन इतीत्थं सकलधरायाः समग्रपृथिव्या रक्षणे परित्राणे एकातपत्रं एकच्छत्रस्वरूपा तथाकृतिरेव सरिन्नदी

टी०—अथेति । अथानन्तरं किलेति निश्चयेन सा नरराजपालिका राजेश्वरी अनिशं अहरहः प्रकृतेः प्रजाया रक्षणस्य परित्राणस्य चिन्तया तथा तनयादीनां पुत्रादीनां वियोगो विरह एव कारणं तस्मात् वार्धकेन वृद्धावस्थया च सगदा रोगयुक्ताऽभूत् ॥

भा०—अनन्तर यह प्रसिद्धहै कि राजेश्वरी निरन्तर प्रजाकेरक्षणकी चिन्तासे तथा पुत्रादिकोंके शोकसे और वृद्धावस्थाके होनेसेभी रोगयुक्त होगई ॥ ३७ ॥

भिषजोविषयान्तरागताः
सततं भेषजकर्म्मतत्पराः ।
अतिवातरुगार्दितां हि तां
सुखयन्ति स्म न ते कृतश्रमाः ॥ ३८ ॥

टी०—भिषज इति । हि यस्मात्कारणात् विषयान्तरेभ्यो ऽन्यदेशेभ्य आगताः प्राप्तास्तथा सततमविरतं भेषजकर्म्मणि औषधकार्य्ये तत्परा लग्ना दत्तमानसा इति यावत् ते प्रसिद्धा भिषजो वैद्याः [ भिषग्वैद्यश्चिकित्सक इत्यमरः ] कृतश्रमा विहितोद्योगाः सन्तः अतिवातरुजा बहुवात रोगेण आर्दितां आसमन्तात् पीडितां तां राजेश्वरीं न सुखयन्तिस्म रोगशान्तियुक्तां कर्तुं नाशक्नुन् इत्यर्थः ॥

भा०—जिससे कि और देशोंसे आयेहुए बड़ेबड़े वैद्य ( डाक्टर ) लोग परिश्रमकेसाथ बराबर ओषधियोंको करतेहुएभी बड़ेवायुरोगसे ग्रस्त उस महारानी को आरोग्य न करसके ॥ ३८ ॥

निखिलानि तु भेषजान्यपि
धरणीश्यां विफलान्यबोभवुः ।
जगतीह गतायुषं नरं
सुपरित्रातुमथास्ति कः प्रभुः ॥ ३९ ॥

टी०—निखिलानीति । अथानन्तरं निखिलानि समग्राणितु भेष-

# पञ्चदशः सर्गः ॥



श्रीमानमानमनसा कृतमान्यमानो
दानावमानितधनाधिपदानमानः ।
तत्रैडवर्ड इति सप्तमसंख्यकोऽसौ
राज्यासनं न्यविशताखिलभूपपूज्यम् ॥ १ ॥

टी०—श्रीमानिति । तत्र नन्दने नगरे अमानमनसा गर्वरहितचेतसा कृतो मान्यानां श्रेष्ठानां मानः सन्मानो येन तथा दानेन वितरणेन अवमानितो ऽधरीकृतो धनाधिपस्य कुबेरस्य दानमानो वितरणाहङ्कारो येन एवंविधः श्रीमाँल्लक्ष्मीवान् सप्तमसंख्यक एडवर्ड इतिप्रसिद्धो ऽसौ राजेश्वरीतनूजो ऽखिलभूपपूज्यं अशेषमहीपतिसमभ्यर्चनीयं राज्यासनं राज्यपीठं न्यविशत अधितष्ठौ "नेर्विशः आत्मनेपदम् । कर्तुरीप्सिततमत्वादाधारस्य कर्म्मत्वम्" अत्रानुप्रासालङ्कारः वर्णसाम्यमनुप्रास इति लक्षणात् ॥

भा०—उस नन्दननगरमें, शान्तचित्तसे योग्यपुरुषोंका मानकरनेवाला तथा दानकरने में कुबेरसेभी अधिक तथा लक्ष्मीयुक्त सप्तमसंख्यक एडवर्डकरके प्रसिद्ध यह श्रीमहारानीकापुत्र सबराजाओंसे पूजनेकेयोग्य राज्यासनपर बैठा ॥ १ ॥

तत्रैव नन्दनपुरे प्रथमं महोऽभू-
द्यत्राभिनन्दनदलस्तुतकान्तमूर्तिम् ।
पौरोऽभिनन्दितमना नृपराजराजं
राज्याभिषेकनवमाङ्गलिकैः समार्चीत् ॥ २ ॥

1. Edward VII. 2. London.

तस्या अभिपूरः प्रवाहस्तस्योत्तारणे एकोऽग्र्यसेतुर्मुख्यसेतुरन्यः । उद्दे-श्यविधेयभावान्नलिङ्गवचनभेदो दोषावह इति नियमात् । एवंविधा अत्र नृपतिभिः सुपूज्या राजेश्वरी अजस्रमनवरतं स्वर्गराज्यस्य यदाधि-सौख्यं तदनुभवितुं उपभोक्तुं जीवलोकं मर्त्यलोकं अहासीत् तत्याज ॥

भा०—यह बात प्रसिद्धहै कि इसतरह सारे पृथ्वीके परित्राणमें एक छत्रकेसमान तथा कार्य्यरूप नदीप्रवाहके तैरानेमें एकमुख्य सेतुरूप राजेश्वरीने निरन्तर स्वर्गके राज्यसुखको भोगनेकेलिये जीवलोकको छोड़दिया ॥ ४१ ॥

इति उर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये श्रीराजेश्वर्य्याराज्यशासनान्त
वर्णनन्नाम चतुर्दशः सर्गः ॥ १४ ॥



भा०—हे महाराजाधिराज ! कुबेरकेसमान बहुद्रव्ययुक्त भण्डारवाले तथा द्रव्यदानपरायण सत्पुरुषोंको दुःखदेनेवाले राजाओंको दण्डदेनेसे अतिशयशोभायुक्त होकर आप चिरकालतक राज्यकरतेहुए सबराजाओंमें सुशोभितहोवें इसतरह राजमुकुट पहिरानेवाले पुरोहित ( कण्टरबरी पादरी ) ने हर्षपूर्वक श्रीमान्को आशीर्वाद दिया ॥ ३ ॥

## ( कलापकम् )

सभासु राजन् सकले महीतले
सभासु रात्रेयमयूखशीतलाः ।
गुणास्तवाशेषजनानुरागिणो
गुणाश्रयैर्गानयुता भवन्तु ते ॥ ४ ॥

टी०—सभास्विति । हे राजन् ! सकले समग्रे महीतले पृथिव्यां सभासु सनातनधर्मसभासु सभासुरा देदीप्यमाना आत्रेयमयूखाश्चन्द्रकिरणास्तद्वच्छीतला आनन्दजनका इतिभावः तथा अशेषजनान् अनुरञ्जयन्तीति तथाविधास्तव ते प्रसिद्धागुणाः गुणाएवाश्रय आधारो येषां तथाविधैः पुरुषैर्गानयुता गायनोपेता भवन्तु जायन्ताम् । अत्र प्रथमपादादिभागस्य द्वितीयपादादौ तृतीयपादादिभागस्य चतुर्थपादादौ यमनात् द्विवृन्तयमकम् ॥

भा०—हे अधिराज ! सारीपृथ्वीपर सनातनधर्मसभाओंमें देदीप्यमान चन्द्रकिरणकेसमान शीतल तथा सम्पूर्णलोगोंकी प्रीतिबढ़ानेवाले आपके वह न्यायमार्ग प्रवृत्त सद्गुण गुणविशिष्टलोगोंसे गायेजावें ॥ ४ ॥

मतिर्महीपाल तवानघाखिला-
मतिप्रियां तां प्रकृतिं समीक्षताम् ।
यया प्रकृत्या निखिले धरातलेऽ-
नुमन्यसे दैवतवत् सुचेतसा ॥ ५ ॥

टी०—तत्रेति। यत्र नगरे अभिनन्दितं मनो यस्यैवंविधः पौरो नागरिको जनः अभिनन्दनदलैः प्रशंसापत्रैः स्तुता कान्तामूर्तिर्यस्यैवं विधं नृपराजराजं भूमीश्वरं राज्याभिषेके यानि नवानि नूतनानि माङ्गलिकानि मङ्गलसम्बन्धीनि उपकरणानि तैः समार्चीत् पूजयामास तत्रैव नन्दनपुरे नन्दननामके नगरे प्रथमं पूर्वं मह उत्सवो ऽभूद्जायत। अत्र पूर्वार्धपाद्द्वयान्तर्गतो यमकालङ्कारः, अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनःश्रुतिः यमकम् इति काव्यप्रकाशकारः। तथाच दण्डी। अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः। यमकं तच्च पादानामादिमध्यान्तगोचरम्। एकद्वित्रिचतुष्पादयमकानां विकल्पना। आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वत इति॥

भा०—जहां प्रसन्नचित्तवाले नागरिकलोगोंने अनेकदेशोंसे आयेहुए अभिनन्दनपत्रोंसे प्रशंसित राजेश्वरको राज्याभिषेकके नूतनमङ्गलोपकरणोंसे पूजनकिया उसी नन्दननगरमें प्रथममहोत्सव हुआ॥ २॥

श्रीराजराज! सुचिरं विदधत्सुराज्यं
श्रीराजराजसुसमृद्धियुतात्मकोषः।
श्रीराजराजसुनिपीडनसंहृतोच्च-
श्री राज राजसु मुदेत्यवदत्पुरोधाः॥ ३॥

टी०—श्रीति। हे श्रीराजराज! श्रीमान् यो राजराजः कुबेरस्तद्वत्सुसमृद्धियुतः शुभसम्पत्तियुक्त आत्मकोषो निजार्थौघो यस्य तथा श्रियं लक्ष्मीं रौप्यादिकमिति यावत् रान्ति ददति ये सत्पुरुषा स्तानजन्ति क्षिपन्ति दुःखयन्ति ये राजानस्तेषां सुनिपीडनेन दण्डप्रदानादिना संहृता गृहीता उच्चा अत्युत्कृष्टा श्रीः शोभा येनैवंविधः सुचिरं राज्यं विदधत् कुर्वन्सन् त्वं राजसु सर्वेषु भूपतिषु राज शोभस्वेत्याशीः पुरोधा मुख्यपुरोहितो मुदा हर्षेण इतीत्थं अवदत् कथयाम्बभूव। अत्र वृन्तयमकम्, पादादौ सदृशं यस्य प्रतिपादं प्रदृश्यते। तद्वृन्तयमकं नाम कथ्यते कविपुङ्गवैरिति लक्षणात्॥

टी०— शुभेति । तदा तस्मिन्समये समाल्यहस्ताः पुष्पाञ्जलियुक्ताः समाः सदृशा योग्या इति यावत् अपरेऽन्ये पुरोधसः पुरोहिताः अनिशं अहरहः रिपुभ्यः शत्रुभ्यो दरं भयं बलरहितानामिति शेषः हरते दूरी कुर्वते तथा परेङ्गितज्ञाय अन्यचेष्टाभिज्ञाय नृपाय राजेश्वराय सादरं सन्मानपुरःसरं यथातथा इतीत्थं पूर्वोक्तां शुभाशिषं उच्चकैरुच्चस्वरेण जगदुः कथयामासुः । अत्र काञ्चीयमकालङ्कारः । एकस्यान्ते परस्यादौ सदृशं दृश्यते यदि । तत्काञ्चीयमकं नाम व्याहृतं कविपुङ्गवैरितिलक्षणात् ॥

भा०——उससमय पुष्पमाला हाथमेंलियेहुए औरभी योग्यपुरोहित ( पादरी ) लोग हमेशाह शत्रुओंसे दुर्बलोंकी रक्षाकरनेमें निपुण तथा दूसरेकी चेष्टाको जाननेवाले सार्वभौमकेलिये बड़े आदरपूर्वक इसतरह शुभाशीर्व्वादको उच्चस्वरसे कहनेलगे ॥ ७ ॥

ततो जना भारतवर्षवासिनो-
नृपाधिनाथस्य महोत्सवोत्सुकाः ।
यथेन्द्रप्रस्थेऽपि महोत्सवोऽस्तु ते
नराधिनाथाय तथा व्यजिज्ञपन् ॥ ८ ॥

टी०——ततइति । ततोऽनन्तरं नृपाधिनाथस्य सार्वभौमस्य महोत्सवे उत्सुकाः साभिलाषा भारतवर्षवासिनो भारतदेशीया जनाः यथा इन्द्रप्रस्थे नगरेऽपि ते तव महोत्सवोऽस्तु तथा नराधिनाथाय राजेश्वराय व्यजिज्ञपन् प्रार्थयाञ्चक्रिरे ॥

भा०——अनन्तर राजेश्वरके उत्सव देखनेमें उत्कण्ठित भारतदेशवासी सबलोगोंने ( आपका महोत्सव दिल्लीमें होवे ) इसतरह सार्वभौमके लिये प्रार्थनाकी ॥ ८ ॥

धराधिनाथोऽपि निशम्य तद्वचो-
वचोऽभिरामं निखिलार्थसम्मितम् ।
मितं तदा स्वीकरणाश्रवाञ्चितं
चितं सदर्थैर्जनतामुवाच ताम् ॥ ९ ॥

टी०—मतिरिति । हे महीपाल ! तव अनघा पवित्रा मतिर्बुद्धिः अतिप्रियां बहुस्नेहयुक्तां अखिलां समग्रां तां प्रकृतिं प्रजां समीक्षताम् आलोचताम् यया प्रकृत्या प्रजया निखिले धरातले भूतले सुचेतसा सुमनसा दैवतवत् विष्णुवत् अनुमन्यसे ज्ञायसे । अत्रापि पूर्वार्धे वृन्तंनामयमकम् ॥

भा०— हे राजराज ! आपकी पवित्रबुद्धि अतिस्नेहकरनेवाली इसप्रजाको विचारपूर्वक समीक्षणकरे जिसप्रजासे कि शुद्धान्तःकरणसे सारेधरातलमें आप विष्णुतुल्य मानेजाते हैं ॥ ५ ॥

विकाशमाना तव कीर्तिरन्वहं
विकाशपुष्पोच्चयसन्निभाऽमला ।
विकाशमाशान्तरमत्र भूपते !
विकाशमीयात्सुचिरं हतद्विषः ॥ ६ ॥

टी०—विकाशेति । हे भूपते ! अत्र जगति विशेषो यः काशो वृक्षविशेषः तत्पुष्पोच्चयसन्निभा तत्प्रसूननिकरतुल्या अमला शुद्धा अन्वहं विकाशमाना विस्तीर्णतां प्राप्नुवाना हतद्विषो नष्टवैरिणस्तव कीर्तिः वीनां पक्षिणां काशो गमनं यस्मिन् "कश गतिशासनयोरितिधातोरूपम्" एवंविधं आकाशं आशान्तरं दिगन्तरं विकाशं प्रकाशं ईयात्प्राप्यादित्याशीः । अत्रापि वृन्तयमकम् ॥

भा०—हे महाराज ! काशपुष्पसमूहतुल्य शुद्ध और प्रतिदिन फैलतीहुई शत्रुओंको नाशकरनेवाले आपकी कीर्ति आकाश और दिगन्तर तक प्रकाशमानहोवे ॥ ६ ॥

शुभाशिषं चेति पुरोधसोऽपरे
परेङ्गितज्ञाय नृपाय सादरम् ।
दरं रिपुभ्यो हरते ऽनिशं समाः
समाल्यहस्ता जगदुस्तदोच्चकैः ॥ ७ ॥

टी०—तत इति । ततोऽनन्तरं अतिरम्यवर्त्मसु रमणीयमार्गेषु दिगन्तेषु आशान्तरेषु ततो व्याप्तो महस्यालोकने उत्सवस्य दर्शने तत्पर एकाग्रचित्तो जनोलोक इतीत्थं तत्रोत्सवे इन्द्रप्रस्थं नगरं समन्ततोऽभितो नित्यशः प्रतिदिनं सुपूर्णतां पूरणभावं ततान विस्तारयाम्बभूव ॥

भा०—अनन्तर रमणीयमार्गविशिष्ट दिगन्तोंमें व्याप्त उत्सवदेखनेवाले लोगोंने इसतरह उस उत्सवमें इन्द्रप्रस्थनगरको चारोंतरफसे प्रतिदिन पूर्णभावको प्राप्तकरदिया ॥ ११ ॥

अथाधिपा भारतदेशवासिनः
स्वसैन्यनागाश्वरथादिभिर्वृताः ।
तदेन्द्रप्रस्थं नगरं नवायितं
सुभूषयाञ्चक्रुरमन्दसम्मदाः ॥ १२ ॥

टी०—अथेति । अथानन्तरं तदा तस्मिन्नुत्सवसमये अमन्दसम्मदा अतिहर्षोपेताः अतएव स्वसैन्यनागाश्वरथादिभिर्निजवाहिनीगजतुरगरथप्रभृतिभिर्वृता युक्ता भारतदेशवासिनोऽधिपा राजानो नवायितं नूतनीभूतं इन्द्रप्रस्थं नाम नगरं सुभूषयाञ्चक्रुः अलंकृतमकार्षुः ॥

भा०—अनन्तर उस उत्सवसमयमें हर्षयुक्त अतएव अपनी सेना हस्ती घोड़े और रथ वगैरहोंसे युक्त सब भारतदेशीय राजाओंने नूतनावस्थाको प्राप्त इन्द्रप्रस्थनामक नगरको अच्छीतरह सुशोभित किया ॥ १२ ॥

ततोऽधिराजस्य निशम्य शासनं
स लार्डकर्जन[1] हि तदैंग्लिशोऽग्रणीः ।
समं कनाट[2]क्षितिपेन चोत्सवे
समाययौ तत्र पुरेऽमितप्रभे ॥ १३ ॥

टी०—तत इति । ततोऽनन्तरं तदा तस्मिन्समये अधिराजस्य सार्वभौमस्य शासनमाज्ञां निशम्य श्रुत्वा हि यस्मात्कारणात् अग्रणीर्मुख्यः स

1. Lord Curzon. 2. Duke of Connaught.

टी०—धरेति । तदा तस्मिन्समये धराधिनाथो राजेश्वरोऽपि तद्वचस्तेषां लोकानां वचनं निशम्य श्रुत्वा निखिलार्थसम्मितं समग्रप्रयोजनयुक्तं मितं परिमितं तथा स्वीकरणस्याङ्गीकारस्य ये आश्रवा नियमास्तैरञ्चितं भूषितं तथा सदर्थैः शुभप्रयोजनैश्चितं पूर्णं एवं अभिरामं मनोहरं वचो वचनं तां जनतां लोकसंहतिं प्रजामितियावत् उवाच अगादीत् । अत्रापि कार्ञ्चियमकम् ॥

भा०—उससमय राजेश्वरने उनप्रजालोगोंका वचन सुनकर सम्पूर्ण अर्थोंसे युक्त तथा परिमित और स्वीकार नियमोंसे अलंकृत शुभप्रयोजनविशिष्ट रमणीय वचनको उनप्रजालोगोकेलिये कहा ॥ ९ ॥

अथेन्द्रप्रस्थे धरणीधरोत्सवः
शके ऽनलाभ्राङ्कमहीमिते शुभे ।
सहैंग्लिशैर्भारतवासिभूमिपै-
र्जनाः समन्ताद्भवितेति शुश्रुवुः ॥ १० ॥

टी०—अथेति । अथानन्तरं अनलाभ्राङ्कमहीमिते त्र्यधिकोनविंशतिशतमिते शुभे क्रैष्टशके इन्द्रप्रस्थे नगरे धरणीधरोत्सवो राजेश्वरमहोत्सव ऐंग्लिशैर्जनैः सह भारतवासिभूमिपैर्भविता भविष्यति जनाः सर्वे लोकाः समन्तादभित इतीत्थं शुश्रुवुः आकर्णयाम्बभूवुः ॥

भा०—अनन्तर १९०३ ईसवीमें सार्वभौमका सिंहासनारोहणोत्सव ऐंगलिशलोगोंके साथ भारतदेशीयराजाओं से होवेगा लोगोंने चारोंतर्फ से इसतरह सुना ॥ १० ॥

ततो महालोकनतत्परो जन-
स्ततो दिगन्तेष्वतिरम्यवर्त्मसु ।
इतीन्द्रप्रस्थं नगरं समन्ततः
सुपूर्णतां तत्र ततान नित्यशः ॥ ११ ॥

" क्रयः क्रयन्तादव्ययीभावाद्दृत्वा " अनुजग्मुः तत्पश्चादनुसस्रुरितिभावः । अत्रोपमालङ्कारः ॥

भा०—अनन्तर उससमय भारतदेशीय सबराजाओंने क्रमपूर्वक उन लार्ड-कर्जन् कनाट्भूपोंको सत्कारकर इन्द्रके भेजेहुये स्त्रियोंसहित दो देवताओंको जैसा बड़े हर्षसे उनदोनोंको अनुसरणकिया ॥ १९ ॥

पृतनाग्रसरो महाप्रवीरः
किचनर्लार्डसमाख्यकः पुरस्तात् ।
अतिवीररसेन शोभमानो
हयमारुह्य पुरीं हि तामियाय ॥ १६ ॥

टी०—हीति निश्चयेन महाप्रवीरस्तेजस्वी अतएव अतिवीररसेन शोभमानो विराजमानः किचनर् चासौ लार्डः सैव समाख्या ऽभिधानं यस्यैवंविधः पृतनाग्रसरः सर्वसेनापतिः पुरस्तादग्रतो हयं अश्वं आरुह्य तां प्रसिद्धां इन्द्रप्रस्थनामिकां पुरीं नगरीं इयाय जगाम ॥

भा०—यह प्रसिद्धहै कि बड़ातेजस्वी अतएव वीररससे शोभायमान लार्ड किचनरनामक सेनापति सबसे आगे घोड़ेमें चढ़कर उस प्रसिद्ध दिल्लीनगरीको चले ॥ १६ ॥

प्रथमं पदचारिणः समीयु-
स्तदनु ह्याश्विकवाहिनी जगाम ।
अथ लार्डकनाटभूपती तौ
नगरे रम्यपथे मुदा सहैताम् ॥ १७ ॥

टी०—प्रथममिति । प्रथमं पूर्वं पदचारिणः पदातयः समीयुः अयाञ्चक्रिरे तदनु अश्वैश्चरन्तीति " चरतीत्यनेन ठक् प्रत्ययः " तेषां वाहिनी सेना जगाम ययौ अथानन्तरं लार्डः कनाटभूपतिश्चेति तावुभौ रम्यपथे "ऋकू-

---

1. Lord Kitchener.

प्रसिद्धो लार्डोपाधियुक्तः कर्जन्नामक ऐंग्लिशः कनाटक्षितिपेन कनाट-भूपतिना च समं सार्धं इदसवे विषये अमितप्रभे अतुलितशोभाविशिष्टे तत्रेन्द्रप्रस्थे पुरे नगरे समाययौ प्राप ॥

भा०--अनन्तर राजेश्वरकी आज्ञापाकर जिसकारणसे कि वे प्रसिद्ध लार्ड-कर्जन् कनाटभूपति ( ड्यूक आफ् कनाट ) के साथ उसउत्सवमें बड़ी शोभा-वाले उस इन्द्रप्रस्थ नगरमें आपहुँचे ॥ १३ ॥

तौ लार्डकर्जन्सुकनाटभूपा-
वेतौ सभार्यौ जनताऽनुमत्या ।
द्विपौ समारुह्य तदेन्द्रप्रस्थ-
पुरश्रियं वीक्षितुमीषतुस्ताम् ॥ १४ ॥

टी०--ताविति । तदा तस्मिन्समये सभार्य्यौ सस्त्रीकौ लार्डकर्जश्च सुकनाटभूपश्चेति तावेतावुभौ पुरुषश्रेष्ठौ जनतानुमत्या लोकसम्मत्या द्विपौ हस्तिनौ समारुह्यास्थाय तां प्रसिद्धां इन्द्रप्रस्थपुरस्य श्रियं शोभां वीक्षितुं द्रष्टुं ईषतुरिच्छतःस्म ॥

भा०--उससमय सस्त्रीक लार्डकर्जन् और कनाटभूप इनदोनोंने लोकसम्मति से हाथियोंमें चढ़कर उस प्रसिद्धनगरशोभाको देखनाचाहा ॥ १४ ॥

अथ भारतवर्षभूमिपाला-
विहितातिथ्यविधी च तौ क्रमेण ।
अमराविव जिष्णुनानुयुक्तौ
समुदं स्त्रीसहितौ तदाऽनुजग्मुः ॥ १५ ॥

टी०--अथेति । अथानन्तरं तदा तस्मिन्समये भारतवर्षस्य ये भूमि-पालाः राजानस्ते क्रमेण क्रमशश्च विहित आतिथ्यस्य सत्कारस्य विधि-र्ययोस्तथाविधौ तौ लार्डकर्जन्कनाटभूपौ जिष्णुना इन्द्रेणानुयुक्तौ प्रेरितौ स्त्रीसहितौ सस्त्रीकौ अमराविव देवौ यथा समुदं सहर्षं यथा तथा

1. Lord Curzon 2. Duke of Connaught.

भा०—बुद्धिविशिष्ट तथा बहुशास्त्रवेत्ता अतएव शास्त्रज्ञ पुरुषोंके अतिप्रिय-बन्धु तथा करुणार्द्रहृदय श्रीमान् बड़ोदानरेश इस उत्सवमें हर्षसे हाथीमें चढ़कर उस दिल्ली नगरीको चले ॥ १९ ॥

**शिवपूजनलब्धतत्त्वबोधो**
**ननु कश्मीरपतिः प्रतापसिंहः ।**
**अधिरुह्य सहानुजेन तत्रा-**
**मरसिंहेन नृपेण नागमागात् ॥ २० ॥**

टी०—शिवेति । नन्विति निश्चयेन शिवपूजनेन लब्धः प्राप्तस्तत्त्वबोधो येन एवंविधः प्रतापसिंह एतन्नाम्ना प्रसिद्धः कश्मीरपतिः कश्मीरदेशस्वामी अनुजेन स्वकनिष्ठभ्रात्रा अमरसिंहेनैतदाख्याविशिष्टेन नृपेण भूपेन सह सार्धं नागं हस्तिनं अधिरुह्य तत्रेन्द्रप्रस्थे नगरे आगात् अयासीत् ॥

भा०—यह निश्चयहै कि शिवपूजनसे तत्त्वज्ञानोपेत श्रीमान् महाराजा प्रतापसिंहाभिधेय कश्मीरदेशके स्वामी अपने कनिष्ठभ्राता के,सी,अस्, ऐ,सर श्रीअमरसिंह नामक महाराजके साथ हाथीमें चढ़कर उस दिल्ली नगरीको चले ॥ २० ॥

**नयवर्त्मकृतात्मराज्यकार्यो**
**ननु मैसूरनराधिपो मनस्वी ।**
**करुणार्द्रमनाः स कृष्णरावो**
**द्विपमारुह्य पुरीमिमां प्रतस्थे ॥ २१ ॥**

टी०—नयवर्त्मेति । नन्विति निश्चयेन मनस्वी शुद्धान्तःकरणः तथा करुणया आर्द्रं मनो यस्य अतएव नयवर्त्मनि कृतं आत्मनो राज्यस्य कार्यं येन तथाविधः स प्रसिद्धः कृष्णराव एतदाख्यान्वितो मैसूरनराधिपो मैसूरदेशाधिपतिः द्विपं करिणं आरुह्य इमां इन्द्रप्रस्थनामिकां पुरीं नगरीं प्रतस्थे उपागमत् ॥

भा०—यह निश्चयहै कि शुद्धान्तःकरण तथा दयायुक्त अतएव नीतिपूर्वक

पूरब्धूःपथामिति समासान्तो ऽप्रत्ययः " रमणीयवर्त्मनि नगरे मुदा सह हर्षेण सार्धं पेताम् अयासिष्टाम् ॥

भा०—वहां पहिले पदचारिणी सेना चली अनन्तर अश्वारोहिणी चली उसके अनन्तर लार्डकर्जन् और ड्यूक आफ़ कनाट अच्छे राजमार्गविशिष्ट नगरमें हर्ष के साथ चले ॥ १७ ॥

अथ हैदरबादभूमिपालः
ससुतो रञ्जितलोकचित्तवृत्तिः ।
महबूबअलीति नामधेयो
गजमारुह्य जगाम राजमार्गे ॥ १८ ॥

टी०—अथेति । अथानन्तरं ससुतस्तनुजेन सहितस्तथा रञ्जिता प्रसन्नतां प्रापिता लोकानां चित्तवृत्तिर्येन एवंविधो महबूबअली इति नामधेय एतन्नाम्ना प्रसिद्धो हैदरबादस्य देशविशेषस्य भूमिपालो महीपतिर्गजं कुञ्जरं आरुह्यास्थाय राजमार्गे जगाम अयासीत् ॥

भा०—अनन्तर अपने पुत्रके सहित तथा लोगोंको प्रसन्नकरनेवाले श्रीमन् महबूबअली नामधेय निजामहैदराबाद हाथी में चढ़कर उस दिल्ली के राजमार्ग में चले ॥ १८ ॥

मतिमान् बहुशास्त्रविद् वडोदाऽ—
धिपतिर्वाङ्मयवित्प्रियैकबन्धुः ।
करिणं करुणामयो ऽधिरुह्य
नगरीं तां प्रययौ मुदा महे ऽस्मिन् ॥ १९ ॥

टी०—मतीति । मतिमान् सुधिषणो बहुशास्त्रविद् अनेकशास्त्रज्ञः अत एव वाङ्मयविदां अधीतशास्त्राणां प्रियैकबन्धुः प्रियमित्रं एवंविधः करुणामयो दयायुक्तो वडोदाधिपतिर्वडोदानरेशः अस्मिन्महे उत्सवे मुदा हर्षेण करिणं हस्तिनं अधिरुह्य तां नगरीं इन्द्रप्रस्थनामिकां पुरीं प्रययौ जगाम ॥

तिकुशलः अतएव आशान्तेषु दिगन्तेषु विख्यातं प्रसिद्धं यशो यस्यैवं विधो गरुडध्वजाकृतिर्विष्णुरूपो दर्शनीयमूर्तिरितिभावः श्रीमान् कीर्तिशाह एतदभिधानष्टिहरीनराधिपष्टिहरीनरेशो नागं हस्तिनं समारुह्य तत्प्रसिद्धं इन्द्रप्रस्थं पुरं नगरं जगामाव्रजत् । अत्र पदार्थहेतुतया काव्यलिङ्गालङ्कारः । अत्रेन्द्रवंशावृत्तम् ॥

भा०—अनेकशास्त्रज्ञ तथा राजनीतिमें प्रवीण अतएव दिगन्तोंमें विख्यातकीर्ति तथा विष्णुवद्दर्शनीयमूर्ति श्रीमान् कीर्तिशाह नामधेय टिहरीनरेश्वर हाथीमें चढ़कर उस इन्द्रप्रस्थ नगरको चले ॥ २४ ॥

श्रीमाँस्तथा जयपुराधिपतिर्महे ऽस्मिन्
सद्धार्मिकः सपदि माधवसिंहनामा ।
दन्तावलं समधिरुह्य सुशीलवेष-
स्तामिन्द्रप्रस्थनगरीं समियाय नूनम् ॥ २५ ॥

टी०—श्रीमानिति । नूनमिति निश्चयेन तथा तादृशएव सुशीलवेषः सत्प्रकृतिविशिष्टः सद्धार्मिकः शुभधर्म्मोपेतः श्रीमान्माधवसिंहनामा माधवसिंहाख्यो जयपुराधिपतिर्जयपुरस्वामी अस्मिन्महे उत्सवे दन्तावलं हस्तिनं समधिरुह्य सपदि तत्काले तां इन्द्रप्रस्थनगरीं समियाय अव्राजीत् । अत्र वसन्ततिलकावृत्तम् ॥

भा०—यह निश्चयहै कि उसीतरह सुस्वभावोपेत सद्धर्म्मविशिष्ट श्रीमान् माधवसिंहनामक जयपुराधीश्वर इस महोत्सवमें हाथीमें चढ़कर उस इन्द्रप्रस्थनगरीको चले ॥ २५ ॥

श्रीमाँस्तथा जोधपुराधिनाथः
स्वराजनीत्याहितकार्य्यसङ्घः ।
दन्तीन्द्रमारुह्य सुभूषिताङ्ग-
स्तादिन्द्रप्रस्थं नगरं समैषीत् ॥ २६ ॥

अपने राज्यकार्य्य करनेमें निपुण वे प्रसिद्ध श्रीकृष्णराव नामधेय मैसूरनरेश हाथीमें चढ़कर इस इन्द्रप्रस्थ नगरीको चले ॥ २१ ॥

ट्रैभिन्कोराधिपतिर्विष्णुपरः पद्मनाभदासाख्यः।
अत्यौदार्य्यविभूतिः पद्मिनमारुह्य तत्र संप्रययौ ॥२२॥

टी०—ट्रैभिन्निति। अत्यौदार्य्यस्य प्रभूतोदारताया विभूतिरैश्वर्य्यं यस्यैवंविधो विष्णुपरो हरावेकाग्रचित्तः पद्मनाभदासाख्य एतन्नामधेयष्ट्रैभिन्कोराधिपतिष्ट्रैभिन्कोरदेशेशः पद्मिनं हस्तिनं आरुह्य तत्रेन्द्रप्रस्थे नगरे संप्रययौ ऐषीत् ॥

भा०—बड़े उदारशील विष्णुपरायण पद्मनाभदास नामधेय ट्रैभिन्कोरदेशेश्वर हाथीमें चढ़कर उस इन्द्रप्रस्थ नगरमें चले ॥ २२ ॥

ग्वालीयराधिनाथो माधोरावाभिधानसंयुक्तः।
अधिरुह्य दन्तिरत्नं इयाय तत्र त्रिविक्रमाहितधीः ॥२३॥

टी०—ग्वालीयरेति। त्रिविक्रमे विष्णौ आहिता प्रेरिता धीर्येनैवंविधो माधोरावाभिधानसंयुक्तो माधोरावनामधेयो ग्वालीयराधिनाथो ग्वालीयरदेशेश्वरः दन्तिरत्नं श्रेष्ठनागं अधिरुह्य तत्र नगरे इयाय वव्राज। श्लोकयोरुभयोर्गीतिवृत्तम् ॥

भा०—विष्णुपरायण श्रीमाधोराव नामधेय ग्वालीयरेश्वर कुञ्जरमें चढ़कर उस रम्य राजमार्गमें चले ॥ २३ ॥

आशान्तविख्यातयशा विचक्षणो
न्यायाऽनुरक्तष्टिहरीनराधिपः।
श्रीकीर्त्तिशाहो गरुडध्वजाकृति-
र्नागं समारुह्य जगाम तत्पुरम् ॥ २४ ॥

टी०—आशेति। विचक्षणो विद्वान् अतएव न्यायाऽनुरक्तो राजनी-

भा०—बुद्धिमान् और बड़ी कीर्तिविशिष्ट यवनकुलोत्पन्न हामीद्अलीनामक रामपुरके नव्वाब हाथीमें समारूढ़होकर राजाओंके समुदायसे सुशोभित इस पूर्वोक्त नगरीको चले ॥ २८ ॥

## ( कुलकम् )

रींवाधिपो ऽथ निखिलागमतत्त्वदर्शी
श्रीव्यङ्कटेशरमणो हरिलग्नचित्तः ।
झीन्देश्वरः सुधिषणो रणवीरसिंहो
धाराधिपो ऽतिनयशील उदेजिरावः ॥ २९ ॥

श्रीन्दौरदेशनृपतिर्हि शिवाजिरावः
श्रीछत्रपुनरपतिः किल विश्वनाथः ।
श्रीदातियाधिपतिरत्र तथा सहर्षं
लोकेन्द्रबाहदुर इत्यभिधानयुक्तः ॥ ३० ॥

नाभाधीशो ऽनेकविद्याप्रगल्भो
हीरासिंहः कीर्तिरत्नैकपात्रम् ।
चर्खारीशो देवपूजैकचित्तः
शुद्धात्मा श्रीमालखान्सिंहनामा ॥ ३१ ॥

बृहद्दिवासभूपतिस्तुकाजिरावसंज्ञकः
फरीदकोटभूमिपो बलाढ्यवीरसिंहकः ।
महाभटानुजेन मुख्यमन्त्रिणा च संयुत-
स्तथैव सीरमोरपः सुरेन्द्रविक्रमाभिधः ॥ ३२ ॥

कर्पूरस्थलभूपतिः सुनयविच्छ्रीमाञ्जगज्जीतसिं-

टी०—श्रीमानिति । स्वराजनीत्या निजराजनयेन आहितो विहितः कार्य्यसङ्घो येनैवंविधः श्रीमान् जोधपुराधिनाथो जोधपुराधिपतिः प्रतापसिंहः तथा पूर्वोक्तप्रकारेण दन्तीन्द्रं हस्तिश्रेष्ठं आरुह्यास्थाय तत्प्रसिद्धं इन्द्रप्रस्थं नगरं समेपीत् अगात् ॥

भा०—राजनीतिसे सारा राज्यकार्य्य करनेवाले श्रीमान् जोधपुर के महाराज प्रतापसिंहनामक उसीतरह हाथी में चढ़कर उस इन्द्रप्रस्थ नगर को चले ॥ २६ ॥

श्रीपटियालाधिपतिर्गुरुप्रियः प्रकृतिरञ्जनैककृतिः ।

भूपेन्द्रसिंहनामा ऽधिरुह्य दन्तीन्द्रमाययौ तत्र ॥ २७ ॥

टी०—श्रीति । गुरवः प्रिया यस्य गुरुज्ञापर इत्यर्थः तथा प्रकृतिरञ्जनं एव एकाकृतिर्यस्यैवंविधो भूपेन्द्रसिंहनामा भूपेन्द्रसिंहाख्यः श्रीमान् पटियालाऽधिपतिः पटियालेश्वरो दन्तीन्द्रं हस्तिश्रेष्ठं अधिरुह्य तत्रोत्सवे आययौ प्राप ॥

भा०—गुरुभक्त तथा प्रजापालनतत्पर भूपेन्द्रसिंहनामधेय श्रीमान् पटियालेश्वर हाथीमें आरूढ़ होकर उस महोत्सवमें आपहुँचे ॥ २७ ॥

बंहिष्ठकीर्तिर्यवनान्वयोद्भवो

हामीद्अली रामपुराधिपः सुधीः ।

भूपालसन्दोहविराजितान्तरा-

मारुह्य नागं प्रययाविमां पुरीम् ॥ २८ ॥

टी०—बंहिष्ठेति । सुधीर्बुद्धिमान् बंहिष्ठा बहुतमा " प्रियस्थिरोरुबहुलेत्यादीनां प्रस्थस्फवर्बंहीत्यादयः क्रमादादेशाःस्युः इष्ठादिषु " कीर्तिर्यस्यैवं विधो यवनान्वयोद्भवो यवनकुलोत्पन्नो हामीद्अली इति नामधेयो रामपुराधिपो रामपुरभूपतिः नागं गजं समारुह्य भूपालानां सन्दोहो निवहस्तेन विराजितं अन्तरं यस्या एवंविधां इमां पूर्वोक्तां पुरीं प्रययौ उपागमत् ॥

ह्यसि[1]विषयाधिपतिरथो सुजनमनोरञ्जनैककार्य्यरतः ।
भूपेश्वरानुयुक्तः स्थिरधिषणश्चैंग्लिशः सरलः ॥ ४२ ॥
श्रीनोर्थकोट[2]नामा ह्यैंग्लिशकोबम्बयीपुराधिपतिः ।
श्रीयम्प्थहिल्[3]तथैवचमदरासेशःसुनीतिमान् कुशलः ॥४३॥
श्रीमान् रिवाँज[4]नामा पञ्चनदीयाधिपो नयैकमनाः ।
बर्म्माधिपो मनस्वी लाटूस[5]श्चागराधिपः सुमतिः ॥४४॥
श्रीबोर्डिलिन्[6]समाह्वो बङ्गालेशोऽनुरञ्जितप्रकृतिः ।
श्रीमध्यदेशभूपश्चासामेशस्तथा सुनीतिपरः ॥ ४५ ॥
एते भूपैंग्लिशका ह्यनुपमशोभाः स्वगौरवक्रमतः ।
अधिरुह्य दन्तितुरगाँस्तदिन्द्रप्रस्थं समाययुर्नगरम् ॥ ४६ ॥

टी०—रविेति । अथानन्तरं हरौ विष्णौ लग्नं चित्तं यस्य विष्णुपरायणस्तथा निखिलागमानां समग्रशास्त्राणां तत्त्वं सारं पश्यतीति तथाविधः श्रीमान् व्यङ्कटेशरमण एतदाख्यो रींवाधिपो रींवादेशाधिपतिः, तथा सुधिषणः प्रशस्तबुद्धिः रणवीरसिंह एतन्नामधेयो झीन्देश्वरो झीन्ददेशाधिपतिः, तथा अतिनये ऽनल्पनीतौ शीलं यस्यैवंविध उदेजिराव एतदभिधानो धाराधिपो धारदेशाधिपतिः ॥ २९ ॥

टी०—श्रीन्दौरेति । हीति निश्चयेन शिवाजिराव एतदभिधानः श्रीमान् इन्दौरदेशनृपतिः इन्दौरदेशेश्वरः, किलेति निश्चयेन विश्वनाथ एतदाख्यः श्रीमान् छत्रपुनरपतिश्छत्रपुराधिपः, तथा अत्रोत्सवे सहर्षं यथा तथा लोकेन्द्रबाहदुर इत्यभिधानयुक्त एतदाख्यः श्रीमान् दातियाधिपतिर्दातियादेशेश्वरः ॥ ३० ॥

---

1. Duke of Hesse. 2. Northcote, the Governor of Bombay. 3. Ampthill, the Governor of Madras. 4. Revas, Lt. Govr. of the Punjab. 5. J. LaTouche, Lt.-Govr., U. P. 6. Bourdillion, the Lt.-Govr. of Bengal.

हाख्यः स्वां प्रकृतिं स्ववित्तनिवहैः सन्तर्पयन्नित्यशः ।
ताद्दक्स्वलपदिवासदेशनृपतिर्मल्हारराव: सुधीः
सीरोईविषयाधिपो बहुयशाः श्रीकेसरीसिंहकः ॥ ३३ ॥

साहुच्छत्रपतिश्च नीतिकुशलः कोलापुराधीश्वरः
श्रीमान्कूचविहारदेशनृपतिर्भूपेन्द्रनारायणः ।
राधाकृष्णसमाख्यको ऽजनि रतो हिल्टीपराधीश्वरो
गङ्गासिंह इति स्वकार्य्यकुशलो वीकानिराधीश्वरः ॥३४॥

प्रभुनारायणसिंहः श्रीमान् वाराणसीजनाधिपतिः ।
तत्र भवानीसिंहो झालावाडाधिपो ऽतिशास्त्रपटुः ॥ ३५ ॥

भावल्पुरविषयेशो महमद्बावल्समाख्यकः सुनयः ।
अथ कोटलानरेश ऐह्मदअलीनामको मतिमान् ॥ ३६ ॥

श्रीनरसिंहगढेशः श्रीसिखिमेशस्तथा सुनीतियुतः ।
श्रीराजगढनरेशो विष्णुपरो वंशदाधिपो मतिमान् ॥३७॥

श्रीमान् वरियाधिपतिर्जैसलमीराधिपश्च वाङ्मयवित् ।
श्रीमानल्वरभूपो विबुधजनप्रीतिकारकः कृतधीः ॥ ३८ ॥

श्रीमान् बूँदिनरेशः श्रीकचविषयाधिपः प्रजाहितधीः ।
श्रीमान्करौलिभूपःश्रीमानुचर्छाधिपःशिवाङ्घ्रिमनाः॥३९॥

श्रीमान्समथरेशो रावकोटेशोऽप्युमेदसिंहाख्यः ।
श्रीलिमरीविषयेशो मौर्वीशोवाग्जिरामजिःसुनयः॥ ४० ॥

अथ खैरपुरनरेशो यवनकुलोभ्फांजिराधिपो मतिमान् ।
टोंकाधिपो वदान्यो महमदइब्राहिमाभिधो यवनः ॥४१॥

वाराणसीजनाधिपतिः काशीनरेशः, तथा तत्रैतस्वे अत्यर्थं शास्त्रेषु पटुश्चतुरो भवानीसिंह इतिप्रसिद्धो झालावाड़ाधिपो झालावाड़ेश्वरः, ॥ ३५ ॥

टी०—भावलिति । तथा सुनयः सुनीतिकुशलो महमद्भावलसमाख्यको महमद्भावल्नामधेयो भावल्पुरविषयेशो भावल्पुरनृपतिः, अथानन्तरं मतिमान् बुद्धिविशिष्ट ऐह्मद्अलीनामक ऐह्मदलीतिप्रसिद्धः कोटलानरेशः कोटलाधीश्वरः, ॥ ३६ ॥

टी०—श्रीति । तथा श्रीमान् नरसिंहगढ़ेशो नरसिंहगढ़भूपः, तथा सुनीतियुतो नयाभिज्ञः श्रीमान् सिखिमेशः सिखिमदेशाधिपः, तथा विष्णुरो हरिलग्नमानसः श्रीमान् राजगढ़नरेशो राजगढ़भूपतिः, तथा मतिमान् बुद्धिविशिष्टो वंशदाधिपो वंशदादेशाधिपः ॥ ३७ ॥

टी०—श्रीमानिति । तथा श्रीमान् वरियाधिपतिर्वरियादेशाधिपः, तथा वाङ्मयवित् शास्त्रवेत्ता जैशलमीराधिपो जैशलमीरदेशभूपालश्च, तथा कृतधीर्विचक्षणः, अतएव विबुधजनानां पण्डितानां प्रीतिं करोतीति तादृशः श्रीमान् अल्वरभूपो ऽल्वरदेशाधिपः, ॥ ३८ ॥

टी०—श्रीमानबूँदीति । तथा श्रीमान् बूँदिनरेशो बूँदिदेशाधिपः, तथा प्रजायां आहिता नियोजिता धीर्येन तथाविधः श्रीमान् कचविषयाधिपः कचदेशभूपतिः, तथा श्रीमान् करौलिभूपः करौलिदेशाधिपः, तथा शिवस्यांघ्रौ चरणे मनो यस्यैतादृशः श्रीमान् उर्च्छाधिप उर्च्छादेशस्याधिपतिः ॥ ३९ ॥

टी०—श्रीमानिति । तथा श्रीमान् समथरेशः समथरदेशभूपः, तथा श्रीमान् उमेदसिंहाख्य उमेदसिंहनामा रावकोटेशो रावकोटाधिपतिरपि, तथा श्रीमान् लिमरीविषयेशो लिमरीदेशप्रभुः, तथा सुनयः सुनीतियुतः श्रीमान् वाग्जिरामजिरेतदाख्यो मौर्वीशो मौर्विदेशाधिपः, ॥ ४० ॥

टी०—अथेति । अथानन्तरं खैरपुरनरेशः खैरपुरदेशाधिपः, तथा यवनकुलो यवनवंशोत्पन्नो मतिमान् बुद्धिविशिष्टो झंजिराधिपो झंजिरा-

टी०—नाभेति । तथा अनेकविद्याप्रगल्भो बहुशास्त्रज्ञः अतएव कीर्तिरत्नैकपात्रं यश एव रत्नं तदेकपात्रभूतः । उद्देश्यविधेयभावात्त्वलिङ्गवचनभेदो दोषावहः । हीरासिंह एतदाख्याविशिष्टो नाभाधीशो नाभादेशाधिपः, तथा देवपूजायां एकं एकस्थितियुक्तं चित्तं यस्य अतएव शुद्धात्मा श्रीमान् मालखान्सिंहनामा एतदाख्यश्चर्खारीशश्चर्खारीदेशाधिपतिः, ॥ ३१ ॥

टी०—बृहदिति । तथा तुकाजिरावसंज्ञकस्तुकाजिरावनामा बृहद्दिवासभूपतिः महादिवासदेशाधिपतिः, तथा वलाढ्यो वलेनयुक्तो वीरसिंहक एतदाख्यः फरीदकोटभूमिपः फरीदकोटाधिपः, तथा तादृशमेव महाभटाऽनुजेन अतिवीरकनिष्ठभ्रात्रा तथा मुख्यमन्त्रिणा नारायणसिंहाख्येन मुख्यसचिवेन संयुतः सहितः सुरेन्द्रविक्रमाभिधः सुरेन्द्रविक्रमनामा सीरमोरपः सीरमोराधीश्वरः, ॥ ३२ ॥

टी०—कर्पूरेति । तथा सुनयवित्सुनीतिज्ञः अतएव नित्यशः स्ववित्तनिवहैर्निजद्रव्यसमुदायैः स्वां स्वकीयां प्रकृतिं प्रजां सन्तर्पयन् सन्तोषयन् श्रीमान् जगज्जीतसिंहाख्यो जगज्जीतसिंहाभिधेयः कर्पूरस्थलभूपतिः कर्पूरस्थलाधिपः, तादृक् तादृशमेव सुधीर्बुद्धिविशिष्टो मल्हारराव एतदाख्यः स्वल्पदिवासदेशस्य नृपतिः, तथा वहुयशा वहुकीर्तियुक्तः श्रीमान् केसरीसिंहकः केसरीसिंहाभिधेयः "अनुकम्पायां कन्" सीरोईविषयाधिपः सीरोईदेशाधिपतिः, ॥ ३३ ॥

टी०—साह्विति । तथा नीतिकुशलः सुनीतिज्ञः साहुच्छत्रपतिरेतदाख्यः कोलापुराधीश्वरः कोलापुराधिपतिश्च, तथा श्रीमान् भूपेन्द्रनारायण एतन्नामधेयः कूचविहारदेशनृपतिः कूचविहारदेशाधिपः, तथा अजे विष्णौ निरतस्तत्परः राधाकृष्णसमाख्यको राधाकृष्णाभिधेयो ह्लिटीपराधीश्वरो ह्लिटीपरादेशाधिपः, तथा स्वकार्ये निजराज्यकार्ये कुशलः प्रवीणो गङ्गासिंह इतिप्रसिद्धो वीकानिराधीश्वरो वीकानिराधिपतिः, ॥ ३४ ॥

टी०—प्रभ्विति । तथा श्रीमान् प्रभुनारायणसिंह एतदभिधानो-

श्रीमान् विश्वनाथनामक छत्रपुराधिपति, तथा श्रीमान् लोकेन्द्रबाहदुरनामक दातियानरेश, ॥ ३० ॥

भा०—तथा अनेकशास्त्रज्ञ अतएव यशके पात्रभूत श्रीमान् हीरासिंहनामक नाभानरेश, तथा देवपूजातत्पर शुद्धाभिप्राय श्रीमान् मालखान्सिंहनामक चर्खारीनरेश, ॥ ३१ ॥

भा०—तथा तुकाजिरावनामक श्रीमान् बड़ेदिवासदेशाधिपति, तथा बलयुक्त श्रीमान् वीरसिंहनामक फरीदकोटनरेश, तथा बड़े वीर अपने छोटे भाईके और नारायणसिंहनामक मुख्यमन्त्रीके सहित श्रीमान् सुरेन्द्र विक्रमनामक सीरमोरदेशाधिपति, ॥ ३२ ॥

भा०—तथा सुनीतिज्ञ अतएव अपने धनसे प्रजाके पालनकरनेवाले श्रीमान् जगजीतसिंहनामक कपूरस्थलाधिपति, तथा बुद्धिविशिष्ट श्रीमान् मल्हाररावनामक छोटे दिवासदेशके स्वामी, तथा कीर्तियुक्त श्रीमान् केसरीसिंहनामक सीरोई देशाधिप, ॥ ३३ ॥

भा०—तथा नयाभिज्ञ श्रीमान् साहुच्छत्रपतिनामक कोलापुरनरेश, तथा श्रीमान् भूपेन्द्रनारायणनामक कूचविहारदेशनरेश, तथा हरिपरायण श्रीराधाकृष्णनामक हिलटीपरानरेश, तथा स्वराज्यकार्य्यमें निपुण श्रीमान् गङ्गासिंहनामक बीकानिरनरेश, ॥ ३४ ॥

भा०—तथा श्रीमान् प्रभुनारायणसिंहाभिधेय काशीनरेश, तथा शास्त्रज्ञ श्रीमान् भवानीसिंहनामक झालावाड़नरेश, ॥ ३५ ॥

भा०—तथा न्यायशील श्रीमान् महमद्बावल्नामक नव्वावभावलपुर, तथाबुद्धिविशिष्ट श्रीमान् ऐह्मदअलीनामक नव्वावकोटला, ॥ ३६ ॥

भा०—तथा श्रीमान् नरसिंहगढ़ेश, तथा न्यायगुणोपेत श्रीमान् सिखिमनरेश तथा विष्णुभक्त श्रीमान् राजगढ़नरेश, तथा प्रज्ञाविशिष्ट श्रीमान् वंशदानरेश, ॥ ३७ ॥

भा०—तथा श्रीमान् बरियानरेश, तथा शास्त्रवेत्ता श्रीमान् जैशलमीराधिपति, तथा विद्वान् अतएव पण्डितोंके साथ प्रीति करनेवाले श्रीमान् अल्वर नरेश, ॥ ३८ ॥

भा०—तथा श्रीमान् बूँदीनरेश, तथा प्रजाहितार्थ चित्तदेनेवाले श्रीमान् कचदेश स्वामी, तथा श्रीमान् करौलिनरेश, तथा शिवार्चक श्रीमान् उर्च्छानरेश, ॥३९॥

भा०—तथा श्रीमान् समथारनरेश, तथा श्रीमान् उमेदसिंहनामक राव् कोटानरेश, तथा श्रीमान् लिमरीनरेश, तथा नीतिज्ञ वाग्जिरामजिनामक श्रीठाकुरमौर्वि, ॥ ४० ॥

देशस्वामी, तथा यवनकुलोत्पन्नो वदान्यो दातृगुणोपेतो महमदइब्राहिमा-भिधो महमदइब्राहिमनामा टोंकाधिपः टोंकदेशप्रभुः, ॥ ४१ ॥

टी०—ह्यम्विषयेति । अथो ऽनन्तरं सुजनमनसां रञ्जनं एवैकं कार्यं तस्मिन् रतस्तत्परः स्थिरधिषणो दृढबुद्धिः सरल ऋजुस्वभावस्तथा भूमीश्वरेणानुयुक्तः प्रेरित ऐंग्लिश इंग्लिशदेशोत्पन्नो ह्यम् विषयाधिपतिर्हीसम्-देशभूपः, ॥ ४२ ॥

टी०—श्रीनोर्थेति । हीति निश्चयेन ऐंग्लिशक इंग्लिशदेशीयः श्रीमान् नोर्थकोटनामा एतदाख्यो बम्बयीपुराधिपतिर्बम्बयीपुरनियन्ता, तथाऽत्र कुशलश्चतुरः सुनीतिमान् नयाभिज्ञः श्रीमान् यम्स्थहिल् एतदभिधानो मद्रासेशो मद्रासदेशनियन्ता च ॥ ४३ ॥

टी०—श्रीमानिति । तथा नयैकमना नीत्यां एकाग्रचित्तः श्रीमान् रिवाजनामा रिवाजाख्यः पञ्चनदीयाधिपः पञ्चाम्बुदेशनियन्ता, तथा मनस्वी प्रशस्तचेता बर्माधिपो बर्मादेशनियामकः, तथा सुमतिः सद्बुद्धिर्नोट्स एतदभिधान आगराधिप आगरादेशप्रशासिता च, ॥ ४४ ॥

टी०—श्रीबेर्डोति । तथा अनुरञ्जितप्रकृतिरानन्दितप्रजः श्रीमान् बोर्डिलिन् समाह्वो बोर्डिलिन्नामको वङ्गालेशो वङ्गालदेशनियन्ता, तथा श्रीमान् मध्यदेशभूपो मध्यमदेशनियन्ता च, तथा सुनीतिपरो नयज्ञ आसामेश आसामदेशनियामकः, ॥ ४५ ॥

टी०—एत इति । हीति निश्चयेन अनुपमशोभा अतुलितकान्तियुक्ता एते पूर्वोक्ता भूपैंग्लिशका भूपाश्च ऐंग्लिशाश्च ते दन्तिनश्च तुरगाश्च तान् अधिरुह्य स्वगौरवक्रमतो निजमानानुसारेण नतु वर्णनानुसारेण तत्प्रसिद्धं इन्द्रप्रस्थंनामनगरं समाययुराजग्मुः ॥ ४६ ॥

भा०—अनन्तर विष्णुपरायण और शास्त्रतत्त्वके देखनेवाले श्रीमान् व्यङ्कटेशरमणनामक रीवादेशाधिपति, तथा बुद्धिमान् श्रीरणवीरसिंहनामक झीन्ददेशाधिपति, तथा न्यायशील श्रीमान् उदेजिरावनामक धारदेशाधिपति, ॥ २९ ॥

भा०—यह निश्चय है कि श्रीमान् शिवाजिरावनामक इन्दौरदेशेश्वर, तथा

उपरितनगृहप्रतीररूढाः
स्मितवदनाम्बुजदन्तकेसरिण्यः ।
चलगतिकतदीक्षणालिभृङ्गाः
पुरयुवतीसरसीरुहा विरेजुः ॥ ४८ ॥

टी०—उपरीति । उपरितना ये गृहागवाक्षादयस्तएव प्रतीराणि सरस्तटानि तेषु रूढाः स्थिताः तथा स्मितानीषद्धासयुक्तानि यानि वदनाम्बुजानि तेषु दन्ताएव केसरः किञ्जल्को यासां तथा चलगतिकाश्चञ्चलगतिविशिष्टास्तासां ईक्षणालयो नेत्रपङ्क्तयस्ता एव भृङ्गा भ्रमरा यासु तथाविधाः पुरयुवत्य एव सरसीरुहाः कमलिन्यो विरेजुः शुशुभिरे । अत्र समस्तवस्तुविषयं रूपकम् तद्रूपकमभेदोऽयमुपमानोपमेययोः । समस्तवस्तुविषयं श्रौता आरोपिता यदा इतिलक्षणात् ॥

भा०—ऊपरके गृहरूपतटोंमें स्थित तथा ईषद्धासयुक्त मुखरूप कमलोंमें दन्तपङ्क्तिरूपकेसरविशिष्ट तथा चञ्चलनेत्रपङ्क्तिरूपभ्रमरोंसेयुक्त नगरकी युवतिरूपकमलिनियाँ विराजमानहुई ॥ ४८ ॥

अयमजति कनाटदेशभूपः[1]
सरलगतिः सह लार्डकर्जनेन[2] ।
इति पुरयुवतिः परां वयस्या-
मुपदिशतिस्म कराग्रपल्लवेन ॥ ४९ ॥

टी०—अयमिति । सरलगतिः ऋजुस्वभावो ऽयं कनाटदेशभूपो लार्डकर्जनेनसह अजति गच्छति इतीत्थं पुरयुवतिःकाचिन्नगरसुन्दरी परां अन्यां वयस्यां स्वसखीं [ आलीसखीवयस्येत्यमरः ] कराग्रपल्लवेन हस्ताग्रप्रवालेन उपदिशतिस्म दर्शयाम्बभूव ॥

भा०—सरलस्वभाव यह कनाटदेशाधिपति ( ड्यूकआफ्कनाट ) लार्डकर्जन के साथ जाताहै इसतरह किसी नगरसुन्दरीने दूसरी अपनीसखीको हस्ताग्रकिसलयसे दिखलाया ॥ ४९ ॥

1. Duke of Connaught. 2. Lord Curzon.

भा०—अनन्तर श्रीमान् मीरखैरपुर, तथा यवनकुलसम्भव बुद्धिविशिष्ट श्रीमान् नव्वाबझंजिरा, तथा यवनजातीय दातृगुणोपेत श्रीमान् महमदइब्राहिमनामक नव्वाब टोंक, ॥ ४१ ॥

भा०—अनन्तर सत्पुरुषरञ्जक स्थिरबुद्धि तथा सरलस्वभाव तथा सार्वभौमसे प्रेरित इंग्लिशदेशोत्पन्न श्रीमान् रूसदेशाधिपति [ ड्यूक आफएडिन्बरा ] ॥ ४२ ॥

भा०—तथा इंग्लिशदेशीय श्रीमान् नोर्थकोटनामक बम्बईके गवर्नर, तथा चतुर और नीतिज्ञ श्रीमान् यम्पथहिल् नामक मदरासके गवर्नर, ॥ ४३ ॥

भा०—तथा नयाभिज्ञ श्रीमान् रिवाजनामक पञ्जाबके लेफ्टिनेण्ट गवर्नर, तथा शुद्धान्तःकरण श्रीमान् बर्म्माके लेफ्टिनेण्ट गवर्नर, तथा सद्बुद्धि श्रीमान् लाटूसनामक आगराके लेफ्टिनेण्ट गवर्नर, ॥ ४४ ॥

भा०—तथा लोकानन्ददायक श्रीमान् बोर्डिलिन्नामक बङ्गालके लेफ्टिनेण्ट गवर्नर, तथा श्रीमान् मध्यप्रदेशके चीफकमिश्नर तथा नीतिज्ञ श्रीमान् आसामके कमिश्नर, ॥ ४५ ॥

भा०—यह निश्चयहै कि बड़ी शोभाविशिष्ट ये सब पूर्वोक्त भूपश्रेष्ठ और बड़े बड़े अंगरेज लोग हाथी, घोड़ोंमें चढ़कर लिखनेके अनुसार नहीं वरन अपने अपने मानक्रमसे [इज्जत के मुवाफ़िक़] उस इन्द्रप्रस्थनाम नगरको चले ॥ ४६ ॥

**अथ सकलपुरं तदा जनौघै-**
**रधिकृतलोककृतासनाभिसंस्थैः ।**
**स्तिमितसर इवातिरम्यशोभ-**
**मभवदनल्पसरोरुहैर्नितान्तम् ॥ ४७ ॥**

टी०—अथेति । अथानन्तरं तदा तस्मिन्समये अधिकृता अधिकारिणो ये लोकास्तैः कृतान्यासनानि तत्रसंस्था स्थितिर्येषां तथाविधैर्जनौघैर्लोकनिवहैः सकलपुरं समग्रनगरं अनल्पानि यानि सरोरुहाणि कमलानि तैः स्तिमितसरो निश्चलजलाशय इव नितान्तमत्यर्थं अतिरम्यशोभं मनोहरशोभाविशिष्टं अभवत् । अत्रोपमालङ्कारः ॥

भा०—अनन्तर उससमय राजपुरुषोंसे यथास्थानपर बैठायेहुये जनसमुदायोंसे सारानगर बहुत कमलोंसे सुशोभित निश्चलसरोवरकीतरह अत्यन्त शोभायमानहुआ ॥ ४७ ॥

टी०—अवनीति। अवनितलगतौ पृथ्वीं संप्राप्तौ अनन्यत्वेपौ अनुपमशृङ्गारौ अमरौ सुरौ कथं स्तः इति कारणात् तावुभौ दिदृक्षया द्रष्टुमिच्छया ताः प्रसिद्धाश्चारुहासाः कमलदृश इन्दीवरनेत्रा अप्सरसो दिवं स्वर्गमपहाय हित्वा महीं पृथ्वीं निजग्मुः ईयुः किमु ॥

टी०—हृत आत्मनो बोधो येषां तादृशाः सरणिगतजना राजमार्गेस्थिता लोका मृदुवचनानि इङ्गितानि चेष्टादीनि च चञ्चलास्तरला ये आसमन्तान्निमेषा अक्षिपक्ष्मव्यापारास्तैः अयं पुरयुवतिजनो नगराङ्गनालोकोऽस्ति अन्यथा अप्सरःप्रभृतिरिति भावः, नास्ति सुचिरं बहुकालपर्यन्तं दृष्टिं निधाय नियोज्य इतीत्थं अवधार्य निश्चयं चक्रुः । अत्र निश्चयान्तःसन्देहालङ्कारः स सन्देहस्तु भेदोक्तौ तदनुक्तौ च संशय इति लक्षणात् ॥

भा०—पृथ्वीमें प्राप्त अनुपम शृङ्गारविशिष्ट क्या यह देवताहैं? इसहेतुसे इनदोनोंको देखनेकी इच्छासे ईषद्धासोपेत कमलनेत्र विशिष्ट ये अप्सरा स्वर्गको छोड़कर पृथ्वीको आई हैं क्या? ॥ ५१ ॥

भा०—यथार्थ ज्ञानरहित राजमार्गगतलोगोंने मृदुवचन, चेष्टा और चञ्चल नेत्रव्यापारोंसे यह नगरका स्त्रीजनहै अन्यथा नहीं है इसतरह बहुत देरतक दृष्टि को उधर लगाकर निश्चयकिया ॥ ५२ ॥

सुमधुरजनताजयध्वनिं तौ
श्रवणपुटैर्विनयाहितं पिबन्तौ ।
प्रकृतिमतिविशेषप्रेमदृष्ट्या
प्रमदभरौ समपश्यतां तदानीम् ॥ ५३ ॥

टी०—सुमधुरेति। तदानीं तस्मिन्समये विनयाहितं नम्रतया प्रतिपादितं सुमधुरो यो जनताया जयध्वनिस्तं श्रवणपुटैः पिबन्तौ प्रेम्णा आकर्णयन्तौ प्रमदभरौ आनन्दयुक्तौ तौ लार्डकनाटभूपौ अतिविशेषा या प्रेमयुक्ता दृष्टिस्तया प्रकृतिं प्रजां समपश्यतां आलुलोकाते ॥

भा०—उससमय नम्रतासे कियेहुये जनताके मधुर जयशब्दको अपने श्रवण

अथ चलितदृशां पुराङ्गनानां
श्रवणसुखध्वनयः सुनूपुराणाम् ।
अहमहमिकयाग्रगामिनीनां
सपदि हि शुश्रुविरे जनैः समन्तात् ॥ ५० ॥

टी०—अथेति । अथानन्तरं हीति निश्चयेन जनैर्लोकैः समन्तादभितः चलितदृशां तरलदृष्टीनां तथा अहंपूर्वं अहंपूर्वं इत्यहमहमिकातया "मयूरव्यंसकादयश्च एतेनिपात्यन्ते" अग्रगामिनीनां सर्वाग्रगमनशीलानां पुराङ्गनानां नगरयुवतीनां सपदि तत्काले सुनूपुराणां तुलाकोटीनां [ पादाङ्गदं तुलाकोटिर्मञ्जीरोनूपुरो ऽस्त्रियामित्यमरः ] श्रवणेषु सुखाः सुखयुक्ता ध्वनयः शुश्रुविरे "कर्म्मणि लिट्" आकर्णयन्त ॥

भा०—अनन्तर यहनिश्चयहै कि लोगोंमे चञ्चलदृष्टियुक्त तथा मैं पहिले मैं पहिले इसतरह आगेगमनकरनेवाली पुरयुवतियोंके उसीसमय घुंघुरोंके कानोंको सुखदेनेवाले शब्द चारोंतरफसे सुनाईदिये ॥ ५० ॥

## ( युग्मकम् )

अवनितलगतावनन्यवेषौ
कथममराविति तौ दिदृक्षया ताः ।
किमुदिवमपहाय चारुहासाः
कमलदृशोऽप्सरसो महीं निजग्मुः ॥ ५१ ॥
सरणिगतजना हृतात्मबोधा
मृदुवचनेङ्गितचञ्चलानिमेषैः ॥
पुरयुवतिजनोऽयमन्यथाने-
त्यवदधिरे सुचिरं निधाय दृष्टिम् ॥ ५२ ॥

भा०—अनन्तर लार्डकर्जन्‌ने सब राजाओंके साथ १९०३ ईसवीमें संवत्सरके प्रथमदिनमें राजेश्वरके महोत्सवको करके अनन्तर कितनेही राजाओंको सार्वभौमके संमत पदक दिये ॥ ५५ ॥

श्रीमान् बडोदाधिपतिर्महेऽस्मिन्
सय्याजिरावो नयमार्गदक्षः ।
मानप्रदाऽनेकपदात्मशोभो
विराजते स्म क्षितिराजराजौ ॥ ५६ ॥

टी०—श्रीमानिति । नयमार्गे नीतिवर्त्मनि दक्षश्चतुरस्तथा मानप्रदैर्गौरवकारिभिरनेकपदैर्बहुपदकैरात्मशोभा यस्य तथाविधः श्रीमान् सय्याजिराव एतदाख्यो बडोदाधिपतिर्बडोदानृपतिः अस्मिन्महे उत्सवे क्षितिराजानां "राजाहः सखिभ्यष्टच् इति समासान्तष्टच् प्रत्ययः" महीपतीनां राजिः पङ्क्तिस्तस्यां विराजतेस्म ॥

भा०—नीतिमार्गप्रवीण तथा गौरवप्रद बहुतपदकोंसे विराजमान श्रीमान् सय्याजिरावनामक बडोदानरेश इस उत्सवमें राजसभामें सुशोभितथे ॥ ५६ ॥

श्रीमान् जी सी अस् ऐ[1] सरोपनामा प्रतापसिंहाख्यः ।
भारतवर्षैकभटश्चेडरभूपो रराज तत्रैव ॥ ५७ ॥

टी०—भारतवर्षस्य एकभट एकवीरः "जी.सी.अस्.ऐ.सर" इत्येवं उपनाम यस्यैवंविधः श्रीमान् प्रतापसिंहाख्यः प्रतापसिंहाभिधेय ईडरभूप ईडरदेशाधिपतिश्च तत्रैव सभायां रराज शुशुभे ॥

भा०—भारतवर्षके मुख्य वीर "जी.सी.अस् ऐ.सर" उपाधिविशिष्ट श्रीमान् प्रतापसिंहनामक ईडरदेशाधिपतिभी वहीं सभामें विराजमानथे ॥ ५७ ॥

अथ तत्र लार्डकर्जन् सर्वेषां गौरवार्हमभिनन्द्यम् ।
हैदरबादमहीपं जी सी बी[2] पदकमादरात्प्रददौ ॥ ५८ ॥

---

1. G.C.S.I. 2. G.C.B.

पट पातोंमें ग्रहणकरतेहुये हर्षयुक्त वे दोनों लार्डकर्जन्, ड्यूकआफ्कनाट वि-हार प्रेमदृष्टिसे प्रजाको देखनेलगे ॥ ५३ ॥

इति पुरसुपमामवेक्ष्य सद्यः
सकलमहीपजनानुगम्यमानौ ।
अनुपमविभवावुभौ क्षितीन्द्रौ
स्वभवनमाययतुः सहात्मसैन्यैः ॥ ५४ ॥

टी०—इतीति । सकला ये महीपजना राजलोकास्तैरनुगम्यमानौ अनुपमविभवौ अतुलितैश्वर्यौ उभौ क्षितीन्द्रौ लार्डकनाटभूपौ इतीत्थं सद्यः शीघ्रं पुरसुपमां नगरशोभां अवेक्ष्य दृष्ट्वा आत्मसैन्यैर्निजसेनाभिः सह स्वभवनं निजावासगृहं आययतुर्जग्मतुः ॥

भा०—समग्रराजाओंसे अनुगमन कियेजाते ऐश्वर्य्ययुक्त वे दोनों लार्डकर्जन् और ड्यूकआफ्कनाट जल्दीही इसतरह नगरशोभाको देखकर निजसैनिकोंके साथ अपने आवासभवनको प्राप्तहुये ॥ ५४ ॥

अथ शुचिनभनन्दभूमितेऽब्दे
प्रथमदिने सनृपः स लार्डकर्जन्[1] ।
नृपतिभरमहोत्सवं विधाय
तदनुमतं नृपतीन्ददावुपाधिम् ॥ ५५ ॥

टी०—अथेति । अथानन्तरं सनृपो नृपैः सहितः स लार्डकर्जन् शुचिनभनन्दभूमिते अधिकोनविंशतिशतमिते क्रैष्टाब्दे प्रथमदिने संवत्सरस्य प्रथमदिवसे नृपतिभरस्य सार्वभौमस्य महोत्सवं विधाय कृत्वा नृपतीन्कतिपयभूपान् तदनुमतं सार्वभौमसंमतं उपाधिं औपनामिकं पदं ददौ प्रायच्छत् । "अत्र राज्ञां दानग्रहणस्यानधिकारात् संप्रदानत्वाभावान्न चतुर्थी किन्तु कर्तुरीप्सिततमत्वात्कर्मत्वम्" ॥

1. Lord Curzon.

टी०—सीरोईति । स एव लार्डः "सोऽचि लोपे चेत्पादपूरणमिति सोर्लोपः" तत्र महे उत्सवे सत्कार्य्यपरं शुभकर्म्मविधायकं सीरोईत्रिपं यस्यैतद्देशस्य ईशं अधिपतिं तथा एव नाभादेशस्य ईशं स्वामिनं "जी. सी. ऐ. ई" इत्येतत्पदकं सन्मानचिह्नं प्रतिपादयतिस्म व्यतरत् ॥

भा०—उसी लार्डकर्जन्ने उस उत्सवमें शुभकर्म्मविधायक सीरोईनरेशको तथा नाभानरेशको "जी. सी. ऐ. ई" का पदक दिया ॥ ६१ ॥

**श्रीटिहरीमनुजेशं शास्त्रविदां मानदं स्वधर्म्मरतम् ।**
**के[1]सी अस् ऐ पदकं प्रतिपादयतिस्म सत्क्रियार्हमसौ ॥ ६२ ॥**

टी०—श्रीति । असौ लार्डः स्वधर्म्मरतं राजनीतिपरायणं अतएव शास्त्रविदां अधीतागमानां पुरुषाणां मानदं सत्कृतिविधायकं श्रीमन्तं टिहरीमनुजेशं टिहरीनराधिपं सत्क्रियार्हं मानयोग्यं "के. सी. अस्. ऐ" इत्येतत्पदकं सन्मानोपाधिं प्रतिपादयतिस्म समर्पयाञ्चकार ॥

भा०—लार्ड कर्जन्ने स्वराजनीतिमें तत्पर अतएव विद्वान् लोगोंको सन्मानप्रद श्रीमान् टिहरीनरेशको मानयोग्य "के. सी. अस्. ऐ" का पदक दिया ॥ ६२ ॥

**कैमोराधिपतिमसौ पटियालेशानुजं च नीतिपरम् ।**
**श्रीमद्रणवीराख्यं के[2]सी अस् ऐ पदं तथैव ददौ ॥ ६३ ॥**

टी०—कैमोरेति । असौ लार्डः कैमोरस्य देशविशेषस्य अधिपतिं स्वामिनं तथा नीतिपरं सुनयज्ञं श्रीमन्तं रणवीरसिंह एतदाख्यं पटियालेशानुजं पटियालानरेशस्य कनिष्ठभ्रातरं च "के. सी. अस्. ऐ" इत्येतत्पदकं तथैव ददौ प्रायच्छत् ॥

भा०—लार्डने श्रीमान् कैमोरनरेशको तथा सुनीतिज्ञ पटियालानरेशके कनिष्ठभ्राता श्रीमान् रणवीरसिंहको भी उसीतरह "के. सी. अस्. ऐ" का पदकदिया ॥ ६३ ॥

1.-2. K. C. S. I.

टी०—लार्डो यान्महीपतीन् पदकमायच्छन् तान् क्रमशः परिगणयति कविः—अथेति । अथानन्तरं तत्र महोत्सवे लार्डोपाधिविशिष्टः कर्जन् सर्वेषां गौरवार्हं मानयोग्यं अभिनन्द्यं स्तुत्यं हैदराबादस्य महीपं भूपतिं आदरात् "जी.सी.बी" इत्येतत्पदकं उपाधिविशेषं मददौ समर्पितवान् ॥

भा०—अनन्तर उस महोत्सवमें लार्डकर्जनूने संपूर्णलोगोंके आदरणीय तथा प्रशंसनीय निजामहैदराबादको आदरके साथ "जी सी.बी" पदक दिया ॥ ५८ ॥

**कोचीनभूपतिवरं नीतिविदं धर्म्ममार्गविनिविष्टम् ।**
**जी सी अस् ऐ पदकं स लार्डकर्जन् प्रयच्छति स्माशु॥५६॥**

टी०—कोचीनेति । स लार्डकर्जन् आशु शीघ्रं नीतिविदं नयाभिज्ञं तथा धर्म्ममार्गे राजधर्म्मवर्त्मनि विनिविष्टं स्थितं कोचीनस्य देशविशेषस्य भूपतिवरं महीपतिश्रेष्ठं "जी.सी.अस्.ऐ" इत्येतत्पदकं प्रयच्छति स्माददात् ॥

भा०—लार्डकर्जनूने शीघ्र नीतिज्ञ तथा स्वधर्म्मतत्पर कोचीनदेशाधिपतिको "जी. सी. अस. ऐ" का पदक दिया ॥ ५९ ॥

**ट्रैविन्कोरमहीपं निखिलजनानन्ददायकं स मुदा ।**
**जी सी ऐ ई पदकं प्रायच्छद्राजसंसदि क्रमतः ॥ ६० ॥**

टी०—ट्रैविन्निति । स लार्डो राजसंसदि राजसभायां मुदा हर्षेण क्रमतो यथाक्रमेण निखिलजनानन्ददायकं समग्रलोकसुखप्रदं ट्रैविन्कोरस्य महीपं भूपं "जी.सी.ऐ.ई" इत्येतत्पदकं प्रायच्छत् दत्तवान् ॥

भा०—लार्डकर्जनूने राजसभामें हर्षसे क्रमपूर्वक समग्रलोगोंके प्रसन्नकरने वाले ट्रैविन्कोरनरेशको "जी. सी. ऐ. ई" का पदक दिया ॥ ६० ॥

**सीरोहिविषयेशं सत्कार्य्यपरं तथैव नाभेशम् ।**
**जी सी ऐ ई पदकं प्रतिपादयति स्म सैव तत्र महे ॥ ६१ ॥**

---

1. G. C. S. I. 2.-3. G. C. I. E.

अथ पर्य्युदञ्चनवतां राज्ञां लवणादिकस्य चाल्पकरम् ।
सैन्येशवृत्तिवृद्धिं चकार सैवात्र लार्डकः सुनयः ॥ ६७ ॥

टी०—अथेति। अथानन्तरं सुनयः सुनीतिकुशलः स एव लार्डकः कर्जन् "अनुकम्पायां कन् प्रत्ययः" अत्रोत्सवे पर्य्युदञ्चनवतां ऋणयुक्तानां राज्ञां भूपतीनां तथा लवणादिकस्य वस्तुनश्च अल्पकरं न्यूनकरग्रहणं तथा सैन्येशानां सेनापतीनां वृत्तिराजीवनं तद्वृद्धिं चकार व्यधात् ॥

भा०—अनन्तर सुनीतिज्ञ लार्डकर्जन्ने ऋणविशिष्ट राजालोगोंका और लवण का कम महसूल लेना और सेनापतियोंकी आजीवनवृद्धिको किया ॥ ६७ ॥

तौ सार्वभौमसुमहोत्सवमात्मबुद्ध्या
हीत्थं विधाय सह भूपतिभिः शुभेह्नि ।
लोकाननेककुतुकैरनुरञ्जयन्तौ
क्षेमेण जग्मतुरुभौ सदनं स्वकीयम् ॥ ६८ ॥

टी०—ताविति । हीति निश्चयेन अनेककुतुकैर्बहुकुतूहलैर्लोकान् सर्व्वाञ्जनान् अनुरञ्जयन्तौ आनन्दयन्तौ तावुभौ लार्डकनाटभूपौ आत्मबुद्ध्या स्वधिया भूपतिभी राजभिः सह शुभेऽह्नि सुदिवसे सार्व्वभौमस्य राजेश्वरस्य सुमहोत्सवं इत्थममुना पूर्वोक्तप्रकारेण विधाय कृत्वा क्षेमेण कुशलतया स्वकीयं सदनं निजभवनं जग्मतुः अयाताम् ॥

भा०—यह बात प्रसिद्धहै कि अनेकानेक कुतूहलों से समस्तजनों को आनंदित करतेहुये वे दोनों लार्ड कनाटभूप अपनी बुद्धिसे सब राजाओंके साथ सुदिवसमें श्रीसार्व्वभौमका सिंहासनारोहणोत्सवको इस पूर्वोक्त प्रकारसे कर कुशलपूर्वक अपने घरको चलेगये ॥ ६८ ॥

श्रीभूपनाथस्य विधाय चोत्सवं
क्षौणीभृतः प्रीतिभरार्द्रमानसाः ।

---

1. Lord.

चक्तीशं यवनकुलं शाहविजाख्यं सुनीतिवेत्तारम् ।
चर्खारीशं च तथा के[1] सी ऐ ई पदं तदा स ददौ ॥ ६४ ॥

टी०—वक्तीति । तदा तस्मिन्समये स लार्डो यवनकुलं यवनवंशसमुद्भवं सुनीतेर्वेत्तारं ज्ञातारं शाहविजाख्यं शाहविजनामानं वक्तीशं वक्तिदेशाधिपं तथा चर्खारीशं चर्खारीविषयाधिपं च " के. सी. ऐ. ई " इत्येतत्पदकं ददौ प्रयच्छतिस्म ॥

भा०—उससमय लार्ड ने यवनकुलोत्पन्न सुनीतिज्ञ शाहविजनामक वक्तिदेशाधिपतिको तथा चर्खारीनरेशको भी " के.सी.ऐ.ई " का पदक दिया ॥ ६४ ॥

दर्भङ्गाविषयेशं तथा स कृष्णप्रसादकं सचिवम् ।
हैदरवादाधिपतेः के[2] सी ऐ ई पदं मुदा व्यतरत् ॥ ६५ ॥

टी०—दर्भङ्गेति । स लार्डो मुदा हर्षेण दर्भङ्गाविषयेशं दर्भङ्गानरेशं तथा राजोपाधिविशिष्टं कृष्णप्रसादकं एतन्नामानं हैदरवादाधिपतेः सचिवं मन्त्रिणं च " के. सी. ऐ. ई " इत्येतत्पदं उपाधिं व्यतरत् अददात् ॥

भा०—लार्डकर्जनने हर्ष से श्रीमान् दर्भङ्गानरेशको तथा निजामहैदरावाद के मन्त्री राजाकृष्णप्रसादको भी " के. सी. ऐ. ई " का पदक दिया ॥ ६५ ॥

श्रीसोन्वर्पाधिपतिं कृष्णपदाम्भोजमानसं सुनयम् ।
श्रीमच्छाहपुरेशं के[3] सी ऐ ई पदं स तत्रादात् ॥ ६६ ॥

टी०—श्रीति । स लार्डस्तत्रोत्सवे सुनयं सुनीतिज्ञं तथा कृष्णपदाम्भोजे विष्णुचरणसरोरुहे मानसं यस्यैवंविधं श्रीमन्तं सोन्वर्पाधिपतिं सोन्वर्पदेशनरेशं तथा श्रीमन्तं शाहपुरेशं शाहपुरनरेशं " के. सी. ऐ. ई " इत्येतत्पदं अदात् वितताार ॥

भा०—लार्डकर्जनने उस उत्सवमें कृष्णभक्त श्रीमान् सोन्वर्पानरेशको तथा सुनीतिज्ञ श्रीमान् शाहपुराधिपतिको " के. सी. ऐ. ई " का पदक दिया ॥६६॥

1, 2 & 3. K. C. I. E.

लोकानां सुखं यैस्ते विपत्तयो विशेषाः पदातय आसमन्ताञ्जग्मिरे प्राप्य-न्तेस्म । अत्र सर्वेषु पादेषु मिश्रं व्यवहितं अन्तभागयमकम् तथा च वृन्तादुपरिपुष्पमिवावस्थितत्वात् पुष्पयमकम् ॥

टी०—जगती सार्वभौमस्य रक्षागुणं व्यावर्ण्य तस्मा आशिषं ददाति सम्राडिति । हे सम्राट्! जगत्याः पृथिव्याः शरणं परित्राणं तस्यैकहेतुर्मुख्यकारणं अतएव जगत्यां पृथिव्यां ईरित उक्तो निर्दिष्ट इति यावत् यो देशः स्थानविशेषस्तत्र संस्था स्थितिर्यस्याः निर्दिष्टस्थानेषु नियता इति भावः तथा दत्तावधानेन दत्तमानसेन नियमः स्थितिनियमो यस्या एवंविधा तव एव सा वाहिनी सेना च जगतीं पृथ्वीं अजस्रं निरन्तरं संत्रायतां रक्षतु इत्याशीः । त्वं आयुष्मान् भूयाः अतः सर्वा स्थितिर्भविष्यतीत्यभिप्रायः हीति निश्चयेन जगतीलक्षणया तत्स्था प्रजा महीन्द्रं राजेश्वरं इतीत्थं अगदीत् । अत्र सर्वेषु पादेषु मध्यभागगतं यमकम् ॥

भा०—श्रीसार्वभौमसे जगत्‌की सारी विपत्तियां हरीगई तथा पदचारी सेवकों सेभी रहित अतएव बड़े दुःखको प्राप्त शत्रुलोग व्यथितकियेगये और लोगोंको सुख देनेवाले अपने विशिष्टपदचारी सब जगह नियतकियेगये । हे महाराज! जगत्‌की रक्षाकरनेमें नियत तथा सारी पृथ्वीमें निर्दिष्टस्थानोंमें स्थित तथा नियमानुसार स्वकार्य्यमें दत्तचित्त आपकी सेना प्रजाकी निरन्तर रक्षाकरे यह निश्चयहै कि सारी प्रजा सम्राट्‌को इसतरह उद्देश्यकर आशीर्वादपूर्वक कहनेलगी ॥ ७०।७१॥

## ( सपरिवारसार्वभौमार्थे कल्याशिषः )

श्रीभूपनाथ! धिषणा तव नीतिमार्गे
यायात्सदैव निखिलामवनीमवन्ती ।
दृष्ट्वा यदीयविभवानवनीनसङ्घा-
स्तां प्रस्तुवन्ति प्रमदादवनीनयस्थाम् ॥ ७२ ॥

टी०—श्रीति । हे श्रीभूपनाथ ! निखिलां समग्रां अवनीं पृथ्वीं अवन्ती रक्षन्ती तव धिषणा बुद्धिः सदा एव नीतिमार्गे नयवर्त्मनि यायात्

दृष्ट्वा ह्यनेकानि कुतूहलानि ते
स्वं स्वं गृहं जग्मुरथो यथायथम् ॥ ६९ ॥

टी०—श्रीति । हीति निश्चयेन श्रीभूपनाथस्य श्रीमतः सार्वभौमस्योत्सवं 'लार्डकनाटभूपाभ्यां सहैकमत्येति भावः' विधाय कृत्वा अतएव प्रीतिभरेण आर्द्रं मानसं येषां तथाविधास्ते पूर्वोक्ताः क्षौणीभृतो महीपतयः अनेकानि कुतूहलानि कौतुकानि दृष्ट्वा विलोक्य अथो ऽनन्तरं यथायथं यथाक्रमं स्वं स्वं गृहं आत्मीयमात्मीयं भवनं जग्मुरगुः ॥

भा०—यह बात प्रसिद्ध है कि राजेश्वरके उत्सवको लार्डकनाट भूपोंके साथ एकमत होकर करके अतएव प्रसन्नचित्त वे पूर्वोक्त राजालोगभी अनेककौतुकों को देखकर अनन्तर यथाक्रमसे अपने अपने भवनको चलेगये ॥ ६९ ॥

( युग्मकम् )

श्रीसार्व्वभौमेन जगद्विपत्तयः
संजह्रिरे प्राप्तमहाविपत्तयः ।
विद्वेषिणो विव्यथिरे विपत्तय
आजग्मिरे लोकसुखा विपत्तयः ॥ ७० ॥
सम्राट् तवैव जगतीशरणैकहेतुः
सा वाहिनी च जगतीरितदेशसंस्था ।
दत्तावधाननियमा जगतीमजस्रं
संत्रायतां हि जगतीत्यगदीन्महीन्द्रम् ॥ ७१ ॥

टी०—श्रीति । श्रीसार्वभौमेन श्रीमता राजेश्वरेण जगतो विपत्तय आपदः संजह्रिरे अपाह्रियन्त "कर्म्मणि लिट्" श्रीसार्वभौमेनेति सर्वत्रान्वयः । प्राप्तमहाविपत्तयो लब्धापदस्तथा विगताः पत्तयः पदातयो येषां तथाविधा विद्वेषिणः शत्रवो विव्यथिरे व्यथिता बभूवुरित्यर्थः तथा

येन त्वदीयममलं सुयशः पृथिव्या-
मिन्दुप्रभेव नितरां हि विकाशमीयात् ॥ ७४ ॥

टी०—अर्था इति। हे नृपाधिनाथ! सदर्थे सत्प्रयोजने विनिवेशितः संश्रवो नियमो येषां तथाविधास्ते अर्था द्रव्यादयो दैन्यार्दितान् दारिद्र्यपीडिताञ्जनांश्च सुखयन्तु हीति निश्चयेन येन कारणेन त्वदीयं अमलं शुद्धं सुयशः कीर्तिः पृथिव्यां इन्दुप्रभा इव चन्द्रकान्तिरिव नितरामत्यर्थं विकाशं प्रकाशं ईयात् प्राप्यादित्याशीः। अत्रोपमालङ्कारः॥

भा०—हे नृपराज! शुभकार्य्योंमें रक्खेहुये नियमवाले आपके द्रव्यादिक दारिद्र्यसे पीड़ित लोगोंको सुखीकरें जिससे कि आपका शुद्ध यश पृथ्वीपर चन्द्रकान्तिके समान अत्यन्त प्रकाशितहो॥ ७४॥

कामः सकाम! कमनीयगुणस्तवैषोऽ-
न्यायाभिभूतमनसां खलपीडितानाम्।
सत्काव्यबन्धनधियां हृदयानि नीत्या
रक्षाभिरर्थनिवहैश्च सुखीकरोतु॥ ७५॥

टी०—काम इति। हे सकाम! हे साभिलाप! कमनीयगुणः स्पृहणीयसद्गुणस्तव एष कामोऽभिलाषः अन्यायेनाभिभूतं तिरस्कृतं मनो येषां तथाविधानां जनानां हृदयानि नीत्या नयेन तथा खलैर्दुष्टैः पीडितानां जनानां हृदयानि रक्षाभिः तथा सत्काव्यस्य बन्धने निर्माणे धीर्येषां तादृशानां हृदयानि च अर्थनिवहैर्धनसमुदायैः सुखीकरोतु इत्याशीः। अत्र यथासङ्ख्यालङ्कारः, यथासंख्यं क्रमेणैव क्रमिकाणां समन्वय इति लक्षणात्॥

भा०—हे महाराज! अभीप्सितगुणविशिष्ट आपका काम अन्यायसे खिन्नचित्तवाले जनोंके चित्तोंको नीतिसे, तथा दुष्टजनोंसे पीड़ितलोगोंके हृदयोंको रक्षा करनेसे, तथा सत्काव्य निर्म्माण करनेवाले पुरुषोंके हृदयोंको धनप्रदानसे सुखीकरे॥ ७५॥

माप्यादित्याशीः अवन्याः पृथिव्या ये इनाः पतयो राजानस्तेषां सङ्घा निवहा यदीयान् विभवान् यत्संबन्धिनीर्विभूतीर्दृष्ट्वाऽवलोक्य अवनीनयस्थां जगन्नीतिमार्गावतीर्णां तां बुद्धिं प्रमदात् हर्षात् प्रस्तुवन्ति उपतिष्ठन्ते। अत्र पादेषु मिश्रं व्यवहितं मध्यभागगतं यमकम् ॥

भा०—हे महाराज! सारी पृथ्वीकी रक्षामें तत्पर आपकी बुद्धि निरन्तर नीतिमार्गमें बनीरहे राजालोग जिस बुद्धिसम्बन्धी ऐश्वर्य्यको देखकर जगन्नीतिमार्गावतीर्ण उसी बुद्धिकी स्तुति करते हैं ॥ ७२ ॥

धर्म्माकृते ऽर्थनिवहस्तव धर्म्मकृत्या-
मार्य्यैर्व्ययीभवतु धर्म्मरतिप्रसक्तैः।
येन त्वमात्महितकार्य्युभयत्र सौख्य-
बीजं विवर्धय सुधर्म्मफलं नितान्तम् ॥ ७३ ॥

टी०—तत्र धर्म्मार्थकामाः कीदृशा भवितव्या इत्यतः क्रमेणाह। धर्म्मेति। हे धर्म्माकृते! हे धर्म्मस्वरूप! "गुरोरनृत इत्यस्मिन्सूत्रे प्राचामिति योगविभागेन सर्वेषां प्लुतानां विकल्पनात् सन्धिः" तव अर्थनिवहो द्रव्यसंचयः धर्म्मे या रतिः प्रीतिस्तस्यां प्रसक्तैर्दत्तमनस्कैरार्य्यैः श्रेष्ठाधिकारिभिर्धर्म्मकृत्यां सत्कर्म्मणि व्ययीभवतु उत्सर्गयुक्तं जायताम् येन हेतुना त्वं उभयत्र उभयोर्लोकयोर्विषये आत्महितकारि स्वाभिमतदायकं सौख्यबीजं आनन्दबीजयुक्तं सुधर्म्म एव फलं तत् नितान्तमत्यन्तं विवर्धय वृद्धिं प्रापय इत्याशीः ॥

भा०—हे धर्म्मावतार! आपका धननिवह धर्म्ममें प्रीतिकरनेवाले श्रेष्ठ अधिकारीलोगोंसे अच्छे धर्म्मविषयक कार्य्योंमें खर्चहो जिससे कि आप दोनोंलोकोंको भलाई देनेवाले आनन्दबीजयुक्त अच्छे धर्म्मरूप फलको अतिशयकरके बढ़ावें ॥ ७३ ॥

अर्थाः सदर्थविनिवेशितसंश्रवास्ते
दैन्यार्दितांश्च सुखयन्तु नृपाधिनाथ!।

दैन्यखेदपरिभूतचेतसां
दुःखिनां बलविहीनवर्ष्मणाम् ।
पीडनैककृतिनो नराधमान्
नाशयाशु भृशमुग्रशासन ! ॥ ७८ ॥

टी०—दैन्येति । हे उग्रशासन ! हे उत्कटप्रशासितः ! दैन्येन दीनतया यः खेदस्तेन परिभूतं तिरस्कृतं चेतो येषां तथाविधानां दुःखिनां तथा बलेन विहीनं वर्ष्म शरीरं येषां तथाविधानां पुरुषाणां पीडनं दुःखप्रदानं एव एकं कृतं कार्यं येषां तादृशान् नराधमान् भृशमत्यर्थं आशु अविलम्बितं नाशय त्वं जहि इत्याशीः ॥

भा०—हे बृहदाज्ञाविधायक ! आप दारिद्र्यखेदसे विषण्णचित्तवाले अतएव दुःखित तथा बलरहित शरीरवाले लोगोंके पीडनमें तत्पर निकृष्टलोगोंको अत्यन्त जल्दीही नाश करें ॥ ७८ ॥

अयमस्ति परोऽयमस्मदीयो
व्यवहारोऽल्पधियामिवैष नूनम् ।
गिरिवद्गुरुसारचित्तवृत्ते-
स्तव राजेश्वर ! मास्म भूत्कदापि ॥ ७६ ॥

टी०—अयमिति । हे राजेश्वर ! अयं परो ऽन्यो ऽस्ति अयं अस्मदीयो ऽस्ति नूनमिति निश्चयेन अल्पधियां लघुबुद्धीनां पुरुषाणामिव एष व्यवहारो गिरिवत् पर्वतवत् गुरुः सारो बलं यस्या एवंविधा चित्तवृत्तिर्यस्यैवंविधस्य तव कदापि कर्हिचित् मास्मभूत् न भवतु इत्याशीः ॥

भा०—हे राजेश्वर ! यह पर है यह हमाराहै 'यह निश्चयहै कि' अल्पबुद्धिवालोंकी तरह पर्वततुल्य बड़े गुरुत्वविशिष्ट चित्तवृत्तियुक्त आपका यह व्यवहार कभी न हो ॥ ७२ ॥

सहसा सहसा गतात्मखेदा
परिवारस्थितिसौख्यनिर्विशेषा ।

यथा महाभूतगणः क्षितीश्वर !
परार्थ एवात्मभुवोदपादि सः ।
तथैव तन्मूर्त्तियुतो महोदय !
जगद्धितायैव भवान् विराजते ॥ ७६ ॥

टी०—यथेति । हे क्षितीश्वर ! यथा यादृशं आत्मभुवा ब्रह्मणा स प्रसिद्धो महाभूतगणः पृथिव्यादिः परार्थ एव अन्येषां प्रयोजनविशिष्ट एव उदपादि " कर्म्मणि लुङ् " निर्मितेस्म, हे महोदय ! हे महानुभाव ! तथा एव तादृशमेव तन्मूर्त्तियुतस्तेषां पृथिव्यप्तेजोवाय्वाकाशानां मूर्तिमयो भवान् जगद्धिताय लोकक्षेमाय एव विराजते शोभते ॥

भा०—हे महाराज ! जिसतरह ब्रह्माने पृथिव्यादिक महाभूतगण औरोंकेही लिये उत्पन्नकियाहै हे महानुभाव ! उसीतरह उस महाभूत पृथिव्यादिगणकी मूर्तिमय आप जगत्की भलाईके लिये विराजमानहैं ॥ ७६ ॥

पालनेन जगतोऽनुशिक्षया
गोपनेन सकलादुपद्रवात् ।
कृत्यवोढृगुणभूषितो भवान्
सद्गुणाश्रय ! पितेव वर्तताम् ॥ ७७ ॥

टी०—पालनेनेति । हे सद्गुणाश्रय ! जगतः समग्रलोकस्य पालनेन पोषणेन अनुशिक्षया पाठनादिना तथा सकलादशेषादुपद्रवाद्विघ्नाद् गोपनेन रक्षणेन तथा कृत्यस्य कार्य्यस्य ये वोढारस्तेषां ये गुणास्तैर्भूषितो विराजितो भवान् पिता इव जनक इव वर्ततां जायतामित्याशीः ॥

भा०—हे सद्गुणोंके आधार ! जगत्को पालनसे तथा समग्र विघ्नोंसे रक्षाकरने से तथा कियेहुये कार्य्यके जाननेवालों के गुणों से शोभायमान होकर आप पिता की तरह अनुवर्तनकरें ॥ ७७ ॥

तत्पालनादिक्रियाफलं प्राप्नोतु इति भावः इत्याशीः अत्र धान्यहेतुविहितयोरर्थयोः अभेदाध्यवसायात् श्लेषमूलातिशयोक्त्यनुप्राणितो रूपकालङ्कारः तदनुगृहीत उपमालङ्कारः । अत्र हरिणीवृत्तम् रसयुगहयैर्न्सौम्रौस्लौगो यदा हरिणी तदा इति लक्षणात् ॥

भा०—हे राजेश्वर ! समयमें अच्छेस्थानपर स्थापितकर और बराबर नीति रूपजलसे सिञ्चनकरतेहुये आप समयपर फलयुक्त तथा सुगन्धि अथवा सत्त्वभाव युक्त उन प्रजारूप धान्योंसे किसानकी नाईं अपने सत्कार्य्यके फलको प्राप्तकरें॥ ८१॥

वेल्साधिपो ऽपि भवदीयसुतो यवीया-
नेतां धुरं स युवराजपदाभिधेयः ।
वोढुं सहायकतया नरनाथ ! भूयाद्
येनालभस्व निजमातृसमां प्रतिष्ठाम् ॥ ८२ ॥

टी०—वेल्सेति । हे नरनाथ ! युवराजपदाभिधेयो युवराजो यवीयान् अतिशयेन युवावस्थापन्नो भवदीयसुतो भवत्पुत्रः स वेल्साधिपो वेल्सदेशाधिपतिः एतां धुरं राज्यभारं वोढुं धारयितुं सहायकतया सहायकभावेन तव इति शेषः भूयात् येन हेतुना त्वं निजमातृसमां स्वजनन्यनुरूपां प्रतिष्ठां महद्गौरवं आलभस्व प्राप्नुहि इत्याशीः ॥

भा०—हे महाराज ! युवावस्थाको प्राप्त युवराजसंज्ञक आपके पुत्र वेल्साधिपति [ प्रिन्सआफ्वेलस ] इस राज्यभारके धारणकरनेमें सहायक होवें जिससे कि आप अपनी माता श्रीमती महारानीके समान प्रतिष्ठाको पावें ॥ ८२ ॥

पौत्रो ऽपि ते नरपतीन्द्र ! तथैलबर्टः
प्रोतुङ्गवैरिविरसेन्धनजातवेदाः ।
तेजस्विनां बलवतां समितौ रिपूणां
क्षत्रस्य भार्गव इवाविजयी स भूयात् ॥ ८३ ॥

1. Prince of Wales. 2. Albert.

जगती जगतीश ! साधुमार्गा
सुखमास्तां तव नीतिरक्षया ऽसौ ॥ ८० ॥

टी०—सहसेति । हे जगतीश ! हे पृथ्वीपते ! सहसा शीघ्रं गत आत्मनः खेदो यस्या अतएव हसो हसनं तेन सहिता "स्वनहसोर्वा इत्यप् प्रत्ययः" आनन्दोऽपयुक्ता इति भावः तथा परिवारस्य स्वकुटुम्बस्य स्थितिः पालनं तया स्थित्या सौख्यस्य निर्विशेष आधिक्यं यस्याः एवंविधा साधुमार्गा सन्मार्गगामिनी असौ जगती । लक्षणया तत्स्था जना गृह्यन्ते । तव ते नीतिरक्षया नयपूर्वकपरित्राणेन सुखं आस्तां वर्ततामू नीतिं कुर्वन् भवान् चिरं जीवतु इति भावः इत्याशीः । श्लोकार्धादौ यमितत्वात् श्लोकार्धादियमकम् ॥

भा०—हे पृथ्वीनाथ ! शीघ्रही खेदसे रहित अतएव आनन्दयुक्त तथा स्वकुटुम्बके पालनादिसे सौख्यविशेषयुक्त सन्मार्गगामिनी यह प्रजा आपकी नीतिपूर्वक रक्षासे सुखयुक्त रहे ॥ ८० ॥

प्रकृतिकलमाञ्छश्वत्काले क्षितावभिरोप्य च
सततममितो नीत्यम्भोभिश्चिरं प्रतिपालयन् ।
शरदि च फलोपेतान्सौगन्धिकैकसुखाञ्चितान्
कृषक इव भूमीशाधीशाधितिष्ठतु तान्भवान् ॥ ८१ ॥

टी०—प्रकृतीति । हे भूमीशाधीश ! हे राजेश्वर ! शश्वन्निरन्तरं काले ग्रीष्मर्तौ पोषणकाले च क्षितौ पृथिव्यां शुभस्थाने च अभिरोप्य संस्थाप्य च सततं नित्यं नीत्यम्भोभिर्नीतिरूपजलैः अत्र रूपकसमासः नीतय इवाम्भांसि तैः अत्रोपमितसमासः चिरं बहुकालपर्यन्तं प्रतिपालयन्सन् उभयत्र तुल्योऽर्थः शरदि शरत्काले कालविशेषे च फलेन उपेतान् युक्तान् अतएव सौगन्धिकं एवैकसुखं तेनाञ्चितान् मासान् 'धान्यपक्षे सुगन्धत्वं प्रजापक्षे सत्स्वभावत्वं' एवंविधांस्तान् प्रकृतिरूपकलमान् यद्वा प्रकृतीरिव कलमान् इति रूपकोपमितसमासौ । भवान् कृषक इव अधितिष्ठतु

अतएव सब राजाओंसे प्रार्थनायुक्त कियेजाते तथा स्त्री, पुत्र और पौत्रादिकोंसे वृद्धिङ्गत आप आनन्दके साथ शतवर्षपर्य्यन्त जीवितरहें जिससे कि पृथ्वी मङ्गल युक्तरहे ॥ ८४ ॥

**असौ भारद्वाजान्वयजनिरमन्दप्रभुरति-**
**र्मुदोर्वीदत्ताह्वो विबुधबदरीदत्ततनयः ।**
**विरच्यैतत्काव्यं नृपतिपतिवंशादिविषयं**
**प्रभुप्रीत्यै पुष्पस्तवकमिव तत्प्रार्पयति तम् ॥ ८५ ॥**

भा०—श्रीमान्सार्वभौममें बड़ाप्रेमकरनेवाला भारद्वाजकुलोत्पन्न पण्डितबदरीदत्तात्मज यह उर्वीदत्तशर्म्मशास्त्री सार्वभौम सप्तमएडवर्डवंशादिविषयक इस (एडवर्डवंश) महाकाव्यको निर्माणकर सार्वभौमकी प्रसन्नताके लिये उन (श्रीमान्) को पुष्पाञ्जलिकी तरह इस महाकाव्यको अर्पणकरताहै ॥ ८५ ॥

इति अन्वयबोधिन्याख्यया व्याख्यया व्यक्तार्थया भाषया च समलंकृते भारद्वाज कुलोत्पन्नबदरीदत्तात्मजोर्वीदत्तकृतौ एडवर्डवंशे महाकाव्ये राजराजेश्वरस्य सिंहासनारोहणतदुत्सववर्णनन्नाम पञ्चदशः सर्गः १५ ॥



टी०—पौत्र इति । हे नरपतीन्द्र ! तथा तादृशमेव मोत्तुङ्गा अत्युच्छ्रिता ये वैरिगणस्त एव विरसेन्धनानि शुष्ककाष्ठानि तेषु विषये जातवेदाः अग्निसमः स एलबर्ट एतन्नामधेयस्ते तव पौत्रोऽपि तेजस्विनां तथा बलवतां बलोपयुक्तानां रिपूणां समितौ संग्रामे क्षत्रस्य क्षत्रियान्वयस्य भार्गव इव परशुरामो यथा आसमन्तात् विजयी भूयाद् इत्याशीः। अत्रोपमालङ्कारः॥

भा०—हे भूपतीन्द्र ! बड़े उत्कट शत्रुरूप शुष्ककाष्ठोंमें अग्नितुल्य एलबर्टनामक आपका पौत्रभी तेजोविशिष्ट बलयुक्त शत्रुओंको संग्राममें क्षत्रियोंका परशुराम जैसा विजयकरनेवाला होवे ॥ ८३ ॥

लोकालोकनगावधिप्रविशदं राजेन्द्रचूडामणे !
राज्यं स्वं विदधन्महीपनिवहैरभ्यर्थिताङ्घ्रिर्भवान् ।
दारैरात्मजनप्तृभिः प्रतिदिनं वावृध्यमानो मुदा
जीव्याद्वर्षशतं यतो वसुमती निःश्रेयसा वर्तताम् ॥ ८४ ॥

टी०—लोकेति । हे राजेन्द्रचूडामणे ! हे भू०श्रेष्ठशिरोभूषण ! लोकालोकः यत्रैकतो रात्रिरन्यतो दिनं भवतः सूर्यास्तमयाभाववविशिष्ट इत्यर्थः एवंविधो यो नगः पर्वतः स एवावधिर्यस्य अतएव प्रविशदं अतिविस्तीर्णं स्वं निजं राज्यं विदधत् " नाभ्यस्ताच्छतुरिति नुम् न " कुर्वन् अतएव महीपनिवहैः राजसन्दोहैः अभ्यर्थिताङ्घ्रिरभियाचितपादपङ्कजो भवान् दारैर्महिष्या [ अथ पुं भूम्नि दाराः इत्यमरः ] आत्मजनप्तृभिः पुत्रपौत्रैः प्रतिदिनं अहरहः वावृध्यमानोऽतिशयेन वृद्धिं गच्छन् मुदा हर्षेण वर्षशतं शतवर्षपर्यन्तं जीव्याद् इत्याशीः यतो यस्मात्कारणात् भवज्जीवनादित्यर्थः वसुमती पृथ्वी निःश्रेयसा कल्याणोपेता " निश्रेयस शब्दस्य अचतुरेति अकारान्तत्वं निपात्यते " वर्तताम् जायताम् । अत्र शार्दूलविक्रीडितं वृत्तम् । श्रीभुवनाथेत्यारभ्य सर्गान्तपर्यन्तम्—प्रेयः प्रियचाख्यानम् । आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा इति प्रेय आशिषोरलङ्कारयोः संकीर्णत्वात्सङ्करालङ्कारः ॥

भा०—हे महाराजाधिराज ! सूर्यास्तरहित विस्तृत अपने राज्यको करतेहुये